**सङ्घर्षेण वा विनश्यति । वैराज्यं तु प्रकृतिचित्तग्रहणापेक्षि यथास्थितमन्यैर्भुज्यत इत्याचार्याः ।**

**नेति कौटल्यः । पितापुत्रयोर्भ्रात्रोर्वा द्वैराज्यं तुल्ययोगक्षेमममात्यावग्रहं वर्तयेतेति । वैराज्ये तु जीवतः परस्याच्छिद्य 'नैतन्मम' इति मन्यमानः कर्शयत्यपवाहयति, पण्यं वा करोति, विरक्तं वा परित्यज्य अपगच्छतीति ।**

**अन्धश्चलितशास्त्रो वा राजेति । अशास्त्रचक्षुरन्धो यत्किञ्चनकारी दृढाभिनिवेशी परप्रणेयो वा राज्यमन्यायेनोपहन्ति, चलितशास्त्रस्तु यत्र शास्त्राच्चलितमतिर्भवति, शक्यानुनयो भवतीत्याचार्याः ।**

---

अन्योन्यपक्षद्वेषानुरागाभ्यां परस्परपक्षयोर्द्वेषानुरागाभ्यां, परस्परसंघर्षेण वा मिथः स्पर्धया वा, विनश्यति । वैराज्ये गुणमाह—वैराज्यमिति । तत्, प्रकृतिचित्तग्रहणापेक्षि प्रजाचित्तज्ञानानुरोधिप्रवृत्तिकं, यथास्थितं केनाप्यव्याकुलितं, अन्यैः भुज्यते प्रजाभिरनुभूयते । अतश्च वैराज्याद् द्वैराज्यं पापीय इत्याशयः । इत्याचार्याः, मन्यन्त इति शेषः ।

तन्मतं निराकरोति—**नेति कौटल्य** इति । तत्र युक्तिमाह—**पितापुत्रयोरि**त्यादि । अयमर्थः—द्वैराज्यं नाम पितापुत्रयोर्भ्रात्रोर्वा दायभागिनोः परस्परेण विरोधाद् भवति । तच्चाभिन्नयोगक्षेमत्वादमात्यैरेव राज्ययोगक्षेमनिर्वहणसहायभूतैः प्रतिषिध्येतेति नातिगणनीयो द्वैराज्ये दोष इति । वैराज्ये पुनर्महान्तं दोषमाह—**वैराज्ये त्वि**त्यादि । अयमर्थः—विजिगीषुर्जीवन्तं शत्रुमनादृत्य बलापहृततदीयराज्यस्तस्मिन् राज्ये यदि ममकारं न करोति, तदा तद् दण्डकरादिभिः कर्शयति, अन्यत्र नयति, मूल्यग्रहणेन वा यस्मैकस्मैचिद् विक्रीणीते । यद्यात्मनि तद् विरक्तं भवति, तदापहृतसर्वसारं तत् परित्यज्यापैतीति महते दुःखाय स्यादिति ।

राज्यव्यसनस्यावान्तरभेदं चिन्तयति—**अन्ध** इत्यादि । अन्धः अनधीतशास्त्रो राजा, चलितशास्त्रोऽधीताननुरुद्धशास्त्रो राजा, तयोर्मध्ये को वा श्रेयानिति विचार्यत इत्यर्थः । तत्राचार्यमतेन निर्णयमाह—**अशास्त्रे**त्यादि । **अशास्त्रचक्षुः** शास्त्रात्मकचक्षुर्हीनः, अन्धः, यत्किञ्चनकारी असमीक्षापूर्वकारी, **दृढाभिनिवेशी** अनिवार्यदुष्कर्माभिनिवेशः, **परप्रणेयो वा** परबुद्ध्यधीनप्रवृत्तिको वा भवन्, अन्यायेन राज्यम् उपहन्ति । **चलितशास्त्रस्त्व**ति । स तु,

**नेति कौटल्यः। अन्धो राजा शक्यते सहायसम्पदा यत्र तत्र वा पर्यवस्थापयितुमिति। चलितशास्त्रस्तु शास्त्रादन्यथाभिनिविष्टबुद्धिरन्यायेन राज्यमात्मानं चोपहन्तीति।**

**व्याधितो नवो वा राजेति। व्याधितो राजा राज्योपघातममात्यमूलं प्राणाबाधं वा राज्यमूलमवाप्नोति, नवस्तु राजा स्वधर्मानुग्रहपरिहारदानमानकर्मभिः प्रकृतिरञ्जनोपकारैश्चरतीत्याचार्याः।**

---

यत्र विषये, शास्त्रात् चलितमतिर्भवति, तत्र शक्यानुनयः शक्यः सुकरः अनुनयः सान्त्वपूर्वं वारणं यस्य स तथाभूतो भवति। इत्याचार्याः।

तन्मतप्रतिषेधपूर्वं स्वमतमाह **नेति कौटल्य** इत्यादि। अन्धो राजा अमात्यादिसहायगतया प्राज्ञत्वादिगुणसम्पदा यत्र हितायां प्रवृत्तौ पर्यवस्थापयितुमिष्टस्तत्र शक्यः पर्यवस्थापयितुम्। चलितशास्त्रस्तु शास्त्रप्रतिषिद्धकर्माभिनिवेशदोषाद् वारयितुमशक्योऽन्यायेन राज्यं चात्मानं च नाशयतीत्यर्थः।

अन्यं विचारमाह — **व्याधित** इति। व्याधिग्रस्तः, नवो वा अचिराभिषिक्तो वा, राजा, श्रेयानिति विचार्यते। तत्राचार्यमतमाह — **व्याधितो राजेति**। सः, अमात्यमूलं राजभयाभावनिरङ्कुशवृत्तिभिरमात्यैर्जनितं, राज्योपघातम्, अवाप्नोति। राज्यमूलं प्राणाबाधं वा अमात्यादिप्रकृतिषट्ककृतं स्वप्राणनाशं वावाप्नोति। नवो राजा तु, स्वधर्मादिभिः स्वधर्मः शास्त्रोक्तराजधर्मानुष्ठानम् अनुग्रहः स्वकोशोपकारः परिहारः करमोक्षणं दानं कृतकर्मणां भूम्याद्यर्पणं मानः सत्कारः कर्म पूर्तादिप्रवर्तनम् इत्येतैः, प्रकृतिरञ्जनोपकारैः प्रकृत्यनुरागोत्पादनोपायैः, चरति व्यवहरति, इत्याचार्याः।

**नेति कौटल्य** इति। प्रतिषेधे उपपत्तिमाह — **व्याधितो राजेति**। सः, यथाप्रवृत्तं पूर्वप्रवृत्तप्रकारं, राजप्रणिधिं राजव्यापारम्, अनुवर्तयति। नवो राजा तु, इदं राज्यं, मम बलावर्जितं स्वबलोपार्जितम्, इति, मन्यमान इति शेषः, अनवग्रहः निरङ्कुशः, यथेष्टं स्वच्छन्दं, चरति। वा अथवा, सामुत्थायिकैः सामवायिकैः, अवगृहीतः परतन्त्रतां नीतः, राज्योपघातं सामवायिकमूलं, मर्षयति सहते न तु प्रतिकर्तुं शक्नोतीत्यर्थः। प्रकृतिषु विषये, अरूढः नवत्वेनानुपजातस्नेहः, सुखः समुच्छेत्तुं भवति परेणोच्छेत्तुमनायासशक्यो भवति। एवञ्च नवाद् व्याधितस्य श्रेयस्त्वं सिद्धम्। व्याधितविषयेऽपि

**नेति कौटल्यः। व्याधितो राजा यथाप्रवृत्तं राजप्रणिधिमनुवर्तयति। नवस्तु राजा 'बलावार्जितं ममेदं राज्यम्' इति यथेष्टमनवग्रहश्चरति। सामुत्थायिकैरवगृहीतो वा राज्योपघातं मर्षयति। प्रकृतिष्वरूढः सुखः समुच्छेत्तुं भवति। व्याधिते विशेषः — पापरोग्यपापरोगी च।**

**नवेऽप्यभिजातोऽनभिजात इति। दुर्बलोऽभिजातो बलवाननभिजातो राजेति। दुर्बलस्याभिजातस्योपजापं दौर्बल्यापेक्षाः प्रकृतयः कृच्छ्रेणोपगच्छन्ति। बलवतश्चानभिजातस्य बलापेक्षाः सुखेन इत्याचार्याः।**

**नेति कौटल्यः। दुर्बलमभिजातं प्रकृतयः स्वयमुपनमन्ति, जात्यमैश्वर्यप्रकृतिरनुवर्तत इति। बलवतश्चानभिजातस्योपजापं विसंवादयन्ति — अनुरागे सार्वगुण्यम् इति।**

न सामान्यग्रहणं, किन्तु व्याधितविशेषस्यैवापापरोगिलक्षणस्य स्वमते ग्रहणमित्यभिप्रायं मनसि निधाय पापरोगी अपापरोगी चेत्येवं व्याधिते विशेषमाचष्टे — **व्याधिते विशेष** इत्यादि। पापरोगः कुष्ठादिः तद्वान् पापरोगी।

नवेऽप्यवान्तरभेदं विमर्शार्थमाह — **नवेऽपी**त्यादि। विशेष इत्यनुवर्तते। तत्राभिजातो दुर्बलो वा गरीयान् बलवाननभिजातो वेति चिन्तयति — **दुर्बल** इत्यादि। आचार्यमतेन निर्णयमाह — **दुर्बलस्ये**त्यादि। अभिजातस्यापि सतो दुर्बलस्योपजापं प्रकृतयो दौर्बल्यावज्ञया कृच्छ्रादङ्गीकुर्वन्ति, बलवतस्त्वनभिजातस्यापि बलबहुमानात् सुखेनाङ्गीकुर्वन्तीति बलवाननभिजात एव गरीयानित्यभिप्रायः।

आचार्यमतं निषेधन् स्वमतमाह — **नेति कौटल्य** इत्यादि। युक्तिमाह — **दुर्बलमि**ति। बलरहितम्, अभिजातं राजानं, प्रकृतयः, स्वयम् उपनमन्ति अप्रार्थ्यमाना अप्याभिजात्यानुरागादुपगम्याश्रयन्ति। कुतः, जात्यं कुलोत्पन्नम्, ऐश्वर्यप्रकृतिः ऐश्वर्यार्हता, अनुवर्तत इति हेतोरित्यर्थः। बलवतश्च, अनभिजातस्य अजात्यस्य, उपजापं, विसंवादयन्ति नानुवर्तन्ते। कुतः, अनुरागे सार्वगुण्यमिति अनुरागे सति सर्वगुणयोगित्वं प्रतीयत इति हेतोः। इह 'अनुयोगे साद्गुण्यमि'त्यपपाठः। एवञ्च प्रकृतय आभिजात्यानुरागाद-

**प्रयासवधात् सस्यवधो मुष्टिवधात् पापीयान् ।**
**निराजीवत्वादवृष्टिरतिवृष्टित इति ।**
**द्वयोर्द्वयोर्व्यसनयोः प्रकृतीनां बलाबलात् ।**
**पारम्पर्यक्रमेणोक्तं याने स्थाने च कारणम् ॥**

**इति कौटलीयार्थशास्त्रे व्यसनाधिकारिकेऽष्टमाधिकरणे**
द्वितीयोऽध्यायः राजराज्ययोर्व्यसनचिन्ता,
आदितोऽष्टादशशततमः ॥

---

भिजाते सार्वगुण्यं पश्यन्त्यस्तमुपनमन्ति, अनभिजाते त्वनुरागाभावान्नोपनमन्तीत्याशयः । इत्थं राजहेतुकं राज्यव्यसनं व्याख्यातम् ।

परचक्रहेतुकं व्यसनमाह --- **प्रयासवधादिति** । सस्यवधः निष्पन्नसस्यनाशनं, मुष्टिवधात् मुष्टिर्बीजवापः तस्याग्रहणात्, पापीयान्, कुतः, प्रयासवधात् धान्यालाभहेतुत्वसाम्येऽपि उदकपायनपालनादिरूपपरिश्रमनैष्फल्यहेतुत्वेनाधिकेन योगात् ।

दैवकृतं व्यसनमाह — **निराजीवत्वादिति** । इह पापीयानित्यनुवृत्तं स्त्रीलिङ्गतया विपरिणम्यते । अवृष्टिः, अतिवृष्टितः, पापीयसी, कस्मात्, निराजीवत्वात् उदकाधीनाजीवोच्छेदप्रयोजकत्वात् । इतिशब्दो विचारसमाप्तौ ।

एवं निर्णीतो द्विद्विप्रकृतिपरस्परगुरुलघुभावः क्वोपयुज्यत इत्याह — **द्वयोर्द्वयोरित्यादि** । **याने स्थाने च कारणमिति** । शत्रुव्यसनापेक्षया स्वव्यसनस्य लघुत्वं विजिगीषोर्याने प्रयोजकं गुरुत्वं तु स्थाने इत्येवं यानस्थानव्यवस्थापकतया बलाबलमुपयुज्यत इति भावः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां व्यसनाधिकारिकेऽष्टमाधिकरणे
द्वितीयोऽध्यायः राजराज्ययोर्व्यसनचिन्ता,
आदितोऽष्टादशोत्तरशततमः ॥

---

## १२९. प्रक. पुरुषव्यसनवर्गः ।

**अविद्याविनयः पुरुषव्यसनहेतुः । अविनीतो हि व्यसनदोषान् न पश्यति ।**

**तानुपदेक्ष्यामः कोपजस्त्रिवर्गः, कामजश्चतुर्वर्गः ।**

**तयोः कोपो गरीयान् । सर्वत्र हि कोपश्चरति, प्रायशश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते, कामवशाः क्षयव्ययनिमित्तमरिव्याधिभिः इति ।**

**नेति भारद्वाजः । सत्पुरुषाचारः कोपः । वैरयातनमवज्ञावधो**

---

**पुरुषव्यसनवर्ग** इति सूत्रम् । पुरुषसामान्यस्य यानि व्यसनानि व्यसनप्रभवा दोषास्तेषां वर्गोऽभिधीयत इति सूत्रार्थः ।

पुरुषस्य व्यसने कारणमाह —**अविद्याविनय** इति । विद्यासु आन्वीक्षिक्यादिषु विनयः शिक्षा विद्याविनयः तस्याभावः अविद्याविनयः, पुरुषव्यसनहेतुः । हेतुत्वमुपपादयति — **अविनीतो** हीत्यादि । पुरुषस्य व्यसने प्रवृत्तिस्तज्जन्यदोषाज्ञानाद् भवति, अज्ञानं विद्याशिक्षणाभावकृतमित्यर्थः ।

व्यसनदोषान् प्रतिज्ञापूर्वमुपदिशति—**तानुपदेक्ष्याम** इत्यादि । तत्र वाक्पारुष्यमर्थदूषणं दण्डपारुष्यं च त्रिवर्गः, मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः । उभयोः संकलनया च व्यसनदोषाः सप्त सम्पद्यन्त इति बोद्धव्यम् ।

**तयोरिति** । वर्गद्वयोत्पादकयोः कामकोपयोर्मध्ये, कोपो गरीयान्, कोपज इति नयचन्द्रिकापाठे तयोः कामजकोपजयोर्वर्गयोरिति व्याख्येयम् । गरीयस्त्वे हेतुमाह— **सर्वत्र** हीत्यादि । कोपो हि सर्वविषयः कामस्तु स्त्र्यादिप्रतिनियतविषयत्वादसर्वविषय इत्यसार्वत्रिकं काममपेक्ष्य सार्वत्रिकः कोपो गुरुतरः । ततश्च तज्जन्यस्त्रिवर्गोऽपि गुरुतर इति भावः । हेत्वन्तरमाह — **प्रायशश्चे**त्यादि । **क्षयव्ययनिमित्तमरिव्याधिभिरि**त्यादि । कोशदण्डहानिं शरीरपरिहानिं च निमित्तीकृत्य शत्रुभिर्व्याधिभिश्च हताः श्रूयन्त इत्यर्थः । एवञ्चारिव्याधिहननापेक्षया पापीयसः प्रकृतिकोपहननस्य कोपो निमित्तं भवतीत्यतोऽपि हेतोः कोपो गरीयानित्यभिप्रायः ।

**नेति भारद्वाज** इति । कोपः कामश्च न दोष इति द्रोणाचार्यो मन्यत इत्यर्थः । **सत्पुरुषाचार** इत्यादिना तत्र हेतून्यासः । कोपः, सत्पुरुषाचारः सत्पुरुषधर्मो भवति । उपादेयं कोपसाध्यमाह — **वैरयातनं** वैरप्रति-

**भीतमनुष्यता च। नित्यश्च कोपसम्बन्धः पापप्रतिषेधार्थः। कामः सिद्धिलाभः। सान्त्वं त्यागशीलता सम्प्रियभावश्च। नित्यश्च कामेन सम्बन्धः कृतकर्मणः फलोपभोगार्थ इति।**

**नेति कौटल्यः। द्वेष्यता शत्रुवेदनं दुःखासङ्गश्च कोपः। परिभवो द्रव्यनाशः पाटच्चरद्यूतकारलुब्धकगायनवादकैश्चानर्थ्यैः संयोगः कामः।**

**तयोः परिभवाद् द्वेष्यता गरीयसी, परिभूतः स्वैः परैश्चावगृह्यते, द्वेष्यः समुच्छिद्यत इति। द्रव्यनाशाच्छत्रुवेदनं गरीयः, द्रव्य-**

---

क्रिया, अवज्ञा [illegible], भीतमनुष्यता च यमुद्दिश्यापकारकरणाद् भीता मनुष्याः [illegible] कोपान्न निवर्तत इति वाक्यशेषः। पापप्रतिषेधार्थः [illegible] कोपसम्बन्धः कोपस्वीकारः, नित्यश्च अवर्जनीयश्च [illegible]। कामं [illegible] इति। [illegible] सिद्धिलाभः सुखलाभहेतुः। [illegible] — सान्त्वं [illegible]भाषित्वं, त्यागशीलता दानशीलत्वं, सम्प्रियभावश्च [illegible] इति शेषः। कृतस्य प्रयत्नस्य तत्फलानुभवार्थं [illegible] सम्बन्धः पुरुषावर्जनीयश्चेत्याह — **नित्यश्चेत्यादि**। इतिशब्दो हेत्वर्थः।

तदिदं भारद्वाजमतं निषेधति — **नेति कौटल्य इति**। भारद्वाजेन यदुक्तं तन्न, कोपकामौ न गुणौ, किन्तु दोषावेवेत्यर्थः। कोपजान् महानर्थान् आह — **द्वेष्यतेति**। द्वेष्यता सर्वद्वेषविषयता, शत्रुवेदनं शत्रुलाभः, दुःखासङ्गश्च दुःखयोगश्च, कोपः आयुर्घृतमितिवत् कार्यकारणयोरभेदोपचाराद् द्वेष्यतादिनिमित्तं कोप इत्यर्थः। एवं कोपजदोषत्रिवर्गमुक्त्वा कामजं दोषत्रिवर्गमाह — **परीत्यादि**। परिभवः उत्पथप्रवृत्त्यावमानप्राप्तिः, द्रव्यनाशः द्रव्याणामपात्रेष्वतिमात्रं विनियोगान्नाशः, पाटच्चरादिभिः पाटच्चराश्चोराः द्यूतकारा अक्षादिदेविनः लुब्धकाः मृगयासहायाः गायनाः कण्ठगायिनः वादकाः वीणावादिनः एभिः, अनर्थ्यैः अर्थापेतैः, संयोगश्च, कामः परिभवादिरूपः काम इत्यर्थः। एवञ्चानर्थहेतुत्वात् कोपकामयोर्दोषत्वं सिद्धम्।

तयोश्च कोपस्य गरीयस्त्वं यत् प्रागुपन्यस्तं तद् यथोक्तकोपजदोषत्रिवर्गकामजदोषत्रिवर्गान्योन्यगुरुलघुभावविमर्शद्वारेण स्थापयति — **तयोः परिभवादित्यादि**। तयोः कोपजकामजत्रिवर्गयोर्मध्ये, परिभवात् कामजवर्गप्रथमाद्, द्वेष्यता कोपजवर्गप्रथमा, गरीयसी। कुतः, परिभूतः स्वैः परैश्च

**नाशः कोशबाधकः, शत्रुवदनं प्राणबाधकमिति । अनर्थसंयोगाद् दुःखसंयोगो गरीयान्, अनर्थसंयोगो मुहूर्तप्रीतिकरः, दीर्घक्लेशकरो दुःखानामासङ्ग इति । तस्मात् कोपो गरीयान् ।**

**वाक्पारुष्यमर्थदूषणं दण्डपारुष्यमिति । वाक्पारुष्यार्थदूषणयोः वाक्पारुष्यं गरीयः इति विशालाक्षः । परुषमुक्तो हि तेजस्वी तेजसा प्रत्यारोहति, दुरुक्तशल्यं हृदि निखातं तेजस्सन्दीपनमिन्द्रियोपतापि च इति ।**

**नेति कौटल्यः । अर्थपूजा वाक्छल्यमपहन्ति, वृत्तिविलोपस्त्वर्थदूषणम् । अदानमादानं विनाशः परित्यागो वा अर्थस्येत्यर्थदूषणम् ।**

अवगृह्यते विधेयीक्रियते । द्रव्यः, समुच्छिद्यते राज्यात् प्रभ्रश्यते, इति अतः कारणात् । द्रव्यनाशात् कामजवर्गाद्द्वितीयात्, शत्रुवदनं कोपजवर्गाद्द्वितीयं, गरीयः, कुतः, द्रव्यनाशः कोशबाधकः कोशस्यैव केवलस्य बाधको न तु प्राणानाम्, शत्रुवदनं प्राणबाधकम्, इत्यतः कारणात् । अनर्थसंयोगात् कामजवर्गतृतीयात्, दुःखसंयोगः कोपजवर्गतृतीयः, गरीयान्, कुतः, अनर्थसंयोगः, मुहूर्तप्रीतिकरः दुःखसंयोगस्तु न मुहूर्तमपि प्रीतिं जनयति, दुःखानामासङ्गः, दीर्घक्लेशकरः चिरकालक्लेशानामनुबन्धं करोति, इत्यतः । तस्मादिति । कामजत्रिवर्गापेक्षया कोपजत्रिवर्गस्य गरीयस्त्वात्, कोपः, गरीयान् कामापेक्षया ।

'कोपजस्त्रिवर्गः' इति पूर्वमुक्तस्य त्रिवर्गस्य परस्परं गुरुलघुभावं विचारयति — **वाक्पारुष्यमित्यादि** । तत्राचार्यमतं विशालाक्षमतेनाह — **वाक्पारुष्यार्थदूषणयोरित्यादि** । तत्र हेतुमाह — **परुषमुक्तो हीति** । परुषवाक्यैरधिक्षिप्तः, तेजस्वी परिभवासहनस्वभावः, तेजसा, प्रत्यारोहति अधिक्षेप्तारं प्रत्याक्रामति । दुरुक्तशल्यं दुर्वचनरूपं शल्यं, हृदि, निखातं स्थापितं, तेजस्सन्दीपनं तेजसः प्रज्वलनकरम्, इन्द्रियोपतापि च इन्द्रियसन्तापकरं च । इति अतः कारणात् ।

विशालाक्षमतं निराकरोति — **नेति कौटल्य** इति । तत्र हेतुमाह — **अर्थपूजेति** । अर्थेन सत्कारः, वाक्छल्यम् अधिक्षेपवचनप्रयोगकृतं मनश्शल्यम्, अपहन्ति अपोहति । वाक्पूजा तु अर्थदूषणं नापहन्ति तस्य जीविकाविलोपहेतुत्वादित्यभिप्रायेणाह — **वृत्तिविलोपस्त्वर्थदूषणमिति** । **अदानमित्यादिना**-

अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीयः इति पाराशराः । अर्थमूलौ धर्मकामौ, अर्थप्रतिबन्धश्च लोको वर्तते, तस्योपघातो गरीयान् इति ।

नेति कौटल्यः । सुमहताप्यर्थेन न कश्चन शरीरविनाशमिच्छेत् । दण्डपारुष्याच्च तमेव दोषमन्येभ्यः प्राप्नोति । इति कोपजस्त्रिवर्गः ।

कामजस्तु । मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः । तस्य मृगयाद्यूतयोः मृगया गरीयसी इति पिशुनः । स्तेनामित्रव्यालदावप्रस्खलनभयदिङ्मोहाः क्षुत्पिपासे च प्राणाबाधस्तस्याम् । द्यूते तु जितमेवाक्षविदुषा यथा जयत्सेनदुर्योधनाभ्याम् इति ।

---

र्थदूषणस्य प्रकाराणां प्रदर्शनं तेषु चतुर्ष्वपि वृत्तिविलोपहेतुत्वस्य स्पष्टत्वबोधनार्थम् । अदानं कृतकर्मवेतनानर्पणम्, आदानं दण्डाद्यात्मना धनग्रहणं, विनाशो देशपीडनम्, अर्थस्य परित्यागः रक्षणीयस्यारक्षणम्, इति चतुष्प्रकारमिति शेषः, अर्थदूषणम् । तथाचार्थदूषणमेव गरीय इत्यभिप्रायः ।

अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीय इति पाराशरमतमाह — **अर्थदूषणे**त्यादि । तत्र युक्तिमाह — **अर्थमूलौ धर्मकामा**वित्यादि । धर्मकामयोरर्थसाध्यतया लोकवर्तनस्यार्थान्वयव्यतिरेकानुविधायित्वादर्थस्य प्राधान्यात् तस्योपघातो दण्डपारुष्याद् गुरुतर इत्यर्थः ।

तन्निराचष्टे — **नेति कौटल्य** इत्यादि । अतिप्रभूतेनाप्यर्थलाभेन कस्याप्यनभिलषितं प्रत्युत तावताप्यर्थोपघातेन सर्वैः परिजिहीर्षितं शरीरविनाशं यस्माद् दण्डपारुष्यं प्रयोजयति, तस्मात् तदेवार्थदूषणापेक्षया पापीय इत्यभिप्रायः । **इति कोपजस्त्रिवर्ग** इति । इत्थं कोपजस्य त्रिवर्गस्यान्योन्यगुरुलघुभावो निरूपित इत्यर्थः ।

कामजस्य चतुर्वर्गस्य त्रीणि द्विकानि कृत्वा तेषामेकैकस्यावयवयोरन्योन्यापेक्षं गुरुलघुभावं निर्णेष्यन् वर्गिणो निर्दिशति — **कामजस्तु मृगये**त्यादि । आद्यद्विके गरीयस्त्वस्य निर्णयं नारदमतेनाह — **तस्ये**त्यादि । तत्र तदीयां युक्तिमाह — **स्तेने**त्यादि । स्तेनाश्चोराः अमित्राः शत्रवः व्यालाः दुष्टमृगाः दावो वनाग्निः प्रस्खलनं गत्याद्यनवधानम् एतेभ्यो भयानि अपायशङ्काः दिङ्मोहः दिग्भ्रमः इत्येते, क्षुत्पिपासे च बुभुक्षोदन्ये च, प्राणाबाधः

नेति कौटल्यः। तयोरप्यन्यतरपराजयोऽस्तीति नलयुधिष्ठिराभ्यां व्याख्यातं, तदेव विजितद्रव्यमामिषं, वैरबन्धश्च, सतोऽर्थस्य विप्रतिपत्तिरसतश्चार्जनमप्रतिभुक्तनाशो, मूत्रपुरीषधारणबुभुक्षादिभिश्च व्याधिलाभ इति द्यूतदोषः। मृगयायां तु व्यायामः श्लेष्मपित्तमेदःस्वेदनाशश्चले स्थिरे च काये लक्षपरिचयः कोपभयस्थानेहितेषु च मृगाणां चित्तज्ञानमनित्ययानं चेति।

द्यूतस्त्रीव्यसनयोः कैतवव्यसनम् इति कौणपदन्तः। सातत्येन हि निशि प्रदीपे मातरि च मृतायां दीव्यत्येव कितवः, कृच्छ्रे च प्रतिपृष्टः कुप्यति। स्त्रीव्यसनेषु तु स्नानप्रतिकर्मभोजनभूमिषु

---

कार्यकारणयोरभेदोपचारात् प्राणपीडाहिंसेव इत्यर्थः, तस्यां मृगयायाम्। द्यूते तु, अक्षविदुषा जितमेव अक्षदेवनविचक्षणो जयमेव लभते। तत्रोदाहरणमाह — **यथेत्यादि**। इतिशब्दो हेतौ।

पिशुनमतं निषेधति — **नेति कौटल्य इति**। मृगयाद्यूतयोर्मध्ये द्यूतस्य मृगयाया इव दोषमाह — **तयोरपीत्यादि**। अन्यतरस्य जयवत् पराजयोऽपि नियतः, जितं द्रव्यं सर्वेषां भोग्यं भवति, पराजितस्य जेतरि विद्वेषकरणं, सतो विशुद्धागमस्य पूर्वार्जितस्य द्रव्यस्यास्थानविनियोगः, असतोऽशुद्धागमस्यार्थस्य द्यूतोपायेनाधिगमनम्, अभुक्तस्यैव द्यूतार्जितस्य पुनर्द्यूते हारणा, मूत्रपुरीषधारणबुभुक्षापिपासाभिर्व्याधिप्राप्तिश्चेत्येतान् द्यूते दोषानभिधाय मृगयायां गुणानाह — **मृगयायां त्वित्यादि**। व्यायामः कायायासकरणम्। श्लेष्मपित्तमेदस्स्वेदनाशः श्लेष्मपित्तदोषनाशः मांसानुपचयः आयासे महत्यप्यस्विद्यद्गात्रत्वं च, चलस्य स्थिरस्य च शरीरस्य लक्षीकरणशिक्षणं, कोपनिमित्तचेष्टितेषु भयनिमित्तचेष्टितेषु च मृगाणां भावज्ञानं, मृगयार्थस्य यानस्य वर्षादिषु कर्तुमशक्यतया कादाचित्कानुष्ठानविषयत्वं न पुनर्द्यूतस्येव नित्यानुष्ठानविषयत्वमित्येते द्यूतव्यावृत्ता गुणा मृगयायां सन्ति। अतश्च द्यूतमेव पापीय इत्यभिप्रायः।

द्यूतस्त्रीव्यसनयोर्बलाबलचिन्तायां द्यूतव्यसनं गरीय इति भीष्ममतमाह — **द्यूतेत्यादि**। तदीयं तत्र हेतुमाह — **सातत्येन हीत्यादि**। द्यूतकारो हि सूर्यप्रकाशाभावेऽपि रात्रौ दीपप्रकाशमुपजीव्याविच्छेदेन दीव्यति, मृताया मातुरौर्ध्वदैहिकमप्यात्मकार्यं परिहृत्य दीव्यति, कार्यसङ्कटे तन्निवारणोपायं पृष्टः

**भवत्येव धर्मार्थपरिप्रश्नः । शक्या च स्त्री राजहिते नियोक्तुम् । उपांशुदण्डेन व्याधिना वा व्यावर्तयितुमवस्रावयितुं वा इति ।**

**नेति कौटल्यः । सप्रत्यादेयं द्यूतं, निष्प्रत्यादेयं स्त्रीव्यसनम् । अदर्शनं, कार्यनिर्वेदः, कालातिपातनादनर्थधर्मलोपश्च, तन्त्रदौर्बल्यं, पानानुबन्धश्चेति ।**

**स्त्रीपानव्यसनयोः स्त्रीव्यसनम् इति वातव्याधिः । स्त्रीषु हि बालिश्यमनेकविधं निशान्तप्रणिधौ व्याख्यातम् । पाने तु शब्दादीनामिन्द्रियार्थानामुपभोगः प्रीतिदानं परिजनपूजनं कर्मश्रमवधश्च इति ।**

कुप्यतीत्येते द्यूते दोषाः । स्त्रीव्यसने तु दोषसत्त्वेऽपि विशेषमाह— **स्त्रीव्यसनेष्वित्यादि** । स्त्रीव्यसनी तु स्नानभूमौ प्रसाधनभूमौ भोजनभूमौ च धर्ममर्थं वा प्रष्टुं बोधयितुं च शक्यः, यत्स्त्रीव्यसनी राजा सा राजहितायां वृत्ताववस्थापयितुममात्यादिभिः शक्या, अयथावनाशक्यत्वे उपांशुदण्डेन नाशयितुं शक्या, नाशनाशक्यत्वे रसदानादिनिमित्तव्याधियोगेनान्यत्र नेतुं वा शक्येत्येते दोषपरिहारमार्गाः सम्भवन्तीत्याशयः ।

कौणपदन्तमतमिदं निराचष्टे— **नेति कौटल्य इति** । तत्र हेतुकथनं— **सप्रत्यादेयमित्यादिना** । द्यूते हारितं यत् तत् पुनर्द्यूतद्वारेण प्रत्यादातुं शक्यमिति प्रत्यादेयसहितं द्यूतम्, अतथाभूतं तु स्त्रीव्यसनम् । किञ्च स्त्रीव्यसनिनो राज्ञो दर्शनमेव तावदमात्यैर्न लभ्यते, अमात्यादीनां राजादर्शननिमित्तः कार्यानुष्ठानेष्वनुत्साहः, कालातिपातनादनर्थप्राप्तिसहिता धर्महानिश्च, तन्त्रस्य स्वराज्यचिन्तनलक्षणस्यानूर्जितत्वं, स्त्रीरतिसहकारिणो मद्यपानस्यानुवर्तनमित्येतैर्दोषैः स्त्रीव्यसनमेव पापीय इत्यभिप्रायः ।

स्त्रीव्यसनपानव्यसनयोर्बलाबलविचारे स्त्रीव्यसनं गरीय इत्युद्धवमतमाह— **स्त्रीपानव्यसनयोरित्यादि** । तत्र तदीयं हेतुमाह— **स्त्रीषु ही**त्यादि । तासु हि बहुप्रकारं मौर्ख्यं भर्तृवधार्थविषमिश्रलाजदानादिलक्षणं प्रथमाधिकरणीयनिशान्तप्रणिधिप्रकरणोदाहृतं सम्भावितं, न तु पाने । किञ्च पाने चित्तैकाग्र्यसम्पत्त्या शब्दादीनामिन्द्रियार्थानामेकरस्यानुभवः, प्रीतिदानं, परिजनसत्कारः, कर्मायासकरणनिमित्ताङ्गावसादादिप्रशमनं च भवतीत्येतस्माद्धेतोरित्यर्थः ।

नेति कौटल्यः। स्त्रीव्यसने भवत्यपत्योत्पत्तिरात्मरक्षणं चान्तर्दारेषु, विपर्ययो वा बाह्येषु, अगम्येषु सर्वोच्छित्तिः। तदुभयं पानव्यसने। पानसम्पत् — संज्ञानाशः अनुन्मत्तस्योन्मत्तत्वमप्रेतस्य प्रेतत्वं कौपीनदर्शनं श्रुतप्रज्ञाप्राणवित्तमित्रहानिः सद्भिर्वियोगोऽनर्थ्यसंयोगस्तन्त्रीगीतनैपुण्येषु चार्थघ्नेषु प्रसङ्ग इति।

द्यूतमद्ययोः द्यूतमेकेषाम्। पणनिमित्तो जयः पराजयो वा प्राणिषु निश्चेतनेषु वा पक्षद्वैधेन प्रकृतिकोपं करोति, विशेषतश्च सङ्घानां

---

इदं मतं प्रतिषेधति — नेति कौटल्य इति। तत्र हेतुमाह — **स्त्रीव्यसन** इत्यादि। तस्मिन्, अन्तर्दारेषु यथाविधि परिणीतासु पतिव्रतासु, अपत्योत्पत्तिः, आत्मरक्षणं च भवति। वा अन्तर्दारासम्भवपक्षे, बाह्येषु गणिकादिषु, प्रसक्तस्येति शेषः, विपर्ययः अपत्योत्पत्त्यात्मरक्षणयोरभावः। अगम्येषु कुलस्त्रीजनेषु, सर्वोच्छेदः प्राणपर्यन्तसर्वस्वनाशः। एवं तावद् गणिकादिप्रसङ्गः कुलवधूप्रसङ्गः इति दोषद्वयं स्त्रीव्यसनेऽभिहितम्। तच्च तदतिरिक्ताश्च बहवो दोषाः पानव्यसने भवन्तीत्याह — **तदुभयमित्यादि**। पानसम्पत् पानकार्याणां समृद्धिः। तां विवृणोति — **संज्ञानाश** इति। संज्ञानाशो बुद्धिलोपः। अनुन्मत्तस्य उन्मत्तभावः चित्तविभ्रमहीनस्यैव विभ्रान्तचित्तत्वम्। अप्रेतस्य प्रेतत्वं जीवत एव शवसाधारणं निश्चेष्टत्वं, कौपीनदर्शनं गुह्यागोपनम्। श्रुतादिहानिः श्रुतं शास्त्रश्रवणं प्रज्ञा श्रुतजन्या मतिः प्राणो बलं वित्तमित्रे प्रसिद्धे तेषां हानिः। सद्भिर्वियोगः सत्संसर्गाभावः। अनर्थ्यसंयोगः गायनवादकादिसंसर्गः। तन्त्रीगीतनैपुण्येषु चार्थघ्नेषु प्रसङ्गः अर्थोपघातिषु वीणागानकौशलेष्वत्यासङ्गः। एवञ्च स्त्रीव्यसनाद् मद्यव्यसनं गरीय इति व्यवस्थितम्।

केचिदाचार्या मन्यन्ते — द्यूतमद्यव्यसनयोर्द्यूतव्यसनं गरीय इति। तन्मतं सयुक्तिकं दर्शयति — **द्यूतमद्ययोरित्यादि**। एकेषामित्येतदनन्तरं गरीयस्त्वेनेष्टमिति शेषः। तत्र द्यूतदोषबाहुल्यं हेतुमाह — **पणनिमित्त** इति। पणो ग्लहद्रव्यं तन्निमित्तः, जयः पराजयो वा पणलाभप्रयोजनो जयः पणहानिप्रयोजनः पराजय इत्यर्थः, प्राणिषु निश्चेतनेषु वा प्राणिद्यूते प्राणिविषयः अप्राणिद्यूते अप्राणिविषयः, पक्षद्वैधेन जेतृपक्षो जितपक्ष इति परस्परविरुद्धपक्षद्वयोत्थापनेन, प्रकृतिकोपं, करोति। विशेषतश्च, सङ्घानां, सङ्घधर्मिणां च

**सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः, तन्निमित्तो विनाश इति । असत्प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यादिति ॥**

**असतां प्रग्रहः कामः कोपश्चावग्रहः सताम् ।**
**व्यसनं दोषबाहुल्यादत्यन्तमुभयं मतम् ॥**
**तस्मात् कोपं च कामं च व्यसनारम्भमात्मवान् ।**
**परित्यजेन्मूलहरं वृद्धसेवी जितेन्द्रियः ॥**

इति कौटलीयार्थशास्त्रे व्यसनाधिकारिकेऽष्टमाधिकरणे
तृतीयोऽध्यायः पुरुषव्यसनवर्गः
आदित एकोनविंशत्यधिकशततमः

सङ्घधर्मिणां एकमत्यं गतानां च राजकुलानां, द्यूतनिमित्तो भेदः ऐकमत्यभङ्गः । तन्निमित्तः भेदनिमित्तः विनाशः जायत इति शेषः । इति हेतोः । अन्येषामिति । अपरेषामाचार्याणाम्, असत्प्रग्रहः असतां प्रग्रहः पूजा गर्भितत्वेन मध्ये, पापिष्ठतमः, व्यसनानां सर्वेषां व्यसनानां मध्ये, कुतः, तन्त्रदौर्बल्यात् स्वराष्ट्रविरागापत्तेः । इति एव मतमिति शेषः । 'अन्येषाम्' इति पाठो मूलमातृकायां न दृश्यते । किन्तु नयचन्द्रिकायामुपात्तत्वात् प्रकृतसंगतत्वाच्च स आहृतः । मतद्वयमपीदमप्रतिषिद्धत्वात् कौटल्यस्यापीष्टं द्रष्टव्यम् ॥

प्रपञ्चितमर्थं संक्षिप्याह— असतामिति । रागद्वेषादिकादीनामसत्पुरुषाणां, प्रग्रहः पूजाहेतुः, कामः, कोपश्च, सताम्, अवग्रहः निग्रहहेतुः । उभयम् उक्तं द्विकम्, अत्यन्तं सर्वथा, व्यसनम् मतं व्यसनत्वेनाभिमतं, कुतः, दोषबाहुल्यात् पूर्वोक्ताद् दोषप्राचुर्यात् ॥

तस्मादिति । तस्मात् आत्यन्तिकव्यसनताया सिद्धत्वात्, व्यसनारम्भं दुःखजनकं, मूलहरं सर्वस्वनाशकरं, कोपं च, कामं च, परित्यजेत्, कः, आत्मवान् मनस्वी धीर इत्यर्थः । स कीदृशः, वृद्धसेवी जितेन्द्रियः वृद्धसंयोगद्वारेण वशीकृतमनस्क इत्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां व्यसनाधिकारिके
अष्टमाधिकरणे तृतीयोऽध्यायः पुरुषव्यसनवर्गः,
आदित एकोनविंशत्यधिकशततमः ॥

---

## १३०—१३२. प्रक. पीडनवर्गः, स्तम्भनवर्गः, कोशसङ्गवर्गश्च ।

**दैवपीडनमग्निरुदकं व्याधिर्दुर्भिक्षं मरक इति ।**

**अग्न्युदकयोरग्निपीडनमप्रतिकार्यं सर्वदाहि च, शक्योपगमनं तार्याबाधमुदकपीडनमित्याचार्याः ।**

**नेति कौटल्यः । अग्निर्ग्राममर्धग्रामं वा दहति, उदकवेगस्तु ग्रामशतप्रवाहीति ।**

**व्याधिदुर्भिक्षयोर्व्याधिः प्रेतव्याधितोपसृष्टपरिचारकव्यायामोपरोधेन कर्माण्युपहन्ति, दुर्भिक्षं पुनरकर्मोपघाति हिरण्यपशुकरदायि च इत्याचार्याः ।**

**नेति कौटल्यः । एकदेशपीडनो व्याधिः शक्यप्रतीकारश्च, सर्वदेशपीडनं दुर्भिक्षं प्राणिनामजीवनायेति ।**

**पीडनवर्ग** इति सूत्रम् । पीडनानां दैवमानुषभेदभिन्नानां, वर्गः अभिधीयत इति सूत्रार्थः । गुणप्रातिलोम्य-गुणाभाव-प्रदोष-प्रसङ्ग-पीडात्मकेषु पञ्चसु व्यसनेषु प्रसङ्गपर्यन्तानि निरूपितानि । पीडारूपं तु सम्प्रति निरूप्यते ।

तत्र दैवपीडनं तावत् पञ्चधा विभजते — **दैवपीडनमग्निरित्यादि** ।

तेषां द्वयोर्द्वयोः क्रमेण परस्परगुरुलघुभावं निर्णेष्यन् प्रथमयोरग्निपीडनोदकपीडनयोस्तन्निर्णयमाचार्यमतेनाह — **अग्न्युदकयोरित्यादि** । तयोर्मध्ये अग्निपीडनम् अग्नेः स्पृष्टमप्यशक्यतया प्रतिकर्तुमशक्यं सर्वदहनशीलं च भवति, उदकपीडनं तु शक्योपगमनं नौकादिप्रतिकार्याबाधं चेत्यतोऽग्निपीडनमुदकपीडनाद् गरीय इत्याचार्या मन्यन्त इत्यर्थः ।

तन्मतं निषेधति — **नेति कौटल्य** इति । निषेधसूचित उदकपीडनस्य गरीयस्त्वे स्वमते साधकमाह — **अग्निर्ग्राममित्यादि** । ग्रामशतप्रवाही ग्रामशतमाक्रम्यापहर्तुं शक्त इत्यर्थः ।

व्याधिदुर्भिक्षयोर्व्याधिगरीयस्त्वमाचार्यमतेनाह — **व्याधीत्यादि** । प्रेतादिव्यायामोपरोधेन प्रेतानां व्याधितानाम् उपसृष्टपरिचारकाणां रोगिपरिचारकाणां च कृष्याद्यायासोपहननेन । अकर्मोपघाति कर्मानुपघातकम् । हिरण्यपशुकरदायि हिरण्यरूपं पशुरूपं च करं धान्यकराभावेऽपि दत्त इत्यर्थः ।

आचार्योक्तहेतुविघटनभङ्ग्या दुर्भिक्षगरीयस्त्वं स्वाभिमतं समर्थयति — **नेति कौटल्य** इत्यादि । एकदेशपीडनः एकदेशमात्रवर्तित्वात् । सर्वदेशपीडनं कृत्स्नजनपदव्यापित्वात् ।

**तेन मरको व्याख्यातः ।**

**क्षुद्रकमुख्यक्षययोः क्षुद्रकक्षयः कर्मणामयोगक्षेमं करोति, मुख्यक्षयः कर्मानुष्ठानोपरोधधर्मा इत्याचार्याः ।**

**नेति कौटल्यः । शक्यः क्षुद्रकक्षयः प्रतिसन्धातुं बाहुल्यात् क्षुद्रकाणां, न मुख्यक्षयः । सहस्रेषु हि मुख्यो भवत्येको न वा सत्त्वप्रज्ञाधिक्यादाश्रयत्वात् क्षुद्रकाणामिति ।**

**स्वचक्रपरचक्रयोः स्वचक्रमतिमात्राभ्यां दण्डकराभ्यां पीडयत्यशक्यं च वारयितुं, परचक्रं तु शक्यं प्रतियोद्धुमपसारेण सन्धिना वा मोक्षयितुम् इत्याचार्याः ।**

---

तेनेति । प्राणिप्राणहरणलक्षणेन दुर्भिक्षोक्तन्यायेन, मरको मारिः, व्याख्यातः, बहुतरप्राणिमरणहेतुतया दुर्भिक्षादपि स गरीयानित्यर्थः ।

अथ पीडाया विषयभेदनिमित्ते गौरवचिन्तने आचार्यमतमाह—**क्षुद्रकमुख्यक्षययोरि**ति । क्षुद्रकाः कर्मणां कर्तारः मुख्याः प्रधानाः कर्मणां कारयितारः तेषां क्षययोर्मध्ये, क्षुद्रकक्षयः, कर्मणाम्, अयोगक्षेमं करोति अप्रवृत्तप्रवृत्तिं प्रवृत्तरक्षणं च न निष्पादयति, मुख्यक्षयः, कर्मानुष्ठानोपरोधधर्मा कर्मानुष्ठानविघातमात्रहेतुः न तु कर्मकराणां कारयितृनिरपेक्षां स्वतन्त्रप्रवृत्तिं विहन्तीत्यर्थः । तथाच कारयितृक्षयात् कर्तृक्षयो गरीयानित्यभिप्रायः ।

तन्निराकरोति—**नेति कौटल्य** इति । क्षुद्रकक्षयः प्रतिसन्धातुं क्षुद्रकान्तरप्रतिनिधानेन समाधातुं, शक्यः, कुतः, क्षुद्रकाणां, बाहुल्यात् बहुत्वेन सुलभत्वात । न मुख्यक्षयः मुख्यक्षयस्तु न प्रतिसन्धातुं शक्यः । तत्र हेतुमाह—**सहस्रेषु** हीति । बहुषु पुरुषाणां सहस्रेषु मध्ये, मुख्य एको भवति न वा अतिदुर्लभ इत्यर्थः । स कथम्भूतः, सत्त्वप्रज्ञाधिक्यादाश्रयत्वात् क्षुद्रकाणां सत्त्वप्रज्ञातिशययोगनिमित्तां क्षुद्रकाश्रयत्वयोग्यतां प्राप्य स्थित इत्यर्थः । इतिशब्दो वाक्यार्थहेतुत्वे ।

इत्थं दैवपीडनं निरूप्य मानुषपीडनं निरूपयति—**स्वचक्रपरचक्रयोरि**ति । तयोर्मध्ये, स्वचक्रं स्वबलम्, अतिमात्राभ्यां सीमातिगाभ्यां, दण्डकराभ्यां पीडयति, अशक्यं च वारयितुं स्वामिप्रकृत्युत्पादितां पीडां कः प्रतिसमादधीतेत्यर्थः । 'अशक्यं वारयितुमि'त्यस्य स्थाने 'अशक्यप्रकृतिश्च' इति नयचन्द्रिकायाः पाठः । अप्रतिसमाधेयराजप्रकृतिरूपं च स्वचक्रं भवतीति

**नेति कौटल्यः । स्वचक्रपीडनं प्रकृतिपुरुषमुख्योपग्रहविघाताभ्यां शक्यते वारयितुम्, एकदेशं वा पीडयति । सर्वदेशपीडनं तु परचक्रं विलोपघातदाहविध्वंसनापवाहनैः पीडयतीति ।**

**प्रकृतिराजविवादयोः प्रकृतिविवादः प्रकृतीनां भेदकः पराभियोगानावहति । राजविवादस्तु प्रकृतीनां द्विगुणभक्तवेतनपरिहारकरो भवतीत्याचार्याः ।**

**नेति कौटल्यः । शक्यः प्रकृतिविवादः प्रकृतिमुख्योपग्रहेण कलहस्थानापनयनेन वा वारयितुं, विवदमानास्तु प्रकृतयः परस्परसङ्घर्षेणोपकुर्वन्ति । राजविवादस्तु पीडनोच्छेदनाय प्रकृतीनां द्विगुणव्यायामसाध्य इति ।**

तदर्थो बोद्धव्यः । परचक्रं तु, शक्यं प्रतियोद्धुं प्रतियोधनेन वारयितुं शक्यम्, अपसारेण अन्यत्र गमनेन, सन्धिना वा दानपणनेन वा, मोक्षयितुं द्रोहारम्भान्निवर्तयितुं, शक्यम् । एवञ्च परचक्रपीडनात् स्वचक्रपीडनं गरीय इति भावः । इत्याचार्याः ।

स्वचक्रपीडनं नाम प्रकृतिपुरुषमुख्यभूतानाममात्यादीनामानुकूल्यसम्पादनेन विघातोत्पादनेन च वारयितुं शक्यम् । एकदेशमेव च तद् धनधान्याद्याढ्यवन्तं प्रदेशं पीडयति, न तु सर्वदेशम् । परचक्रं तु द्रव्यलुण्टनैर्मनुष्यवधैर्गृहादिदाहभञ्जनैः स्वदेशादुत्सारणैश्च सर्वं देशं पीडयतीत्यतः परचक्रपीडनमेव स्वचक्रपीडनाद् गरीय इत्यभिप्रायकमाचार्यमतनिषेधपूर्वकमाह — **नेति कौटल्य** इत्यादि ।

अथ प्रकृतिविवादराजविवादयोस्तारतम्यपरीक्षायामाचार्यमतमाह — **प्रकृतीत्यादि** । प्रकृतिराजविवादयोः प्रकृतिविवादः प्रकृतीनां परस्परविप्रतिपत्तिः राजविवादः राज्ञोः परस्परविप्रतिपत्तिः तयोर्मध्ये, प्रकृतिविवादः, प्रकृतीनां भेदकः परस्परभेदहेतुः, अत एव पराभियोगान् शत्र्वभियोगान्, आवहति । राजविवादस्तु, प्रकृतीनां, द्विगुणभक्तवेतनपरिहारकरः भक्तवेतनद्वैगुण्यं करमोक्षणं च करोति । ततश्च प्रकृत्यनुकूलाद् राजविवादात् तत्प्रतिकूलः प्रकृतिविवादो गरीयानित्यर्थः । इत्याचार्यमतम् ।

तत् प्रतिषेधति—**नेति कौटल्य** इत्यादि । शक्य इत्यादेरयमर्थः — **प्रकृतिविवादः** प्रकृतिमुख्यानुकूलीकरणेन परस्परकलहकारणनिवारणेन वा **वारयितुं शक्यः** । किञ्च विवदमानाः प्रकृतयः परस्परस्पर्धया सातिशयमुप-

**देशराजविहारयोः देशविहारस्त्रैकाल्येन कर्मफलोपघातं करोति, राजविहारस्तु कारुशिल्पिकुशीलववाग्जीवनरूपाजीवावैदेहकोपकारं करोति इत्याचार्याः ।**

**नेति कौटल्यः । देशविहारः कर्मश्रमवधार्थमल्पं भक्षयति, भक्षयित्वा च भूयः कर्मसु योगं गच्छति । राजविहारस्तु स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयतीति ।**

**सुभगाकुमारयोः कुमारः स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयति । सुभगा विलासोपभोगेन । इत्याचार्याः ।**

कुर्वन्ति । राज्ञो विवादस्तु प्रकृतीनां शान्तिसिद्धिविघातलक्षणाय पीडनाय उच्छेदाय च कल्पते प्रकृतिविवादप्रशमनापेक्षितप्रयत्नाद्द्विगुणप्रयत्नप्रशमनीय इत्ययमेव गरीयानिति ।

देशविहारराजविहारयोर्गुरुलघुभावं निरूपयन्नाचार्यमतमाह — **देशराजविहारयोरिति** । देशविहारो देशीयजनक्रीडा राजविहारो राजक्रीडा तयोर्मध्ये, देशविहारः, त्रैकाल्येन कर्मफलोपघातं करोति कृतवापसस्यानवेक्षणात् तत्कालकरणीयवापाकरणात् करिष्यमाणवापानुकूलक्षेत्रसंस्काराकरणाच्च कालत्रयेऽपि कृषिफलमुपहन्ति । राजविहारस्तु, कारुशिल्पिकुशीलववाग्जीवनरूपाजीवावैदेहकोपकारं करोति, तत्र कारवस्तक्षादयः शिल्पिनः सूक्ष्मशिल्पकराः स्वर्णकारादयः कुशीलवाः गायकाः वाग्जीवनाः स्तुतिपाठकाः रूपाजीवा वेश्याः वैदेहकाः गन्धमाल्यादिविक्रयजीविनः । अतश्च देशविहार एव गरीयानित्यभिप्रायः । इत्याचार्याः ।

तत् प्रतिषेधति — **नेति कौटल्य** इत्यादि । देशविहारस्तावत् कृष्यादिव्यापारानुष्ठानोत्पन्नश्रमनिवारणापेक्षितमल्पं कालमपहरति । अपहृत्य च भूयः कृष्यादिकर्मसु उद्योगं गमयति विहारवन्तं जनम् । राजविहारस्तु स्वयं राज्ञा राजवल्लभैश्च जानपदाननुज्ञातधनग्रहणलक्षणेन स्वयंग्राहेण आत्माभिरुचिकल्पितया पण्यशालया कार्यनिर्वर्तनार्थलञ्चग्रहणेन च पीडयतीति स एव पापीयानित्यर्थः ।

सुभगाविहारकुमारविहारयोर्गुरुलघुभावे आचार्यमतमाह — **सुभगाकुमारयोरिति** । सुभगा देवी कुमारो युवराजः तयोर्मध्ये, कुमारः, स्वयं, वल्लभैश्च स्वदयितजनैश्च, स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयति, अर्था-

**नेति कौटिल्यः। शक्यः कुमारो मन्त्रिपुरोहिताभ्यां वारयितुं, न सुभगा बालिश्यादनर्थ्यजनसंयोगाच्चेति ।**

**श्रेणीमुख्ययोः श्रेणी बाहुल्यादनवग्रहा स्तेयसाहसाभ्यां पीडयति, मुख्यः कार्यानुग्रहविघाताभ्याम् इत्याचार्याः ।**

**नेति कौटिल्यः। सुव्यावर्त्या श्रेणी समानशीलव्यसनत्वात्, श्रेणीमुख्यैकदेशोपग्रहेण वा । स्तम्भयुक्तो मुख्यः परप्राणद्रव्योपघाताभ्यां पीडयतीति ।**

**सन्निधातृसमाहर्त्रोः सन्निधाता कृतविदूषणात्ययाभ्यां पीडयति। समाहर्ता करणाधिष्ठितः प्रदिष्टफलोपभोगी भवति इत्याचार्याः ।**

ज्जनान् । सुभगा, विलासोपभोगेन क्रीडार्थेन भोगद्रव्येण गन्धमाल्यादिना, पीडयति । ततश्च कुमारनिमित्तकं पीडनं गुर्वित्यर्थः ।

तन्निषिध्य स्वमतमाह — **नेतीत्यादि** । कुमारः, मन्त्रिपुरोहिताभ्यां, वारयितुं स्वयंग्राहादिभ्यो निवर्तयितुं, शक्यः । सुभगा, न वारयितुं शक्या स्त्रीत्वादेव । हेत्वन्तरमप्याह — **बालिश्याद् अनर्थ्यजनसंयोगाच्चेति** । मौर्ख्याद् गायनवाग्जीवनकुशीलवादिसम्बन्धाच्च ।

श्रेणीनिमित्तपीडामुख्यनिमित्तपीडयोर्गुरुलघुभावे आचार्यमतमाह — **श्रेणीमुख्ययोरिति** । तयोर्मध्ये, श्रेणी आयुधीयकर्षकाणामन्योन्यसंगतानां सङ्घः, बाहुल्यात्, अनवग्रहा वारयितुमशक्यतया निष्प्रतिबन्धा, स्तेयसाहसाभ्यां परधनप्रच्छन्नहरणात् परधनप्रसभहरणाच्च, पीडयति । मुख्यः, कार्यानुग्रहविघाताभ्याम् उत्कोचदाने कार्यसाधनेन तददाने कार्यविहननेन च, पीडयतीति ।

तन्निषिध्य स्वमतमाह — **नेतीत्यादि** । श्रेणी, सुव्यावर्त्या सुखेन स्तेयादितो निवर्तयितुं शक्या, कुतः, समानशीलव्यसनत्वात् श्रेण्यवयवतुल्यकृष्यादिवृत्तिव्यसनत्वात्, अर्थात् समानशीलव्यसनेनैव । श्रेणीमुख्यैकदेशोपग्रहेण वा श्रेणीमुख्याङ्गभूतपुरुषानुकूलनेन वा, सुव्यावर्त्येति सम्बध्यते । स्तम्भयुक्तः गर्वयुक्तः, मुख्यः, परप्राणद्रव्योपघाताभ्याम् अन्यजीवितहरणेनान्यद्रव्यहरणेन च, पीडयति । इति अतश्च मुख्यपीडैव गरीयसीत्यर्थः ।

सन्निधातृपीडासमाहर्तृपीडयोर्गुरुलघुभावं चिन्तयन्नाचार्यमतमाह — **सन्निधातृसमाहर्त्रोरिति** । तयोर्मध्ये, सन्निधाता, कृतविदूषणात्ययाभ्यां कृतस्य दूषणादेर्दोषारोपेण कालातिक्रमकथनेन च, पीडयति । समाहर्ता, करणाधि-

नेति कौटल्यः । सन्निधाता कृतावस्थमन्यैः कोशप्रवेश्यं प्रतिगृह्णाति । समाहर्ता तु पूर्वमर्थमात्मनः कृत्वा पश्चाद् राजार्थं करोति, प्रणाशयति वा, परस्वादाने च स्वप्रत्ययश्चरतीति ।

अन्तपालवैदेहकयोरन्तपालश्चोरप्रसङ्गदेयात्यादानाभ्यां वणिक्पथं पीडयति । वैदेहकास्तु पण्यप्रतिपण्यानुग्रहैः प्रसाधयन्ति इत्याचार्याः ।

नेति कौटल्यः । अन्तपालः पण्यसम्पातानुग्रहेण वर्तयति । वैदेहकास्तु सम्भूय पण्यानामुत्कर्षापकर्षं कुर्वाणाः पणे पणशतं कुम्भे कुम्भशतम् इत्याजीवन्ति ।

---

ष्ठितः संख्यायकाधिष्ठितः, प्रदिष्टफलोपभोगी स्वकलृप्तवेतनमात्रभोक्ता, भवति, अत एव न पीडाकर इत्यभिप्रायः । इत्याचार्याः ।

आचार्यमतं निषिध्य स्वमतमाह — नेति कौटल्य इत्यादि । सन्निधाता, अन्यैः कृतावस्थम् अन्यैः परीक्षकैः सुपरीक्ष्य ग्राह्यत्वेन निर्णीतं, कोशप्रवेश्यं भाण्डागारस्थापनीयं वस्तु, प्रतिगृह्णाति, न तु तस्य ग्राह्यत्वाग्राह्यत्वविषये स प्रमाणमित्यर्थः । एवञ्च स न पीडाकरः किन्तु समाहर्तैवेत्यभिप्रायेणाह — समाहर्ता त्विति । सः, पूर्वं प्रथमम् , आत्मनः अर्थं कृत्वा अपीडनार्थमुत्कोचद्रव्यं गृहीत्वा, पश्चाद् राजार्थं, करोति उत्थापयति, प्रणाशयति वा स्वयमपहरति वा । प्रणाशनसम्भावनार्थमाह—परस्वादाने चेति । परस्वस्य करभूतस्य ग्रहणे च, स्वप्रत्ययः आत्मप्रमाणकः, चरति । इतिशब्दो हेत्वर्थः । एवञ्च समाहर्तैव पीडाकर इत्यभिप्रायः ।

अन्तपालवैदेहकपीडां प्रत्याह — अन्तपालवैदेहकयोरिति । तयोर्मध्ये, अन्तपालः, चोरप्रसङ्गदेयात्यादानाभ्यां चोरप्रसङ्गेन स्वप्रसञ्जितचोरद्वारार्थापहरणेन देयात्यादानेन देयस्य पथिकदेयस्य वर्तनीरूपस्यातिमात्रग्रहणेन च, वणिक्पथं पीडयति । वैदेहकास्तु, पण्यप्रतिपण्यानुग्रहैः पण्ये पणनीयपदार्थे प्रतिपण्ये पण्यमूल्यप्रतिनिधिभूते पदार्थे च अनुग्रहैः लाभकल्पनैः प्रसाधयन्ति वणिक्पथं वर्धयन्ति इत्याचार्याः ।

तन्मतं निषिध्य स्वमतमाह — नेतीत्यादि । अन्तपालः, पण्यसम्पातानुग्रहेण पण्यानां सम्भूयागमनं पण्यसम्पातः तेन तन्निमित्ता वर्तनीह लक्ष्यते, तस्याम् अनुग्रहेण लाभकरणेन, वर्तयति अर्थात् वणिक्पथम् । वैदेह-

**अभिजातोपरुद्धा भूमिः पशुव्रजोपरुद्धा वेति। अभिजातोपरुद्धा भूमिः महाफलाप्यायुधीयोपकारिणी न क्षमा मोक्षयितुं व्यसनाबाधभयात्। पशुव्रजोपरुद्धा तु कृषियोग्या क्षमा मोक्षयितुं, विवीतं हि क्षेत्रेण बाध्यते। इत्याचार्याः।**

**नेति कौटल्यः। अभिजातोपरुद्धा भूमिरत्यन्तमहोपकारापि क्षमा मोक्षयितुं व्यसनाबाधभयात्। पशुव्रजोपरुद्धा तु कोशवाहनोपकारिणी न क्षमा मोक्षयितुमन्यत्र सस्यवापोपरोधादिति।**

कास्तु, सम्भूय संहता भूत्वा, पण्यानाम् उत्कर्षापकर्षं कुर्वाणाः स्वपण्यविक्रये मूल्योत्कर्षं परपण्यक्रयणे मूल्यापकर्षं च कल्पयन्तः, पणे पणशतम् एकस्मिन् पणे पणानां शतं, कुम्भे कुम्भशतम् एकस्मिंस्तैलादिकुम्भे तत्कुम्भशतम्, इति आजीवन्ति अनेन प्रकारेण बहुगुणं लाभं गृह्णन्ति। अतो वणिज एव पीडाकरा इत्यभिप्रायः।

भूमेः पीडाहेतुभूताया मोक्षणीयत्वामोक्षणीयत्वे चिन्तयति— **अभिजातोपरुद्धे**ति। विजिगीषुकुलीनाधिगता, भूमिः, मोक्षयितव्येति शेषः। पशुव्रजोपरुद्धा वा मोक्षयितव्या, इति विचार्यत इति शेषः। तत्राचार्यमतमाह — अभिजातोपरुद्धा भूमिः, महाफलापि प्रभूतधान्यफलदायिकापि, आयुधीयोपकारिणी आयुधीयदानेनोपकर्त्री, अत एव मोक्षयितुं न क्षमा। कुतः, व्यसनाबाधभयात् व्यसने शत्र्वाक्रमणे य आबाधः आयुधीयव्यपगमनिमित्ता पीडा तद्भयात्। पशुव्रजोपरुद्धा तु कृषियोग्या धान्यादिप्रसवार्हा, अत एव मोक्षयितुं क्षमा। पशुभोग्यविवीतस्थानभूता भूमिः किमिति विवीतत्वबाधनेन धान्योत्पत्तिक्षेत्रतामापाद्यत इत्यत्राह — **विवीतं हि क्षेत्रेण बाध्यत** इति। विवीतं तृणाद्युत्पत्तिभूमिः, क्षेत्रेण सस्यवापेन, बाध्यते प्रयोजनगौरवादित्यर्थम्।

आचार्यमतं निषेधति — **नेति कौटल्य** इति। अभिजातोपरुद्धा भूमिरतिमहान्तं सस्योपकारमादधानापि मोक्षणीयैव, अन्यथा व्यसने रन्ध्रान्वेषिणाभिजातेनैव आबाध उत्पाद्येतेति भयात्। पशुव्रजोपरुद्धा तु कोशसंग्राह्यघृतादिदानेन बलीवर्दादिवाहनदानेन चोपकारिणी अत एव मोक्षयितुं न क्षमा समीपावस्थितसस्यवापक्षेत्रोपघाताभावे इत्येवंरूपं स्वमतमाह — **अभिजातोपरुद्धे**त्यादि।

**प्रतिरोधकाटविकयोः प्रतिरोधका रात्रिसत्रचराः शरीराक्रमिणो नित्याः शतसहस्रापहारिणः प्रधानकोपकाश्च । व्यवहिताः प्रत्यन्तारण्यचराश्चाटविकाः प्रकाशा दृश्याश्चरन्त्येकदेशघातकाश्च । इत्याचार्याः ।**

**नेति कौटिल्यः । प्रतिरोधकाः प्रमत्तस्यापहरन्ति, अल्पाः कुण्ठाः सुखा ज्ञातुं ग्रहीतुं च । स्वदेशस्थाः प्रभूता विक्रान्ताश्चाटविकाः । प्रकाशयोधिनोऽपहर्तारो हन्तारश्च देशानां राजसधर्माण इति ।**

**मृगहस्तिवनयोः मृगाः प्रभूताः प्रभूतमांसचर्मोपकारिणो मन्द-**

प्रतिरोधकाटविकयोः पीडामधिकृत्याचार्यमतमाह — **प्रतिरोधकाटविकयोरित्यादि** । प्रतिरोधकाः, रात्रिसत्रचराः रात्रिचारिणो वनगहनचारिणश्च, शरीराक्रमिणः परशरीरहिंसिनः शरीरं शरीरमात्रमर्थादसहायं जनं यं यं पश्यन्ति तं तमाक्रामितुं शीलमेषामिति तथाभूता इत्यर्थः, नित्याः सर्वदा सन्निहिताः, शतसहस्रापहारिणः हिरण्यादिलक्षापहारिणः, प्रधानकोपकाश्च प्रधानान् राष्ट्रमुख्यान् महाधनिकान् कोपयन्ति उपघ्नन्तीति तथाभूताश्च । व्यवहिता दूरस्थाः, दूरस्थत्वमेव विवृणोति—प्रत्यन्तारण्यचराश्च विषयान्तवनचारिणश्च, आटविकाः, प्रकाशाः सर्वजनविदिताः, दृश्याः दृष्टिविषयाः, चरन्ति । एतेन तत्पीडनीयानामपसरणसौकर्यमुक्तम् । एकदेशघातकाश्च कतिपयघातिनो न सर्वघातिनः । एवञ्च प्रतिरोधका गुरुपीडाकराः आटविका लघुपीडाकरा इत्यभिप्रायः । इत्याचार्याः ।

तन्मतं निराकरोति – **नेति कौटिल्य** इति । प्रतिरोधकाः, प्रमत्तस्य धनरक्षणानवहितस्य, अपहरन्ति अर्थाद् धनम्, अल्पाः असहायचराः, अत एव कुण्ठाः कुण्ठितप्रसराः, ज्ञातुं, ग्रहीतुं च बन्धुं च, सुखाः अनायासशक्याः । सुखमिति पाठे सामान्ये नपुंसकम् । आटविकेषु विशेषमाह — आटविकाः स्वदेशस्थाः, न तु प्रतिरोधका इव देशान्तरगमनसापेक्षाः, प्रभूताः अनल्पाः, विक्रान्ताश्च विक्रमवत्तया दुर्ग्रहाश्च । किञ्च राजान इव ते निरङ्कुशाः प्रकाशमेव युद्धं कृत्वा देशीयजनानां द्रव्यं प्राणांश्च हरन्तीत्याह — **प्रकाशयोधिन** इत्यादि । ततश्चाटविकपीडैव गरीयसीत्यभिप्रायः ।

मृगवनाद्धस्तिवनं पीडने गरीय इत्यभिप्रायकमाह — **मृगहस्तिवनयोरित्यादि** । प्रभूताः प्रचुराः हस्त्यपेक्षया । मन्दग्रासावक्लेशिनः अल्पाहाराः

ग्रासावक्लेशिनः सुनियम्याश्च । विपरीता हस्तिनो गृह्यमाणाः दुष्टाश्च देशविनाशायेति ।

स्वपरस्थानीयोपकारयोः स्वस्थानीयोपकारो धान्यपशुहिरण्यकुप्योपकारो जानपदानामापद्यात्मधारणः । विपरीतः परस्थानीयोपकारः । इति पीडनानि ।

आभ्यन्तरो मुख्यस्तम्भो बाह्यो मित्राटवीस्तम्भः । इति स्तम्भवर्गः ।

ताभ्यां पीडनैर्यथोक्तैश्च पीडितः सक्तो मुख्येषु परिहारोपहतः प्रकीर्णो मिथ्यासंहृतः सामन्ताटवीहृत इति कोशसङ्गः ॥

---

अत एव धावने सुलभक्लेशाः अत एवानुधावितृसुग्रहा इत्यर्थः । सुनियम्याः गृहीताश्च सुखेन वशयितुं शक्याः । विपरीता मृगोक्तगुणविपरीतगुणाः अल्पसङ्ख्या अल्पमांसचर्मोपकारिणः अमिताहारतयानवक्लेशिनो दुर्दमाश्चेत्यर्थः । **गृह्यमाणा दुष्टाश्च देशविनाशायेति** । गृह्यमाणा हस्तिनो दुष्टाश्चेत्, लोकं विनाशयन्ति ।

स्वनगरोपकारपरनगरोपकारयोर्मध्ये उपकर्तृगुणावहः, द्वितीयः पीडावह इत्याह — **स्वपरस्थानीयोपकारयोरिति** । तयोः, स्वस्थानीयोपकारः, जानपदानां, धान्यपशुहिरण्यकुप्योपकारः धान्यपश्वादिक्रयविक्रयव्यवहाररूपः, आपदि दुर्भिक्षादिविपत्समये, आत्मधारणः [illegible] । परस्थानीयोपकारः परस्थानीये स्वेन प्रयुक्तो धान्यादिक्रयविक्रयव्यवहारः, विपरीतः परवृद्धिहेतुत्वादात्मपीडावह इत्यर्थः । इति पीडनानि । एवं देशपीडनवर्गो व्याख्यात इत्यर्थः ।

अथ **स्तम्भनवर्ग** इति सूत्रम् । राष्ट्रमुख्यादिभिः प्रगृहीतस्य राजार्थोपरोधः स्तम्भनं तत्सम्बद्धो वर्ग उच्यत इति सूत्रार्थः । जनपददुर्गव्यसनकथनानन्तरं क्रमप्राप्तं कोशव्यसनमनेन सूत्रेणोपचारेण चाभिधीयते ।

राष्ट्रमुख्यकृतः स्तम्भ आभ्यन्तर इति मित्राटविकृतः स्तम्भो बाह्य इति च स्तम्भो द्विप्रकार इत्याह — **आभ्यन्तर** इत्यादि । **इति स्तम्भवर्ग** इति । व्याख्यात इति शेषः ।

**कोशसङ्गवर्ग** इति सूत्रम् । कोशस्य राजार्थस्य करादेः सङ्गः अप्रदानं भाण्डागारे प्रवेशाकरणं कोशसङ्गः तस्य वर्ग उच्यत इति सूत्रार्थः ।

**पीडनानामनुत्पत्तौ उत्पन्नानां च वारणे ।**
**यतेत देशवृद्ध्यर्थं नाशे च स्तम्भसङ्गयोः ॥**

इति कौटलीयार्थशास्त्रे व्यसनाधिकारिकेऽष्टमेऽधिकरणे चतुर्थोऽध्यायः
पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गः.
आदितः विंशतिशततमः ॥

---

**ताभ्यामिति** । आभ्यन्तरबाह्यस्तम्भाभ्यां, यथोक्तैः पीडनैश्च दैवमानुषरूपैः, पीडितः अलब्धः, मुख्येषु सक्तः करदैर्मुख्यैः गृहीत एव मुख्यैर्भक्षितत्वात् तेषु स्थितः, परिहारोपहतः परिहारेण राजशासननिमित्तेन कराग्रहणेन उपहतः विहतोत्थापनः, प्रकीर्णः कणशस्तत इतो विक्षिप्तावस्थितः, मिथ्यासंहृतः न्याय्यपरिमाणात् न्यूनतयाधिकतया वा संहृतः, सामन्ताटवीहृतः सामन्तैराटविकैश्चापहृतः । हृतस्थाने 'भृत' इत्यादर्शेषु पठ्यते । इति एवम्प्रकाराः, कोशसङ्गाः ॥

प्रान्ते श्लोकमाह—**पीडनानामिति** । तेषाम्, अनुत्पत्तौ उत्पत्तिप्रतिबन्धे, उत्पन्नानां पीडनानां, वारणे च यतेत राजा । किमर्थं, **देशवृद्ध्यर्थम्** । **स्तम्भसङ्गयोः नाशे च**, यतेत, अर्थात् कोशवृद्ध्यर्थम् ॥

इति कौटिलीयार्थशास्त्रव्याख्यायां व्यसनाधिकारिकेऽष्टमाधिकरणे
चतुर्थोऽध्यायः पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गः,
आदितो विंशत्यधिकशततमः ॥

---

## १३३,१३४. प्रक. बलव्यसनवर्गः, मित्रव्यसनवर्गश्च ।

**बलव्यसनानि । अमानितं विमानितम् अभृतं व्याधितं नवागतं दूरायातं परिश्रान्तं परिक्षीणं प्रतिहतं हताग्रवेगम् अनृतुप्राप्तम् अभूमिप्राप्तम् आशानिर्वेदि परिसृप्तं कलत्रगर्भि अन्तःशल्यं कुपितमूलं भिन्नगर्भम् अपसृतम् अतिक्षिप्तम् उपनिविष्टं समाप्तम् उपरुद्धं परिक्षिप्तं छिन्नधान्यपुरुषवीवधं स्वविक्षिप्तं मित्रविक्षिप्तं दूष्ययुक्तं दुष्टपार्ष्णिग्राहं शून्यमूलम् अस्वामिसंहतं भिन्नकूटम् अन्धमिति ।**

**तेषाममानितविमानितयोरमानितं कृतार्थमानं युध्येत न विमानितमन्तःकोपम् ।**

**अभृतव्याधितयोरभृतं तदात्वकृतवेतनं युध्येत, न व्याधितमकर्मण्यम् ।**

**नवागतदूरायातयोर्नवागतमन्यत उपलब्धदेशमनवमिश्रं युध्येत, न दूरायातमायतगतपरिक्लेशम् ।**

**बलव्यसनवर्ग** इति सूत्रम् । बलस्य दण्डस्य यानि व्यसनानि तेषां वर्गः अभिधीयत इति सूत्रार्थः । कोशव्यसनानन्तरं क्रमप्राप्तं दण्डव्यसनमिहोच्यते ।

**बलव्यसनानीति** । बलस्य व्यसनरूपा धर्मा उच्यन्त इति शेषः । तान् उद्दिशति — अमानितमित्यादि ।

तेषां क्रमेण द्वयोर्द्वयोर्गुरुलघुभावं निरूपयिष्यन् प्रथमस्य द्विकस्य तमादौ निरूपयति—तेषामिति । अमानितादिषु त्रिंशद्विधेषु उक्तानां बलानां मध्ये, अमानितविमानितयोः अकृतार्थसत्कारमानावज्ञातत्वाभ्यां दुष्टयोः, अमानितं, कृतार्थमानं तत्कालकृतार्थदानसत्कारं सत्, युध्येत । **न विमानितमन्तःकोपमिति** । विमानितं तु हृदयान्तर्निहितस्वावज्ञामर्षं न युध्येत ।

**अभृतव्याधितयोरित्यादि** । अदत्तवेतनरोगिणोर्मध्ये । तदात्वकृतवेतनं तत्कालदत्तवेतनं सत् । अकर्मण्यं कर्माक्षमम् ।

**नवागतदूरायातयोरित्यादि** । नवागतमचिरागतं दूरायातं दूरादागतं तयोर्मध्ये, **नवागतम्**, अन्यत उपलब्धदेशं स्वतो देशानभिज्ञमपि **नवेतरेभ्यो विज्ञातदेशम्, अनवमिश्रं** नवेतरसहितं, युध्येत । **न दूरायातमायतगतपरिक्लेशमिति** । दूरायातं दीर्घाध्वगमनपरिखिन्नत्वान्न युध्येत ।

परिश्रान्तपरिक्षीणयोः परिश्रान्तं स्नानभोजनस्वप्नलब्धविश्रमं युध्येत, न परिक्षीणमन्यत्राहवे क्षीणयुग्यपुरुषम् ।

प्रतिहतहताग्रवेगयोः प्रतिहतमग्रपातभग्नं प्रवीरपुरुषसंहतं युध्येत, न हताग्रवेगमग्रपातहतप्रवीरम् ।

अनृत्वभूमिप्राप्तयोरनृतुप्राप्तं यथर्तुयोग्ययुग्यशस्त्रावरणं युध्येत, नाभूमिप्राप्तमवरुद्धप्रसारव्यायामम् ।

आशानिर्वेदिपरिसृप्तयोराशानिर्वेदि लब्धाभिप्रायं युध्येत, न परिसृप्तमपसृतमुख्यम् ।

कलत्रगर्ह्यन्तश्शल्ययोः कलत्रगर्ह्युन्मुच्य कलत्रं युध्येत, नान्तश्शल्यमन्तरमित्रम् ।

---

परिश्रान्तपरिक्षीणयोरित्यादि । अमुख्याहारदूरगतागतादिपरिखिन्नं परिश्रान्तं युद्धान्तरक्षीणयुग्यपुरुषं परिक्षीणं तयोर्मध्ये । अन्यत्राहवे अन्यस्मिन् युद्धे ।

प्रतिहतहताग्रवेगयोरिति । प्रतिहतं युद्धारम्भ एव प्राप्तभङ्गं हताग्रवेगं हतः प्रवीरपुरुषवधकुण्ठितः अग्रवेगः प्राथमिको युद्धसम्पातोत्साहो यस्य तत् तथाभूतं तयोर्मध्ये, प्रतिहतम्, अग्रपातभग्नमिति तद्विवरणं, प्रवीरपुरुषसंहतं प्रवीरपुरुषमिलितं, युध्येत । हताग्रवेगम्, अग्रपातहतप्रवीरमिति तद्विवरणं, न युध्येत ।

अनृत्वभूमिप्राप्तयोरित्यादि । अनृतुप्राप्तम् अलब्धयुद्धयोग्यर्तुकम् अभूमिप्राप्तं सैन्यव्यायामानर्हभूमिप्राप्तं तयोर्मध्ये, अनृतुप्राप्तं, यथर्तुयोग्ययुग्यशस्त्रावरणं यथोपस्थितर्त्वर्हवाहनायुधकवचादियुक्तं सत्, युध्येत । अभूमिप्राप्तं तु, अवरुद्धप्रसारव्यायामं न युध्येत उपरुद्धसर्वतोगतिकत्वादुपरुद्धयुद्धकर्मत्वाच्च न योद्धुमर्हेत् ।

कामनाविषयवस्त्वलाभप्राप्तनैराश्यमाशानिर्वेदि मुख्यवर्जितं परिसृप्तं तयोर्मध्ये आशानिर्वेदि बलम् आसादितपुनराशास्थानं भूत्वा युध्येत, न तु परिसृप्तं प्रधानापेतत्वादित्याह — आशानिर्वेदीत्यादि । अपसृतमुख्यमिति परिसृप्तपदार्थव्याख्यानम् । एवमुत्तरेष्वपि बोध्यम् । अपसृतमित्यपपाठः ।

कलत्रगर्ह्यन्तःशल्ययोरिति । कलत्रं लक्षणया पोष्यवर्गं गर्हति 'एष मे युद्धकर्मपरिपन्थी रक्ष्यभार' इति निन्दतीति कलत्रगर्हि, अन्तरमित्रमन्तःशल्यं तयोर्मध्ये, कलत्रगर्हि, कलत्रम् उन्मुच्य समुचिते रक्षास्थानेऽवस्थाप्य युध्येत । अन्तःशल्यम्, अन्तरमित्रम् अन्तर्गतशत्रुकं, न युध्येत ।

TRIVANDRUM SANSKRIT SERIES
No. LXXX.

# THE ARTHAṢÂSTRA OF KAUṬALYA

with the commentary Srîmûla of

MAHÂMAHOPÂDHYÂYA
T. GAṆAPATI SÂSTRÎ,
HONORARY MEMBER OF THE ROYAL ASIATIC SOCIETY OF
GREAT BRITAIN AND IRELAND,
*Curator of the Department for the Publication of
Sanskrit Manuscripts, Trivandrum*

EDITED BY THE COMMENTATOR.

**Part II—3, 4, 5, 6 & 7 Adhikaranas.**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1924

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८०.

# कौटलीयम्

# अर्थशास्त्रं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
लण्डनपुरस्थराजकीयैष्याखण्डीयविद्यासेवकसमाजपूज्यसभ्यपदभाजा

महामहोपाध्यायेन

त. गणपतिशास्त्रिणा

विरचितया श्रीमूलाख्यया व्याख्यया
समुपेतं
तेनैव संशोधितम् ।

---

द्वितीयः सम्पुटः—तृतीयचतुर्थपञ्चमषष्ठसप्तमाधिकरणानि ।

---

तच्च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

कोल्लमाब्दाः १०९९, क्रैस्ताब्दाः १९२४.

# PREFACE.

This is the second part of the Arthaśāstra of Kauṭalya, in which are included the next five Adhikaraṇas only, in order that it may be equal in size to the first.

When this volume was about to be published, a copy of Dr. Jolly's edition of the Arthaśāstra published at Lahore, came to hand, the readings of which, as well as of the Mysore edition, as compared with those of the Trivandrum edition, will be given as an appendix to the third part.

Dr. Jolly's introduction deals with many questions connected with the work. We shall consider some of his arguments in support of his theories, as also of others referred to therein.

From the closing verse of the first chapter,

सुखग्रहणविज्ञेयं तत्त्वार्थपदनिश्चितम् ।
कौटल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥

and from the closing verse of the tenth chapter of the second Adhikarana,

सर्वशास्त्राण्यनुक्रम्य प्रयोगानुपलभ्य च ।
कौटल्येन नरेन्द्रार्थे शासनस्य विधिः स्मृतः ॥

and from the two stanzas at the end of the work,

येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥
दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च ॥

as well as from the fact that quotations cited under the name of Kauṭalya or Kauṭalīya are all found in the work, it is quite proper that it should be regarded as the production of Chāṇakya alias Vishṇugupta, a contemporary of Chandragupta Maurya. But Drs. Winternitz, Jolly and Keith, hold that the Arthaśāstra was not the production of a person named Kauṭalya, a contemporary of Chandragupta Maurya, on the following grounds:—

(i) no reference is made in the work to the great empire of Chandragupta, which is said to have been built up by Chāṇakya (Dr. Winternitz), nor is the name Pāṭaliputra, the capital of the empire, mentioned, (Dr. Jolly.);

(ii) the theories propounded refer rather to the governance of a number of small independent states than of a great empire like that of Chandragupta, (Dr. Winternitz);

(iii) no great person named Kautalya did exist during the time of Chandragupta Maurya, as he is not mentioned by Megasthenes, (Dr. Jolly);

(iv) the person referred to frequently, as Kautalya, is not the author, because, the opinion of Kautalya in the course of the discussion of ministerial usurpation, dealt with in the sixth chapter of the Yogavritta Adhikarana is criticised by Bhāradvāja; and, it is impossible, if Kautalya was the author of the work, that his opinion would be criticised by a previous Achārya. (Dr. Keith);

(v) the word Kautilya meaning as it does falsehood and hypocrisy could not possibly have been adopted as the name of the famous minister of Chandragupta (Drs Keith and Winternitz).

Let us now consider these arguments.

With regard to the first, it may be said that the author could have referred to the empire of his own making, either (*a*) in the course of the work, as an illustration, or (*b*) at the beginning or end of the work, when he makes himself known. Of these two positions, the first is not possible; for, in a general treatise on the science of polity, it is but proper for an author to quote as authority the government of ancient kings well known to Itihāsas, instead of the one of his own making, lest he should be deemed as praising himself. As for the second, the author can be said to refer to the empire of Chandragupta, when he says at the end of the work in the sloka,

'येन शस्त्रं च शास्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥'

that that person is the author of the work, who pulled down the empire of the Nandas. From this it may be inferred that reference is also made to the place where he lived, viz. Pāṭaliputra. It will be noted here that the author never fails to make mention of towns and cities, whenever he finds necessity to do so, as when he speaks of Magadha, Mathura, etc., as the sources of silk, cotton and other goods. If Pāṭaliputra is not mentioned in the course of the work, it is because there is no context for it.

The second argument is not conclusive. The theories of government described are as much applicable to a great empire as to small and independent states. Besides, the author dwells especially on the mutual duties of emperor and subject kings in the fifteenth and sixteenth chapters of the seventh Adhikaraṇa.

The third argument cannot be accepted. How can the record of Megasthenes which is admittedly a mixture of real and imaginary statements, be an authority on a subject which itself is not mentioned therein? Granting that Megasthenes knew of Kauṭalya, it does not necessarily follow that he should have mentioned that name in his records. It is possible that Megasthenes came to India many years after the death of Kauṭalya when Chandragupta was in full liberty and when the events connected with the name of Kauṭalya began to fade away from the memory of the subjects. Again, he might have heard of Kautalya from mere hearsay and because he did not know much of him he might not have cared to say anything regarding him.

Thus the probabilities being more for not mentioning the name of Kauṭalya by Megasthenes, how can it be said that the mighty Kautalya who is known to fame for thousands of years and whose exploits are recorded in the Vishṇu, Vayu and other authoritative Purāṇas did not exist during the time of Chandragupta? Dr. Jolly's argument so far as it based on the accounts of Magasthenes is tantamount to saying that, in solving problems concerning Indian antiquities, even the silence of Megasthenes is to be regarded as a piece of evidence. It further implies an utter disregard of such eminent authorities as the Vishṇu Purāṇa, Vāyu Purāna, Kamandakīya Nītisara etc.

The fourth argument is not correct. For Kauṭalya is not criticised here by Bhāradvaja as said by Dr. Keith. It is usual for writers either to state first the views of others and the reasons therefor and then to criticise and establish their own views, or to state their own views first, and then criticise the views of others. It is the latter method that is resorted to here by the author. The purport of the passages beginning from 'एवमेकैश्वर्यममात्यः कारयेदिति कौटल्यः' and ending with 'प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतदिति कौटल्य.' is this:" My opinion is that the minister shall make the prince assume the powers of sovereignty, while Bhāradvāja, an ancient Āchārya, thinks quite the contrary (that is, the minister shall take upon himself the powers of sovereignty) which is full

**श्चान्धीभवन्ति । तस्मात् प्रभूतोदके देशे, वर्षति च हस्तिबलप्रायः यायात् । विपर्यये खरोष्ट्राश्वबलप्रायः । देशमल्पवर्षपङ्कं वर्षति मरुप्रायं चतुरङ्गबलो यायात् ।**

**समविषमनिम्नस्थलह्रस्वदीर्घवशेन वाऽध्वनो यात्रां विभजेत् ।**
**सर्वा वा ह्रस्वकालाः स्युर्यातव्याः कार्यलाघवात् ।**
**दीर्घाः कार्यगुरुत्वाद्वा वर्षावासः परत्र च ॥**

इति कौटलीयार्थशास्त्रे अभियास्यत्कर्मणि नवमाधिकरणे प्रथमोऽध्यायः
शक्तिदेशकालबलाबलज्ञानं यात्राकालाः ।
आदितो द्वाविंशत्यधिकशततमोऽध्यायः ।

चोपजातान्तर्दोषा अश्वा भवन्तीत्यर्थः । **तस्मादिति** । उष्णकालयानस्य हस्त्यनर्थावहत्वात्, प्रभूतोदके प्रचुरजले देशे, वर्षति च वर्षति काले, हस्तिबलप्रायः, यायात् । **विपर्यय इति** । अप्रभूतोदके देशे अवर्षाकाले च, खरोष्ट्राश्वबलप्रायः, यायात् । यस्मिन् वृष्टिनिमित्तः पङ्कोऽल्पो भवति, तं तथाविधं मरुप्रायं देशं वर्षाकालेऽपि हस्त्यश्वरथपादातरूपचतुर्विधसैन्ययुक्तो गच्छन्न दुष्यतीत्याह --- **देशमल्पवर्षपङ्कमित्यादि** ।

अध्वनः समत्वविषमत्वादिभिरपि यात्राया ह्रस्वकालत्वादिविभागो भवतीत्याह --- **समेत्यादि** । समादिशब्दाः भावप्रधानाः, समत्वमदन्तुरत्वं, विषमत्वं दन्तुरत्वं, निम्नत्वं जलरूपत्वं, स्थलत्वमजलरूपत्वं, ह्रस्वत्वं ह्रस्वकालत्वं, दीर्घत्वं दीर्घकालत्वं, तद्वशेन वा तदनुरोधेन वा, अध्वनो यात्रां विभजेत् । तत्र स्थलत्वान्ता अध्वधर्माः, अन्यौ यात्राधर्मौ ॥

कार्यवशात् सर्वासामपि यात्राणां ह्रस्वकालत्वं दीर्घकालत्वं भवत इत्याह--- **सर्वा वेत्यादि** । या एता अध्वसमत्वविषमत्वादिवशोपजातह्रस्वभावदीर्घभावा उक्ताः, ताः सर्वा अपि, यातव्याः यात्राः, कार्यलाघवात् कार्यस्य क्षिप्रनिर्वर्तनात्, ह्रस्वकालाः, स्युः । कार्यगुरुत्वाद् वा कार्यस्य चिरनिर्वर्तनाच्च, दीर्घाः दीर्घकालाः स्युः । **वर्षावासः परत्र चेति** । किञ्च वर्षासु वासः स्वदेशकार्यः परविषय एव कार्यवशात् कर्तव्यः स्यादित्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अभियास्यत्कर्मणि नवमाधिकरणे
प्रथमोऽध्यायः शक्तिदेशकालबलाबलज्ञानं यात्राकालाः,
आदितो द्वाविंशत्यधिकशततमः ॥

## १३७—१३९. प्रक. बलोपादानकालाः, सन्नाहगुणाः, प्रतिबलकर्म च ।

**मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः ।**

**मूलरक्षणादतिरिक्तं मौलबलम्, अत्यावापयुक्ता वा मौला मूले विकुर्वीरन् इति, बहुलानुरक्तमौलबलः सारबलो वा प्रतियोद्धा व्यायामेन योद्धव्यम् इति, प्रकृष्टेऽध्वनि काले वा क्षयव्ययसहत्वान्मौलानाम् इति, बहुलानुरक्तसम्पाते च यातव्यस्योपजापभयादन्यसैन्यानां भृतादीनामविश्वासे, बलक्षये वा सर्वसैन्यानाम् इति, मौलबलकालः ।**

---

**बलोपादानकाला** इति सूत्रम् । बलानां मौलभृतादीनाम् उपादानस्य यथाकार्यं विनियोगस्य काला उच्यन्त इति सूत्रार्थः । अभियास्यता यात्राकालवद् बलोपादानकाला अपि ज्ञातव्या इति तत्कथनम् ।

के ते काला इत्याह — **मौले**त्यादि । मौलबलं स्थानीयभवं बलं, भृतकबलं भृतिस्वीकृतं बलं, श्रेणीबलं जानपदायुधीयगणरूपं बलं, मित्रबलम्, अमित्रबलम्, अटवीबलम् आटविकबलम्, इत्येतेषां षड्विधानां, समुद्दानकालाः कार्यविनियोगकालाः ।

तेषु मौलबलसमुद्दानकालस्य निमित्तान्याह — **मूलरक्षणादतिरिक्त**मित्यादि । अयमर्थः — स्थानीयरक्षार्थं यावदपेक्षितं ततोऽधिकं मौलबलं विद्यत इत्यस्मिन् निमित्ते; अथवा अत्यावापयुक्ता अतिमात्रद्रोहचिन्तायुक्ता मौलपुरुषाः मूले विकारं कुर्युः अत इमे आत्मना सहैव नेया इत्यस्मिन् निमित्ते; प्रभूतमनुरागि च मौलबलमुपादायागतः प्रत्यर्थी शूरसैन्ययुक्तो वा सः, अतः प्रयत्नेन युद्धं कर्तव्यं, तत्र मौलबलमेव समर्थं भवतीत्येतस्मिन् निमित्ते; बहुयोजनविप्रकृष्टे देशे दीर्घे वा काले शत्रुणा सह युद्धं भवेत्, तत्रावश्यम्भाविनौ क्षयव्ययौ मौलबलान्येव सोढुं शक्नुयुरित्यस्मिन् निमित्ते; बहुलाः स्वाम्यनुरागिणः शत्रुभृताः सम्पतिता अवश्यमुपजापं कुर्युः, भृतादीनि मौलव्यतिरिक्तान्यविश्वास्यानि, अतो मौलबलमेवानुपजाप्यत्वादुपादेयमित्येतस्मिन् निमित्ते; अथवा सर्वाणि भृतादिसैन्यानि प्राप्तयुग्यपुरुषापचयलक्षणशक्तिक्षयत्वात् पलायिष्यन्त इत्येतस्मिन् निमित्ते च, मौलबलस्य विनियोगकालः प्राप्तो मन्तव्य इति ।

**प्रभूतं मे भृतबलमल्पं च मौलबलम् इति, परस्याल्पं विरक्तं वा मौलबलं, फल्गुप्रायमसारं वा भृतसैन्यम् इति, मन्त्रेण योद्धव्यमल्पव्यायामेन इति, ह्रस्वो देशः कालो वा तनुक्षयव्ययः इति, अल्पसम्पातं शान्तोपजापं विश्वस्तं वा मे सैन्यम् इति, परस्याल्पः प्रसारो हन्तव्यः इति, भृतबलकालः ।**

**प्रभूतं मे श्रेणीबलं शक्यं मूले यात्रायां चाधातुम् इति, ह्रस्वप्रवासः, श्रेणीबलप्रायः प्रतियोद्धा, मन्त्रव्यायामाभ्यां प्रतियोद्धुः कामो, दण्डबलव्यवहारः इति श्रेणीबलकालः ।**

**प्रभूतं मे मित्रबलं शक्यं मूले यात्रायां चाधातुम्, अल्पः प्रवासो मन्त्रयुद्धाच्च भूयो व्यायामयुद्धम् इति, मित्रबलेन वा पूर्वमटवीं नगरी-**

भृतबलकालस्य निमित्तान्याह— **प्रभूतं मे भृतबलमित्यादि** । अयमर्थः —मम भृतसैन्यं प्रचुरं, मौलसैन्यमल्पमित्येतस्मिन् निमित्ते; अथवा शत्रोर्मौलसैन्यमल्पं विरक्तं वा वर्तते, अतो भृतबलमेवालं कार्यसाधनायेत्यस्मिन् निमित्ते; अथवा अल्पं दुर्बलं च परस्य भृतसैन्यमित्यस्मिन् निमित्ते; मन्त्रेण तूष्णींयुद्धात्मनाल्पश्रमेण योद्धव्यमित्यस्मिन् निमित्ते; अदूरो गन्तव्यदेशः कालश्च कार्यसिद्ध्येऽपेक्षितोऽल्पत्वादल्पक्षयव्ययः इत्यस्मिन् निमित्ते; अल्पपरदूतागमनं शमितोपजापम् उत्पन्नानुपजाप्यत्वविश्वासं वा मे सैन्यमित्यस्मिन् निमित्ते; परस्य तृणकाष्ठादिप्रवेशनमल्पमेव विहन्तव्यं, तच्च भृतबलेनैव विघातयितुं शक्यमित्येतस्मिन् निमित्ते च, भृतबलस्य विनियोगकालो बोद्धव्यः ।

श्रेणीबलकालमाह— **प्रभूतं मे श्रेणीबलमित्यादि** । अयमर्थः —श्रेणीबलं मे प्रचुरतया स्थानीयरक्षायां शत्रुं प्रत्यभियाने चोभयत्र विनियोक्तुं शक्यमित्येतस्मिन् निमित्ते; अदूरदेशं प्रयाणमदीर्घकालमित्यस्मिन् निमित्ते वा; प्रत्यर्थी श्रेणीबलबहुलः श्रेणीबलेनैव प्रतियोद्धव्य इत्यस्मिन् निमित्ते वा; प्रत्यर्थी मन्त्रेण तूष्णींयुद्धलक्षणेन व्यायामेन प्रकाशयुद्धलक्षणेन च प्रतियोद्धुकाम इत्यस्मिन् निमित्ते वा; प्रत्यर्थी दण्डभीतनृपान्तरार्पितेन बलेन निर्वाह्ययुद्धव्यवहार इत्यस्मिन् निमित्ते वा श्रेणीबलस्य विनियोगकालः इति ।

मित्रबलकालमाह—**प्रभूतं मे मित्रबलमित्यादि** । अयमर्थः —मम मित्रबलं प्रभूतत्वात् स्थानीये रक्षार्थं यात्रायां पराभियोगार्थं च निवेशयितुं शक्यमित्यस्मिन् निमित्ते; अविप्रकृष्टदेशकालत्वादल्पं प्रयाणं, तूष्णींयुद्धाच्च

**स्थानमासारं वा योधयित्वा पश्चात् स्वबलेन योधयिष्यामि, मित्र-साधारणं वा मे कार्यं, मित्रायत्ता वा मे कार्यसिद्धिः, आसन्नमनुग्राह्यं वा मे मित्रम्, अत्यावापं वास्य साधयिष्यामि इति मित्रबलकालः।**

**प्रभूतं मे शत्रुबलं शत्रुबलेन योधयिष्यामि नगरस्थानम्, अटवीं वा। तत्र मे श्ववराहयोः कलहे चण्डालस्येवान्यतरसिद्धिर्भविष्यति; आसाराणामटवीनां वा कण्टकमर्दनमेतत् करिष्यामि; अत्युपचितं वा कोपभयान्नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्कायाः शत्रुयुद्धावरयुद्धकालश्च। इत्यमित्रबलकालः।**

---

बहुतरं प्रकाशयुद्धम्, अतो नातिक्षयव्ययसम्भावनेत्यस्मिन् निमित्ते; परस्याटविकं बलं वा परस्य मित्रबलं वा तन्नगरावस्थितं स्वमित्रबलेन पूर्वं योधयित्वा पश्चात् स्वबलेन योधयिष्यामीत्यस्मिन् निमित्ते; मम यत् कार्यं तद् मित्रस्यापि साधारणमित्यस्मिन् वा निमित्ते; मम कार्यसिद्धिर्मित्रे आयत्तेत्यस्मिन् वा निमित्ते; मम मित्रमन्तरङ्गं भयोपकर्तव्यमित्यस्मिन् वा निमित्ते; मित्रस्य अत्यावापम् अर्थाद् दूष्यबलं शत्रुबलेन व्यापादयिष्यामीत्यस्मिन् वा निमित्ते; मित्रबलस्य विनियोगकाल इति।

अमित्रबलकालमाह—**प्रभूतं मे शत्रुबलमित्यादि**। अयमर्थः—मम शत्रुबलं दण्डोपनतं प्रभूतं नगरावस्थितं शत्रुबलेन योधयिष्यामि, आटविकं वा शत्रुबलेन योधयिष्यामि, तथोभयोः शत्रुबलयोरायोधनघटनेऽन्यतरवधलक्षणं ममेष्टं सिध्यति यथा श्ववराहाशिनश्चण्डालस्य श्ववराहयोर्युध्यमानयोरन्यतरवध ईप्सितः सिध्यति तद्वद् इत्यस्मिन् वा निमित्ते; मित्रबलानामाटविकानां च स्वकीयानां ये कण्टका अमित्रबलगतास्तेषां मर्दनसाधनमेतद् अमित्रबलोपादानं करिष्यामीत्यस्मिन् वा निमित्ते; अत्यन्तोपचययुक्तं शत्रुबलम् आत्मना नित्यमनधिष्ठितं विकुर्वीतेति शङ्कायां मन्त्रिपुरोहितसेनापतियुवराजादिविकारलक्षणाभ्यन्तरकोपविरहे च सति तत् सर्वदा स्वान्तिक एव वासयितुमर्हमित्यस्मिन् वा निमित्ते; अमित्रबलस्य विनियोगकाल इति। अन्यमप्यमित्रबलकालमाह—**शत्रुयुद्धावरयुद्धकालश्चेति**। शत्रोः स्वशत्रुणा सह यदि प्रवृत्तं युद्धं तर्हि तस्मात् समासात् परो यो युद्धोचितः कालः सोऽपि अमित्रबलकाल इत्यर्थः।

तेनाटवीबलकालो व्याख्यातः ।

मार्गदेशिकं [illegible] शत्रुर्वा बिल्वं बिल्वेन [illegible] प्रसारो हन्तव्यः इत्यटवीबलकालः ।

सैन्यमनेक[illegible]प्रमुक्तमनुक्तं वा विलोपार्थं यदुत्तिष्ठति, तदौत्साहिकम् । भक्तवेतनविलोपविग्रहप्रतापकरं भेद्यं परेषाम्, अभेद्यं तुल्यदेशजातिशिल्पप्रायं संहतं महत् । इति बलोपादानकालाः ।

तेषां कुप्यभृतममित्राटवीबलं विलोपभृतं वा कुर्यात् ।

यान्यमित्रबलकालस्य निमित्तान्युक्तानि तान्येवाटवीबलकालस्यापीत्यतिदेशभङ्ग्योपदिशति —— तेनेत्यादि ।

तत्र विशेषमाह —— मार्गदेशिकमित्यादि । अयमर्थः —— परभूमियानमार्गप्रदर्शनमिति वा, परभूमियुद्धानुरूपायुधशिक्षोपेतमिति वा, अरेर्युद्धे विपर्ये विजिगीषुनियोगात् प्रागेव सिद्धप्रातिपक्ष्यमिति वा, आटविकबलबहुलः शत्रुः अतः स तुल्यजातीयेनाटविकबलेनैव बिल्वफलमिव बिल्वफलेन हन्यतामिति वा, शत्रोस्तृणकाष्ठादिप्रवेशनं स्वल्पमेव विहन्तव्यं तच्चाटविकबलेनैव विघातयितुं शक्यमिति वैतेषु निमित्तेषु आटविकबलस्य विनियोगकालः । इत्थं मौलादीनां षण्णां बलानामुपादानकालो दर्शितः ।

सम्प्रत्यौत्साहिकं नाम [illegible] बलमुपादेयमस्तीत्याह —— सैन्यमनेकमित्यादि । अयमर्थः —— सैन्यम्, अनेकम् एको मुख्यो [illegible] तद्रहितम्, अनेक[illegible] राजानुज्ञातमननुज्ञातं वा, [illegible] समुदितं भवति, तद् [illegible] उत्साहमात्रप्रवृत्तत्वादौत्साहिकसंज्ञम् । तच्च भेद्यमभेद्यमिति द्विप्रकारमित्याह —— भक्तवेतनेत्यादि । भक्तेन प्रत्यहदेयतण्डुलादिना वेतनेन [illegible] हिरण्यादिना च विलोपे शत्रुजनपदलुण्टने विष्टिं दुर्गादिकर्म प्रतापं [illegible] न करोतीति तथाभूतं, परेषां भेद्यं शक्यभेदनम् । अभेद्यं [illegible] तु, तुल्यदेशजातिशिल्पप्रायं देशजातिशिल्पैर्ये तुल्यास्तद्बाहुल्ययुक्तम्, अत एव संहतं नित्योपगतसंघातावस्थम्, अत एव महत् शक्तितः प्रशस्तम् । तस्मादिदमपि यथाकालमुपादेयमित्यर्थात् सिद्धम् । इति बलोपादानकाला इति । व्याख्याता इति शेषः ।

मौलादीनां सप्तानां मध्ये द्वयोर्भृतौ विशेषमाह—तेषामिति । मौलादीनां मध्ये, अमित्राटवीबलम् अमित्रबलम् आटविकबलं च, कुप्यभृतं कुप्यं

**अमित्रस्य वा बलकाले प्रत्युत्पन्ने शत्रुसङ्गृह्णीयात् । अन्यत्र वा प्रेषयेत् । अफलं वा कुर्यात् । विक्षिप्तं वा वासयेत् । काले वाऽतिक्रान्ते विसृजेत् । परस्य चैतद् बलसमुद्दायं [illegible], आत्मनः सम्पादयेत् ।**

**पूर्वंपूर्वं चैषां श्रेयः सन्नाहयितुम् ।**

**तद्भावभावित्वान्नित्यसत्कारानुगमाच्च मौलं भृतबलाच्छ्रेयः ।**

वस्त्राभरणादि [illegible], [illegible] ग्रामीणक [illegible] द्रव्या-त्मकभृति [illegible] कुर्वीत ।

अमित्रबलविषयमेव विशेषान्तरमाह — **अमित्रस्य वेति** । शत्रोः, बलकाले प्रत्युत्पन्ने स्वशत्रुयुद्धप्राप्त्या स्वबलोपादानावसरे प्राप्ते, शत्रुं स्वसाह्याय पूर्वमागतं शत्रुसैन्यम्, अवगृह्णीयात् स्वकार्यस्य सावशेषत्वं वदन् स्ववश एव स्थापयेत् न तु तस्मिन्नवसरे विसृजेदित्यर्थः । अन्यत्र वा प्रेषयेत् स्वस्यैव कार्यान्तरमपदिश्येति शेषः । अफलं वा कुर्यात् पणितसाहाय्यदानप्रतिफलहीनं वा कुर्यात्, शत्रुबलं सद्यो विसृजन्निति शेषः । विक्षिप्तं वा बहुत्र विप्रकीर्णं वा, वासयेत्, सद्यस्समुत्थापनसौकर्यभङ्गार्थमिति शेषः । काले वा अतिक्रान्ते साहाय्यसापेक्षे कालेऽतीते, विसृजेत् । एवं निरूपितं बलोपादानं परकार्यमुपघातेन योजयेत्, आत्मार्थं च परारब्धविघातप्रतिविधानेन सम्पन्नं कुर्याद् विजिगीषुरित्याह — **परस्य चैतदित्यादि** ।

अथ **सन्नाहगुणा** इति सूत्रम् । सन्नाहस्य बलानामुद्यागमस्य गुणाः श्रेयस्त्वभेदाः कथ्यन्त इति **सूत्रार्थः** । उपात्तानां बलानां सन्नाहे शेषतया प्राप्ते तत्तारतम्यस्य निरूपणं प्राप्तावसरमिति प्रकरणसङ्गतिः ।

**पूर्वं पूर्वं चैषामिति** । मौलभृतादीनामौरसादिकान्तानां सप्तानां बलानां मध्ये पूर्वं पूर्वं बलं, सन्नाहयितुं, श्रेयः उत्तरमुत्तरमपेक्ष्य प्रशस्ततरं सन्नाहे कार्यसाधकतरम् ।

तदेव श्रेयस्त्वं मौलादीनां सहेतुकं क्रमेण निरूपयिष्यन् प्रथमं मौलबलस्य निरूपयति — **तद्भावेत्यादि** । तद्भावभावित्वात् तस्य स्वामिनः सत्त्वे सत्त्वाद् अर्थात् तदसत्त्वे चासत्त्वात्, नित्यसत्कारानुगमाच्च स्वामिनो मौलेषु विषये सत्कार आदरः मौलानां स्वामिनि सत्कारोऽनुरागः तस्य नित्यस्य आगमापायरहितस्य अनुगमाद् अविच्छिन्नानुवर्तनाच्च, नित्यसत्कारा-

नित्यानन्तरं क्षिप्रोत्थायि वश्यं च भृतबलं श्रेणीबलाच्छ्रेयः ।

जानपदमेकार्थोपगतं तुल्यसङ्घर्षामर्षसिद्धिलाभं च श्रेणीबलं मित्रबलाच्छ्रेयः । अपरिमितदेशकालमेकार्थोपगमाच्च । मित्रबलममित्रबलाच्छ्रेयः ।

आर्याधिष्ठितममित्रबलमटवीबलाच्छ्रेयः । तदुभयं विलोपार्थम् । अविलोपे व्यसने च ताभ्यामहिभयं स्यात् ।

ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानां तेजःप्राधान्यात् पूर्वंपूर्वं श्रेयः सन्नाहयितुम् इत्याचार्याः ।

---

नुरागाच्चेति पाठे अनुरागस्य स्वशब्दत एवोपदानं बोद्धव्यम्, मौलबलं, भृतबलात्, श्रेयः ।

नित्यानन्तरमिति । सर्वदैव व्यवधानरहितं पार्श्वस्थमित्यर्थः, अत एव क्षिप्रोत्थायि अविलम्बसज्जीभावि, वश्यं च स्वायत्तं च, भृतबलं, श्रेणीबलाद् अर्थादतथाविधस्वभावात्, श्रेयः ।

जानपदमिति । स्वामिजनपदस्थायि, नतु मित्रबलमिवातथाभूतम्, एकार्थोपगतं सहभाग्यैकफलोद्देशोपयातं, तुल्यसङ्घर्षामर्षसिद्धिलाभं यद्विषयस्पर्धाक्रोधवान् स्वामी तद्विषयस्पर्धाक्रोधयुक्तं स्वामितुल्यसिद्धिलाभं च, श्रेणीबलं, मित्रबलाद् अनेवम्भूतस्वभावात्, श्रेयः । नन्वेकार्थोपगतं नाम मित्रबलमस्ति, तच्चैवम्भूतमेवेति कथं तदपेक्षया श्रेणीबलस्य श्रेयस्त्वमिति चेत् तत्राह — अपरिमितदेशकालमित्यादि । श्रेणीबलम्, एकार्थोपगमात् मित्रबलाच्च श्रेयः एकार्थोपगतान्मित्रबलादपि प्रशस्ततरम्, कस्मात्, यस्मात् तद् अपरिमितदेशकाले साहाय्यदाने देशकालप्रतिनियमनिरपेक्षं ननु मित्रबलमिव तत्सापेक्षमित्यर्थः । मित्रबलमित्यादि । स्पष्टार्थम् ।

आर्याधिष्ठितमिति । आर्येण सद्गुणयोगविश्वसनीयेन नायकेनाधिष्ठितम्, अमित्रबलम्, अटवीबलात्, श्रेयः । विनियोगे विशेषमाह — तदुभयमिति । अमित्रबलम् अटवीबलमिति द्वयं, विलोपार्थं विलोपमात्रप्रयोजनकं परविषयपरिलुण्ठनमात्रे विनियोक्तव्यमित्यर्थः । अविलोपे विलोपातिरिक्ते युद्धादौ, व्यसने च स्वविपत्समये च, विनियुज्यमानाभ्यामिति शेषः, ताभ्यां निमित्तभूताभ्याम्, अहिभयं स्वपक्षकलहः, स्यात् ।

अथ बलस्य जातिप्रयुक्तं श्रेयस्त्वमाह — ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानामिति । तेषां मध्ये, तेजःप्राधान्यात् तेज इह न शौर्यं ब्राह्मणे तद-

**नेति कौटल्यः। प्रणिपातेन ब्राह्मणबलं परोऽभिहारयेत्। प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः, बहुलसारं वा वैश्यशूद्रबलमिति ।**

**तस्माद् 'एवंबलः परः, तस्यैतत् प्रतिबलम्' इति बलसमुदानं कुर्यात् ।**

**हस्तियन्त्रशकटगर्भकुन्तप्रासहाटकवेणुशल्यवद्धस्तिबलस्य प्रतिबलम् ।**

**तदेव पाषाणलगुडावरणाङ्कुशकचग्रहणीप्रायं रथबलस्य प्रतिबलम् ।**

---

भावात्, किन्तु धार्मिकत्वकृतज्ञत्वादिगुणसम्पत् । तस्य प्राधान्यात् मुख्यतया गणनीयत्वात्, पूर्वं पूर्वं सन्नाहयितुं श्रेयः । इत्याचार्याः, मन्यन्त इति शेषः ।

तन्मतं निराचष्टे — **नेति कौटल्य** इति । तत्र हेतुमाह — प्रणिपातेन, ब्राह्मणबलं, परः शत्रुः, अभिहारयेत् स्वायत्तीकुर्यात् । किं तर्हि श्रेय इत्याह—**प्रहरणविद्याविनीतं** त्विति । शस्त्रविद्याशिक्षितं, क्षत्रियबलं श्रेयः बहुलसारं वा प्रवीरप्रचुरं वा, वैश्यशूद्रबलं, श्रेयः । इतिशब्दः श्रेयस्त्वनिरूपणसमाप्तौ ।

**प्रतिबलकर्मे**ति सूत्रम् । सामर्थ्यादिना परबलस्यानुरूपं बलं प्रतिबलं तस्य कर्म करणप्रकारोऽभिधीयत इति सूत्रार्थः । सन्नाहगुणवत् प्रतिबलकर्मणोऽपि बलशेषत्वादिह निरूपणसङ्गतिः ।

**तस्मादि**ति । यथोक्तसन्नाहगुणावगमानन्तरमित्यर्थः, एवम्बलः परः एवम्प्रकारबलयुक्तः शत्रुः, तस्यैतत् प्रतिबलं तथाविधस्य शत्रोरिदमनुरूपं प्रतियोधनक्षमं बलम्, इति, ज्ञात्वेति शेषः, बलसमुद्दानं बलस्योपादानं, कुर्यात् ।

तत्र हस्तिबलस्य प्रतिबलमाह — **हस्तियन्त्रशकटगर्भे**त्यादि । हस्तीत्यादिपदे प्रशंसायां मतुप् । प्रशस्तहस्त्यादियुक्तमित्यर्थः । तत्र यन्त्रं जामदग्न्यादि, शकटगर्भः शकटरूपो मध्यः, शकटस्येव गर्भो यस्येति वा, कुन्तः 'हस्ताः सप्तोत्तमः कुन्त' इत्यायुधागाराध्यक्षे व्याख्यातलक्षणः, प्रासश्चतुर्विंशत्यङ्गुलः सर्वलोहमयः, हाटकं त्रिकण्टकं कुन्ततुल्यप्रमाणं, वेणुर्दीर्घप्रतोदः, शल्यः सर्वतोऽयश्शङ्कुमान् लोहदण्डः । एवम्भूतं बलं, हास्तिबलस्य प्रतिबलम् ।

रथबलस्य प्रतिबलमाह — **तदेवे**ति । हस्तिबलप्रतिबलमेव, पाषाणादिप्रायं पाषाणो महाशिला लगुडो ह्रस्वगदा आवरणं प्रसिद्धम् अङ्कुशो दीर्घ-

**तदेवाश्वानां प्रतिबलम् ।**

**वर्मिणो वा हस्तिनोऽश्वा वा वर्मिणः कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गबलस्य प्रतिबलम् ॥**

**एवं बलसमुदानं परसैन्यनिवारणम् ।**
**विभवेन स्वसैन्यानां कुर्यादङ्गविकल्पशः ॥**

इति कौटलीयार्थशास्त्रे अभियास्यत्कर्मणि नवमेऽधिकरणे द्वितीयोऽध्यायः
बलोपादानकालाः सन्नाहगुणाः प्रतिबलकर्म,
आदितस्त्र्यशीतिशततमोऽध्यायः ॥

---

लोहमयः सृणिः कन्यग्रहणी दीर्घफलः साङ्कुशो वेणुः एवम्प्रायं, रथबलस्य प्रतिबलम् ।

अश्वानामाह — **तदेवेति** । तदेव हस्तिप्रतिबलमेव, अश्वानां प्रतिबलम् ।

वर्मवन्तो गजास्तथाभूता अश्वाः, कवचयुक्ता रथाः, आवरणवन्तः पदातयश्च हस्त्यश्वरथपदात्यात्मकस्य चतुरङ्गसैन्यस्य यथाक्रमं सामान्यतः प्रतिबलं भवतीत्याह — **वर्मिणो वा हस्तिन** इत्यादि ॥

**एवं बलसमुदानमिति** । यथोक्तसन्नाहगुणप्रतिबलकर्मप्रकारज्ञानपूर्वं बलानामुपादानं, परसैन्यनिवारणं शत्रुसैन्यप्रतियोधनशक्तं, विभवेन स्वसैन्यानां मौलभृतादिस्वकीयसैन्यसम्पदानुरूप्येण, अङ्गविकल्पशः हस्त्यश्वादिरूपसेनाङ्गबाहुल्याल्पत्वविभागानुरोधेन, कुर्यात् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अभियास्यत्कर्मणि नवमेऽधिकरणे
द्वितीयोऽध्यायः बलोपादानकालाः सन्नाहगुणाः प्रतिबलकर्म,
आदितस्त्र्यशीत्यधिकशततमः ॥

**१४०, १४१. प्रक. पश्चात्कोपचिन्ता, बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च ।**

**अल्पः पश्चात्कोपो महान् पुरस्ताल्लाभः इति । अल्पः पश्चात्कोपो गरीयान् । अल्पं पश्चात्कोपं प्रयातस्य दूष्यामित्राटविका हि सर्वतः समेधयन्ति, प्रकृतिकोपो वा । लब्धमपि च महान्तं पुरस्ताल्लाभम् एवंभूते भृत्यमित्रक्षयव्यया ग्रसन्ते । तस्मात् सहस्रैकीयः पुरस्ताल्लाभस्यायोगः, शतैकीयो वा पश्चात्कोप इति न यायात् । सूचीमुखा ह्यनर्था इति लोकप्रवादः ।**

**पश्चात्कोपचिन्ते**ति सूत्रम् । पुरस्ताल्लाभमुद्दिश्य प्रस्थिते विजिगीषौ पश्चात् पार्ष्णिग्राहाटविकदूष्यादिभिरुत्पाद्यमानो दाहविलोपादिरनर्थः पश्चात्कोपः, तस्य चिन्ता पुरस्ताल्लाभापेक्षया गुरुलघुभावविचारः क्रियत इति सूत्रार्थः । समुदायबलेनापि यानं पश्चात्कोपानर्थस्याभावनिश्चये सत्येव कर्तव्यम् इति तच्चिन्तात्रारभ्यते ।

**अल्प** इत्यादि । गरीयानित्युत्तरवाक्यगतं सामर्थ्यादिहापकृष्य संबध्यते । इतिशब्दानन्तरं च विचार्यत इति शेषः । किं याने सति जायमानः स्वल्पः पश्चात्कोपो गुरुतरत्वेन गणनीयः (पुरस्ताल्लाभमप्युपेक्ष्यावर्जनीयत्वेनापेक्षणीयः) उताहो प्रभूतः पुरस्ताल्लाभो गुरुतरत्वेन गणनीयः (पश्चात्कोपमप्युपेक्ष्योपादेयत्वेनापेक्षणीयः) इति विचार्यत इत्यर्थः । तत्राल्पः पश्चात्कोप एव महतः पुरस्ताल्लाभाद् गुरुतर इति निश्चयमाह — **अल्पः पश्चात्कोप** इत्यादि । तत्र हेतुमाह — **अल्पं पश्चात्कोपमि**त्यादि । स्वल्पमपि हि पश्चात् पार्ष्णिग्राहमात्रेणोत्पादितं कोपं प्रयातस्य विजिगीषोर्दूष्या अमित्रा आटविकाश्च पुरः पार्श्वतश्च वर्धयन्ति, मन्त्रिपुरोहिताद्याभ्यन्तरप्रकृतिकोपो वा तं वर्धयतीत्यर्थः । **लब्धमपि चे**ति । अगणितपश्चात्कोपेन विजिगीषुणा यानं कृत्वार्जितमपि, महान्तं प्रभूतं, पुरस्ताल्लाभम्, एवम्भूते पश्चात्कोपे वृद्धिप्राप्ते सति, भृत्यमित्रक्षयव्ययाः भृत्येषु मित्रेषु च विषये क्षयव्ययाः कोपप्रशमनार्थाः, ग्रसन्ते कबलयन्ति न शेषयन्तीत्यर्थः । एवञ्च सिद्धं प्रभूतस्यापि पुरस्ताल्लाभस्य पश्चात्कोपापेक्षं फल्गुत्वमवच्छिन्दन् यानं प्रतिषेधति — **तस्मादि**ति । यानलब्धप्रभूतसर्वलाभग्रसनात्, पुरस्ताल्लाभस्य आयोगः सिद्धिः, सहस्रैकीयः सहस्रे एकांशमात्रः, पर्यवस्यतीति शेषः । कदासौ सहस्रैकीयत्वकल्पनेत्याह — **शतैकीयो वा पश्चात्कोप** इति ।

**पश्चात्कोपे सामदानभेददण्डान् प्रयुञ्जीत । पुरस्ताल्लाभे सेनापतिं कुमारं वा दण्डचारिणं कुर्वीत ।**

**बलवान् वा राजा पश्चात्कोपावग्रहसमर्थः पुरस्ताल्लाभमादातुं यायात् । अभ्यन्तरकोपशङ्कायां शङ्कितानादाय यायात् ।**

**बाह्यकोपशङ्कायां वा पुत्रदारमेषामभ्यन्तरावग्रहं कृत्वा शून्य-**

---

पश्चात्कोपजन्योऽनर्थः शते एकांशमात्रो यदि गण्यते तदेत्यर्थः । तथाच पश्चात्कोपाद् दशगुणं पुरस्ताल्लाभस्य फल्गुत्वमित्याशयः । **इति न यायादि**ति । उक्ताद्धेतोः पश्चात्कोपशङ्कायां यानं न कुर्यादित्यर्थः । अपरो व्याख्याप्रकारः—एवञ्च सिद्धं पश्चात्कोपस्य गरीयस्त्वं पुरस्ताल्लाभफल्गुत्वावच्छेदपूर्वमवच्छिनत्ति — **तस्मादि**ति । यानलब्धसर्वलाभप्रसनात्, पुरस्ताल्लाभस्य आयोगः सिद्धिः, सहस्रैकीयः, गण्यते चेदिति शेषः । पश्चात्कोपः शतैकीयः, गणनीय इति शेषः । शेषं समानम् । अल्पोऽपि पश्चात्कोपः प्रवृद्धो भवतीत्युपदेशं द्रढयितुं लोकप्रवादं दर्शयति — **सूचीमुखा ही**त्यादि । सूचीमुखाः अत्यल्पारम्भाः अर्थादुत्तरकालबहुलाः ।

पश्चात्कोपसम्भावनायामपि यथा यानमनुष्ठीयेत तथाह — **पश्चात्कोप** इति । तस्मिन् सति, सामदानभेददण्डान् प्रयुञ्जीत प्रयुज्य पश्चात्कोपं शमयेत् स्वयमप्रयात एव सन्नित्यर्थः । कस्तर्हि पुरस्ताल्लाभं प्रति यायादित्यपेक्षायामाह — **पुरस्ताल्लाभ** इति । पुरस्ताल्लाभसाधनार्थे, सेनापतिं, कुमारं वा, दण्डचारिणं कुर्यात् सैन्यप्रणेतारं कृत्वा यानं कारयेदित्यर्थः ।

यदि बहुलबलयोगी राजा तर्हि पश्चात्कोपप्रतिविधानार्थं बलैकदेशं समर्थं नियुज्य पुरस्ताल्लाभग्रहणाय स्वयमेव वा यायादित्याह -- **बलवान् वे**त्यादि । एष पश्चात्कोपे विधिः । अभ्यन्तरकोपे त्वाह — **अभ्यन्तरकोपशङ्कायामि**ति । मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमकोपः अभ्यन्तरकोपः तस्य शङ्कायां, शङ्कितान् येषां कोपः संभावितस्तानमात्यादीन्, आदाय यायात् आत्मना सहैव गृहीत्वा यायात्, स्वसान्निध्यैकावग्राह्यत्वात् तत्कोपस्येत्यभिप्रायः ।

**बाह्यकोपशङ्कायां वे**ति । राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्यकोपो वक्ष्यमाणः तच्छङ्कायां, पुत्रदारम् एषां राष्ट्रमुख्यादीनां पुत्रान् दारांश्च, अभ्यन्तरावग्रहम् अमात्यादिप्रतिबद्धं, कृत्वा, यायादिति वक्ष्यमाणेन संबन्धः । बाह्याभ्यन्तरोभयशङ्कासाधारणमाह — **शून्य-**

**पालमनेकबलवर्गमनेकमुख्यं च स्थापयित्वा यायात् । न वा यायात् । 'अभ्यन्तरकोपो बाह्यकोपात् पापीयान्' इत्युक्तं पुरस्तात् ।**

**मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमकोपोऽभ्यन्तरकोपः । तमात्मदोषत्यागेन परशक्त्यपराधवशेन वा साधयेत् ।**

**महापराधेऽपि पुरोहिते संरोधनमवस्रावणं वा सिद्धिः, युवराजे संरोधनं निग्रहो वा गुणवत्यन्यस्मिन् सति पुत्रे ।**

**ताभ्यां मन्त्रिसेनापती व्याख्यातौ ।**

**पुत्रं भ्रातरमन्यं वा कुल्यं राज्यग्राहिणमुत्साहेन साधयेत् ।**

---

**पालमिति** । शून्यपालं शून्यं शत्र्वभियोगप्रयातस्वामिकं स्थानीयं तत्पालकम् , अनेकबलवर्गं परस्परासंहत्यर्थं मौलभृतादिनानाजातीयसैन्यवर्गयुक्तम् , अनेकमुख्यम् अनेके मुख्याः सैन्याध्यक्षा यस्य तं तथाभूतं, स्थापयित्वा, यायात् । एवं करणेऽप्याभ्यन्तरकोपसाधनमनैकान्तिकमित्यभिप्रायेणाह— **नवा यायादिति** । अभ्यन्तरकोपस्याशक्यप्रतिविधानतामयाने हेतुं द्योतयितुं बाह्यकोपात् पापीयस्त्वं पूर्वोक्तं स्मारयति—**अभ्यन्तरकोप** इत्यादि । 'नवा यायादि'त्येतदनन्तरम् 'अहिभयाद्' इत्यधिकपाठो नयचन्द्रिकाया अभिमत इव प्रतीयते ।

कोऽसावभ्यन्तरकोप इत्याह — **मन्त्रिपुरोहितेत्यादि** । **तमिति** । अभ्यन्तरकोपम् , आत्मदोषत्यागेन स्वदोष आभ्यन्तरकोपस्य कारणं चेत् तत्त्यागेन , साधयेत् प्रतिविदध्यात् । परशक्त्यपराधवशेन वा मन्त्रिपुरोहितादिदोष आभ्यन्तरकोपस्य कारणं चेत् मन्त्रिपुरोहितादीनां शक्त्यपराधानुरोधेन वा , साधयेत् वधबन्धार्थदण्डैः दण्डयेत् ।

पुरोहितादिषु दण्डदानप्रकारमाह — **महापराधेऽपीति** । तथाभूतेऽपि पुरोहिते, संरोधनं बन्धनम् , अवस्रावणं वा देशान्निर्वासनं वा , सिद्धिः दण्डः, नतु वधो ब्राह्मणत्वादित्यभिप्रायः । युवराजे विषये, संरोधनं, निग्रहो वा वधो वा, सिद्धिः । कदायं वधपक्षस्तत्राह — **गुणवत्यन्यस्मिन् सति पुत्र इति** । गुणवत्पुत्रान्तरसद्भावे ।

**ताभ्यामिति** । उक्तदण्डाभ्यां पुरोहितयुवराजाभ्यां यद्वा उक्ताभ्यां संरोधननिग्रहाभ्यां, मन्त्रिसेनापती व्याख्यातौ उक्तदण्डौ वेदितव्यौ, तयोरपि संरोधनम् , अब्राह्मणत्वे निग्रहश्च यथापराधं भवत इत्यभिप्रायः ।

आभ्यन्तरकोपस्य प्रकारान्तराण्याह — **पुत्रमित्यादि** । तं, भ्रातरम्, अन्यं वा कुल्यं स्वकुलीनं, राज्यग्राहिणं राज्यजिघृक्षुम् , उत्साहेन साधयेत्

**उत्साहाभावे गृहीतानुवर्तनसन्धिकर्मभ्यामरिसन्धानभयात् । अन्ये-भ्यस्तद्विधेभ्यो वा भूमिदानैर्विश्वासयेदेनम् । तद्विशिष्टं स्वयंग्राहं दण्डं वा प्रेषयेत्, सामन्ताटविकान् वा । तैर्विगृहीतमतिसन्दध्यात् । अव-रुद्धादानं पारग्रामिकं वा योगमातिष्ठेत् ।**

**एतेन मन्त्रिसेनापती व्याख्यातौ ।**

**मन्त्र्यादिवर्जानामन्तरमात्यानामन्यतमकोपोऽन्तरमात्यकोपः । तत्रापि यथार्हमुपायान् प्रयुञ्जीत ।**

**राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्यकोपः । तमन्योन्येनावग्राहयेत् । अतिदुर्गप्रतिस्तब्धं वा सामन्ताटविकतत्कुली-**

सैनापत्याद्यधिकारनियोजनेन प्रोत्साह्य शमयेत् । उत्साहाभावे उत्साहाशक्तौ, गृहीतानुवर्तनसन्धिकर्मभ्यां तत्परिगृहीतभूम्यादिभोगानुवृत्त्यनुमत्या सन्धि-कर्मणा च, साधयेत्, कुतः, अरिसन्धानभयात् 'असाधने स शत्रुणा सह सन्दध्यादि'ति भयात् । **अन्येभ्यस्तद्विधेभ्यो** वेति । कुल्यान्तरेभ्यः, भूमि-दानैः, एनं विश्वासयेत् । तद्विशिष्टं तेन कुल्येन युक्तं, स्वयङ्ग्राहं दण्डं वा 'येन यल्लभ्यते तत् तस्य स्वम्' इति परिभाष्य युध्यमानं बलं स्वयंग्राह-दण्डः तं वा, प्रेषयेत् क्वचिदभियोगार्थम् । सामन्ताटविकान् वा तद्विशिष्टान्, प्रेषयेत् । तैः तथा प्रेषितैः स्वयंग्राहदण्डसामन्ताटविकैः, विगृहीतं विरोधितं, कृत्वेति शेषः, अतिसन्दध्याद् बन्धयेदित्यर्थः । अतिसन्धानप्रकारमाह — **अवरुद्धादानमिति** । अवरुद्धस्य स्वयंग्राहदण्डादिभिर्बद्धस्य ग्रहणं, पारग्रा-मिकं तदाख्यं, योगं वा दुर्गलम्भोपायोक्तम्, आतिष्ठेद् अनुतिष्ठेत् ।

उक्तं कुल्यस्य साधनोपायं मन्त्रिसेनापत्योरतिदिशति—**एतेनेत्यादि** । इत्थं मन्त्र्यादिचतुष्टयान्यतमकोपलक्षणम् आभ्यन्तरकोपस्तत्परिहारश्चोक्तः ।

अन्तरमात्यकोपलक्षणमाभ्यन्तरकोपस्य प्रकारान्तरं परिभाषते — **म-न्त्र्यादिवर्जानामित्यादि** । मन्त्रिपुरोहितसेनापतियुवराजव्यतिरिक्ताः येऽन्त-रमात्या दौवारिकान्तर्वंशिकादयः तेषामन्यतमस्य कोपोऽन्तरमात्यकोप इति व्यपदिश्यते । तत्प्रशमनेऽपि पूर्वोक्तानुपायान् यथायोगं प्रयुञ्जीतेत्यर्थः ।

अथ बाह्यकोपं तत्परिहारं च निरूपयति — **राष्ट्रमुख्यान्तपालाट-विकदण्डोपनतानामिति** । एषां मध्ये, अन्यतमकोपः, बाह्यकोपः तदाख्यः । तम्, अन्योन्येन अवग्राहयेत् राष्ट्रमुख्यस्य कोपमन्तपालादिभिः अन्तपालादीनां

**नावरुद्धानामन्यतमेनावग्राहयेत् । मित्रेणोपग्राहयेद् वा, यथा नामित्रं गच्छेत् ।**

**अमित्राद् वा सत्री भेदयेदेनम् —'अयं त्वा योगपुरुषं मन्यमानो भर्तर्येव विक्रमयिष्यति, अवाप्तार्थो दण्डचारिणममित्राटविकेषु कृच्छ्रे वा प्रवासे योक्ष्यति, विपुत्रदारमन्ते वा वासयिष्यति, प्रतिहतविक्रमं त्वां भर्तरि पण्यं करिष्यति, त्वया वा सन्धिं कृत्वा भर्तारमेव प्रसादयिष्यति, मित्रमुपकृष्टं वास्य गच्छेद्' इति ।**

**प्रतिपन्नमिष्टाभिप्रायैः पूजयेत् ।**

---

कोपं राष्ट्रमुख्येनेत्येवं परस्परेण शमयेत् । तस्यावग्रहीतुमशक्यतायामाह — **अतिदुर्गप्रतिस्तब्धं** वेति । प्रबलदुर्गावष्टम्भं राष्ट्रमुख्यादिं, सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेन सामन्तेन आटविकेन तत्कुलीनो यस्तदवरुद्धस्तेन वा, अवग्राहयेत बन्धयेत् । अथवा, मित्रेण स्वीयेन, उपग्राहयेत् संगमयेत् प्राप्तसख्यं कारयेत्, किमर्थं, यथा नामित्रं गच्छेद् यथा स शत्रुणा संगतो न स्यादित्येतदर्थमित्यर्थः ।

अमित्रसंगमनवारणस्यान्यमुपायमाह — **अमित्राद्वेति** । सत्री गूढपुरुषः, एनं बाह्यं राष्ट्रमुख्याद्यन्यतमम्, अमित्राद्, भेदयेत् । किमुक्त्वा भेदयेदित्याह — **अयं त्वेत्यादि** । अयमर्थः— यं त्वं गन्तुमिच्छसि सोऽयं त्वां परस्य गूढपुरुषं मन्यमानो 'भर्तर्येव विक्रमस्व' इति चोदयिष्यति, भर्तृविक्रमणदृष्टप्रयोजनः दुष्करे दूरदेशप्रवासकरणीये अमित्राटविकसाधनार्थेऽभियोगे वा त्वां स्वसेनाप्रणेतारं कृत्वा नियोजयिष्यति; तव पुत्रान् दारांश्च स्ववशे स्थापयित्वा तद्विरहितमेव त्वां विषयान्ते वा वासयिष्यति; दृष्टभर्तृविक्रमप्रतिघातं त्वां स्वामिने विक्रेष्यते; त्वामेव वा पणस्थानीयं स्वामिनेऽर्पयित्वा सन्धिकरणेन स्वामिनं प्रसादयिष्यति; स्वामिन एव वा केनचिन्मित्रेण सह त्वां पणीकृत्य सन्धिं कारयिष्यति; इत्युक्त्वेति ।

**प्रतिपन्नमिति** । अङ्गीकृतभेदोपदेशम्, इष्टाभिप्रायैः तदीप्सितार्थलाभैः पूजयेत् ।

अप्रतिपन्नस्य शत्रुसंगमविघटनोपायमाह — **अप्रतिपन्नस्येति** । अनङ्गीकृतभेदोपदेशस्य, संश्रयं भेदयेत संश्रयभेदनेन तत्संगमं विघटयेदित्यर्थः ।

**अप्रतिपन्नस्य संश्रयं भेदयेद्—असौ ते योगपुरुषः प्रणिहितः इति ।**

**सत्री चैनमभित्यक्तशासनैर्घातयेद्, गूढपुरुषैर्वा । सहप्रस्थायिनो वास्य प्रवीरपुरुषान् यथाभिप्रायकरणेनावाहयेत् । तेन प्रणिहितान् सत्री ब्रूयात् । इति सिद्धिः । परस्य चैनान् कोपानुत्थापयेत् । आत्मनश्च शमयेत् ।**

**यः कोपं कर्तुं शमयितुं वा शक्तः, तत्रोपजापः कार्यः । यः सत्यसन्धः शक्तः कर्मणि फलावाप्तौ चानुग्रहीतुं विनिपाते च त्रातुं, तत्र प्रतिजापः कार्यः । तर्कयितव्यश्च — कल्याणबुद्धिरुताहो शठ इति ।**

---

किमित्युक्त्वेत्याह — **असौ ते योगपुरुषः प्रणिहित इतीति** । यस्त्वां संश्रयितुमुपस्थितः, स परप्रेषितो गूढपुरुष इत्युक्त्वा ।

**सत्री चेति** । स च, एनम् अप्रतिपन्नं बाह्यं परसंश्रयिणम्, अभित्यक्तशासनैः वध्यतया निश्चिताः पुरुषा अभित्यक्ताः तद्धस्तप्रेषितैर्गूढलेखैः 'अमित्रो गूढं त्वया हन्यताम्' इत्येतादृशार्थप्रतिपादकैः, घातयेत्, अर्थादमित्रेणैव विदिततल्लेखार्थेन । गूढपुरुषैर्वा घातयेद्, अर्थाद् विजिगीषुप्रयुक्तैः । **सहप्रस्थायिनो वास्येति** । ये शत्रुं संश्रयितुं बाह्येन सह प्रस्थिताः तान्, प्रवीरपुरुषान्, यथाभिप्रायकरणेन तदिष्टार्थप्रदानेन, आवाहयेत् स्वपक्षमानयेत् । वाहयेदिति पाठेऽप्ययमेवार्थः । सहप्रस्थायिनश्चेदावाहयितुमशक्यास्तदा किं कर्तव्यमित्याह — **तेन प्रणिहितान् सत्री ब्रूयादिति** । 'ते प्रवीरपुरुषा विजिगीषुणा त्वां हन्तुं प्रणिहिता गूढपुरुषाः' इति सत्री अमित्रं बोधयेदित्यर्थः । **इति सिद्धिरिति** । अनेन प्रकारेण कोपप्रतीकार इत्यर्थः । तानिमान् आभ्यन्तरबाह्यकोपान् शत्रुपक्षे जनयेत्, स्वपक्षे च शत्रुजनितान् प्रतिकुर्यादित्याह— **परस्य चैनानित्यादि** ।

य एष उपजापः कोपोत्पादार्थो भेदः स कुत्र प्रयोक्तव्य इत्याकाङ्क्षायामाह — **यः कोपमित्यादि** । कोपोत्पादनप्रशमनयोरुभयोरपि यः शक्तः तस्मिन्नेवोपजापः कर्तव्यः । उपजापाभ्युपगमलक्षणः प्रतिजापः कुत्र कर्तव्य इत्याह — **य इत्यादि** । यः सत्यसन्धः विश्वसनीयः, कर्मणि क्रियानुष्ठाने, फलावाप्तौ अनुग्रहीतुं च प्रतिजापयितुरुपकर्तुं च, विनिपाते त्रातुं च विपत्तौ रक्षितुं च, शक्तः, तत्र प्रतिजापः कार्यः । उपजपितुर्वञ्चकत्वसम्भवात् स प्रतिजपित्रा 'वञ्चको नवे'ति परीक्षणीय इत्याह— **तर्कयितव्यश्चेत्यादि** ।

**शठो हि बाह्योऽभ्यन्तरमेवमुपजपति — भर्तारं चेद्धत्वा मां प्रतिपादयिष्यति शत्रुवधो भूमिलाभश्च मे द्विविधो लाभो भविष्यति, अथवा शत्रुरेनमाहनिष्यति हतबन्धुपक्षस्तुल्यदोपदण्डेन वा उद्विग्नश्च, मे भूयान् कृत्यपक्षो भविष्यति तद्विधे वान्यस्मिन्नपि शङ्कितो भविष्यति अन्यमन्यं चास्य मुख्यमभित्यक्तशासनेन घातयिष्यामि इति ।**

**अभ्यन्तरो वा शठो बाह्यमेवमुपजपति — कोशमस्य हरिष्यामि, दण्डं वास्य हनिष्यामि, दुष्टं वा भर्तारमनेन घातयिष्यामि, प्रतिपन्नं बाह्यममित्राटविकेषु विक्रमयिष्यामि चक्रमस्य सज्यतां वैरमस्य प्रसज्यतां ततः स्वाधीनो मे भविष्यति, ततो भर्तारमेव प्रसादयिष्यामि, स्वयं वा राज्यं ग्रहीष्यामि, बद्ध्वा वा बाह्यभूमिं भर्तृभूमिं चोभयमवाप्स्यामि, विरुद्धं वावाहयित्वा बाह्यं विश्वस्तं घातयिष्यामि शून्यं वास्य मूलं हरिष्यामि इति ।**

उपजपिता नाम बाह्यो वाभ्यन्तरमुपजपति अभ्यन्तरो वा बाह्यम् । तत्र बाह्यस्योपजपितुः शठस्याभिसन्धीनाह— **शठो हि बाह्य** इत्यादि । स हि, अभ्यन्तरं वक्ष्यमाणैरभिसन्धिप्रकारैरुपजपति । तानाह —**भर्तारमि**त्यादि । अन्तिम इतिशब्दस्त्रिषु सम्बध्यते । तेनायमर्थः—मयोपजपितोऽभ्यन्तरो मन्त्री स्वामिनं हत्वा तत्स्थाने मां निवेशयिष्यति चेत्, शत्रुवधो भूमिलाभश्चेति द्विप्रकारो लाभो मे भविष्यतीति ; अथवा शत्रुश्चेद् मन्त्रिणं हनिष्यति, तर्हि हतस्य मन्त्रिणो बन्धुवर्गः मन्त्रिवधेनोद्विग्नो मन्त्रितुल्यदोषः क्रुद्धलुब्धादिवर्गश्चेत्येवं कृत्यपक्षो मे बहुतरः सिध्येदिति ; विजिगीषुस्तज्जातीयेऽन्यस्मिन्नपि अविश्वस्तो भविष्यति ; तेनान्यमन्यं च विजिगीषोर्मुख्यम् अभित्यक्तहस्तद्वारप्रेषितेन कूटलेखेन विजिगीषुवधबन्धादिकर्तव्यतोपदेशकेन घातयिष्यामीति ।

अभ्यन्तरस्योपजपितुः शठस्याभिसन्धीनाह — **अभ्यन्तरो वा शठ** इत्यादि । अयमर्थः—कोशमस्य बाह्यस्य हरिष्यामि; अथवा बलमस्य हनिष्यामि ; अथवा दुष्टं मे भर्तारमनेन घातयिष्यामि; अथवा प्रतिपन्नमद्भर्तृघाताभ्युपगमं बाह्यं प्रथममभित्रेष्वाटविकेषु च विक्रान्तं कारयित्वा तैः सहास्य सैन्ये सक्ते प्रकर्षेण रूढे चास्य वैरे ममायं विधेयो भविष्यति, तेन मयि भर्तृप्रसादो भविष्यति ; अथवा स्वयं बाह्यस्य विधेयीभूतस्य राज्यं ग्रही-

**कल्याणबुद्धिस्तु सहजीव्यर्थमुपजपति । कल्याणबुद्धिना सन्दधीत । शठं 'तथा' इति प्रतिगृह्यातिसन्दध्यात् । इति ॥**

**एवमुपलभ्य,**

**परे परेभ्यः स्वे स्वेभ्यः स्वे परेभ्यः स्वतः परे ।**
**रक्ष्याः स्वेभ्यः परेभ्यश्च नित्यमात्मा विपश्चिता ॥**

इति कौटलीयार्थशास्त्रे अभियास्यत्कर्मणि नवमाधिकरणे तृतीयोऽध्यायः
पश्चात्कोपचिन्ता, बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च,
आदितश्चतुर्विंशतिशतः ॥

---

ष्यामि; बद्ध्वा वा बाह्यं तस्य भूमिं भर्तुर्भूमिं चेत्युभयं शासनीयमवाप्स्यामि; अथवास्य विरोधिनं संक्रमय्यानाय्य तेन बाह्यं विश्वस्तं घातयिष्यामि; अथवा बाह्यस्य स्थानीयमन्याभियोगव्यासङ्गासन्निहितस्वामिकं हरिष्यामि; इत्येतैरभिसन्धिप्रकारैः शठोऽभ्यन्तरो बाह्यमुपजपेदिति ।

**कल्याणबुद्धिस्त्विति** । अशठस्तु, सहजीवी संश्लिष्यैव जीवितुं शीलवान् न तु विरुध्य, अत एव अर्थं हितम्, उपजपति, नानर्थम् । ततश्च कल्याणबुद्धिना सह, सन्दधीत सन्धिं कुर्यात् । शठं, तथेति प्रतिगृह्य 'यथा त्वयोच्यते तथा करोमि' इति तद्वचनमङ्गीकृत्य, अतिसन्दध्याद् वञ्चयेत । इतिशब्द उपायोपदेशसमाप्तौ ॥

**एवमुपलभ्येति** वक्ष्यमाणश्लोकान्वयि ।

**परे** इति । विपश्चिता कार्यतत्त्वविदुषा विजिगीषुणा, एवम् उपलभ्य शठत्वकल्याणबुद्धित्वे निश्चित्य, परे परेभ्यो रक्ष्याः शठत्वादिनात्मविदिताः परे परेभ्यो न प्रकाश्याः । स्वे स्वीयास्तथात्मविदिताः, स्वेभ्यो रक्ष्याः न प्रकाश्याः । स्वे तथात्मविदिताः, परेभ्यो रक्ष्याः न प्रकाश्याः । परे तथाविदिताः, स्वतः स्वेभ्यः, रक्ष्याः न प्रकाश्याः । आत्मा स्वेभ्यः परेभ्यश्च नित्यं रक्ष्यः आत्मनः परान् स्वांश्च प्रति योऽभिप्रायोऽनुकूलः प्रतिकूलो वा स स्वेभ्यः परेभ्यश्च कदापि न प्रकाश्य इत्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायामभियास्यत्कर्मणि नवमेऽधिकरणे तृतीयोऽध्यायः
पश्चात्कोपचिन्ता बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च,
आदितश्चतुर्विंशत्यधिकशततमः ॥

---

१४२. प्रक. क्षयव्ययलाभविपरिमर्शः।

**युग्यपुरुषापचयः क्षयः। हिरण्यधान्यापचयो व्ययः।**

**ताभ्यां बहुगुणविशिष्टे लाभे यायात्।**

**आदेयः, प्रत्यादेयः, प्रसादकः, प्रकोपको, ह्रस्वकालः, तनुक्षयः, अल्पव्ययो, महान्, वृद्ध्युदयः, कल्यो, धर्म्यः, पुरोगश्चेति लाभसम्पत्।**

**सुप्राप्यानुपाल्यः परेषामप्रत्यादेय** इति आदेयः।

**विपर्यये प्रत्यादेयः। तमाददानस्तत्रस्थो वा विनाशं प्राप्नोति।**

**यदि वा पश्येत् — 'प्रत्यादेयमादाय कोशदण्डनिचयरक्षाविधानान्यवस्रावयिष्यामि, खनिद्रव्यहस्तिवनसेतुबन्धवणिक्पथानुद्धृत-**

**क्षयव्ययलाभविपरिमर्श** इति सूत्रम्। युग्यपुरुषापचयः क्षयः धान्यहिरण्यापचयो व्ययः लाभो यानफलं भूम्यादिप्राप्तिः तेषां विपरिमर्शः गौरवलाघवविचारः क्रियत इति सूत्रार्थः। यानहेतुकयोर्बाह्याभ्यन्तरकोपयोर्निरूपणानन्तरं क्षयव्ययावपि तत्त्वाविशेषान्निरूपणीयतया प्राप्ताविति सङ्गतिः।

प्रथमं क्षयव्यययोः स्वरूपमाह — **युग्यपुरुषापचय** इति। युग्यानि वाहनानि पुरुषाः कर्मकरादयः तेषामपचयः, क्षयः। हिरण्यधान्यापचयः हिरण्यं धनादि धान्यं व्रीह्यादि तयोरपचयः, व्ययः।

**ताभ्यामिति**। क्षयव्ययापेक्षया, बहुगुणविशिष्टे आदेयत्वप्रत्यादेयत्वादिभिर्द्वादशभिर्गुणैर्युक्ते, लाभे सति, यायात्।

तान् गुणानुद्दिशति — **आदेय** इत्यादि। इति लाभसम्पत्, उक्तद्वादशप्रकारो लाभस्य गुण इत्यर्थः।

आदेयादिषु लक्षणीयेषु प्रथममादेयं लक्षयति — **सुप्राप्यानुपाल्य** इत्यादि। यः सुखेन प्राप्तुं शक्यः, प्राप्तश्च सुखेनानुपालयितुं शक्यः, कालान्तरे परैः प्रत्यादातुमशक्यश्च, स आदेयशब्दित इत्यर्थः।

प्रत्यादेयं लक्षयति — **विपर्यय** इत्यादि। सुप्राप्यानुपाल्य एव परैः प्रत्यादातुं शक्यः प्रत्यादेय इत्यर्थः। **तमिति**। प्रत्यादेयं भूम्यादिलाभम् आददानः, तत्रस्थो वा तत्रैव स्थित्वोपजीवन् वा, विनाशं प्राप्नोति।

विषयविशेषे तमप्याददीतेत्याह — **यदि वा पश्येदित्यादि**। अयमर्थः — प्रत्यादेये गृहीते तेन तल्लाभनाशात् परस्य कोशं दण्डं व्रीह्यादिसञ्चयं दुर्गप्राकारादिरक्षाविधानं च हीनमापादयिष्यामि, तेन परस्य खनिं

सारान करिष्यामिः प्रकृतीरस्य कर्शयिष्यामिः आवाहयिष्यामि, आयोगेनाराधयिष्यामि वा, ताः परः प्रतियोगेन कोपयिष्यति; प्रतिपक्षे वास्य पण्यमेनं करिष्यामिः मित्रमवरुद्धं वास्य प्रतिपादयिष्यामिः मित्रस्य स्वस्य वा देशस्य पीडामत्रस्थस्तस्करेभ्यः परेभ्यश्च प्रतिकरिष्यामिः मित्रमाश्रयं वास्य वैगुण्यं ग्राहयिष्यामि, तदमित्रविरक्तं तत्कुलीनं प्रतिपत्स्यतेः सत्कृत्य वास्मै भूमिं दास्यामि, इति, संहितसमुत्थितं मित्रं मे चिराय भविष्यति' इति प्रत्यादेयमपि लाभमाददीत । इत्यादेयप्रत्यादेयौ व्याख्यातौ ।

अधार्मिकाद् धार्मिकस्य लाभो लभ्यमानः स्वेषां परेषां च प्रसादको भवति । विपरीतः प्रकोपक इति । मन्त्रिणामुपदेशाल्लाभोऽलभ्य-

---

द्रव्यवनं हस्तिवनं सेतुबन्धं वणिक्पथं चोद्धृतसारं कृत्वा क्षयप्राप्तं करिष्यामि, तेन परस्य प्रकृतीस्तदुपजीविनीरुपजीव्यहान्या कर्शयिष्यामिः लब्धभूमावेव वा तत्फलभोगार्थं परस्य प्रकृतीरानीय वासयिष्यामि, आयोगेन च तदीयसर्वोपचयभोगाभ्यनुज्ञानलक्षणेन ताः प्रीणयिष्यामि, परो मद्गृहीतभूमिप्रत्यादानानन्तरं मद्विहितानुग्रहविपरीताचरणलक्षणेन प्रातियोगेन प्रकृतिकोपमात्मानर्थावहं जनयिष्यति: परस्य प्रतिपक्षाय वा परं लाभापहारक्षीणं द्रव्यग्रहणेनार्पयिष्यामि, अस्य लाभापहारक्षीणस्य परस्य स्थाने स्वमित्रम् अवरुद्धं पुत्रादिं वा निवेशयिष्यामि; स्वमित्रस्य स्वस्य वा देशस्य चोरेभ्यः शत्रुभ्यश्च जातां पीडां लब्धभूमिस्थितो भूत्वा प्रतिकर्तुं शक्ष्यामि; अथवा परस्य मित्रम् आश्रयभूतं मध्यमं वा लब्धभूमिस्थितो भूत्वा परस्य युक्तकरग्राहित्वादिगुणहीनतां प्रजापीडकत्वं च बोधयिष्यामि, तथा बोधितं च तत् परस्य मित्रं परस्मिन् विरक्तं भूत्वा परस्य कुलीनं पुत्रादिमवरुद्धं तद्राज्यग्राहित्वेन प्रतिपत्स्यते; गृहीतामेव वा परस्य भूमिं परस्य कन्यादानादिसत्कारपूर्वं दास्यामि; इत्यनेनप्रकारेण सत्कृत्य भूमिप्रत्यर्पणलक्षणेन कृतसन्धिकं मया सह सम्भूय व्यापूतं मम चिरस्थायि मित्रं भविष्यति; इत्येवंरूपान् हेतून् यदि पश्येत् तर्हि प्रत्यादेयमपि लाभं गृह्णीयादिति । इत्यादेयप्रत्यादेयावित्यादि । अनेन प्रकारेणादेयानादेयौ लाभौ भावाभावरूपतया सह निरूपितावित्यर्थः ।

प्रसादकप्रकोपकौ निरूपयति — **अधार्मिकादित्यादि** । अधार्मिकसकाशाद् धार्मिकेण लभ्यमानो लाभः धार्मिकपक्ष्याणामधार्मिकपक्ष्याणां चोभ-

**मानः कोपको भवति, 'अयमस्माभिः क्षयव्ययौ ग्राहितः' इति। दूष्यमन्त्रिणामनादराल्लाभो लभ्यमानः कोपको भवति, 'सिद्धार्थोऽयमस्मान् विनाशयिष्यति' इति। विपरीतः प्रसादकः। इति प्रसादककोपकौ व्याख्यातौ।**

**गमनमात्रसाध्यत्वाद्ध्रस्वकालः।**

**मन्त्रसाध्यत्वात् तनुक्षयः।**

**भक्तमात्रव्ययत्वादल्पव्ययः।**

**तदात्ववैपुल्यान्महान्।**

**अर्थानुबन्धकत्वाद् वृद्ध्युदयः।**

येषां प्रीतिं जनयतीति स प्रसादक उच्यते। उक्तवैपरीत्येन धार्मिकसकाशादधार्मिकेण लभ्यमानो लाभ उभयेषामपि द्वेषं जनयतीति स प्रकोपक इत्युच्यत इत्यर्थः। कोपकस्यान्यौ प्रकारावाह — **मन्त्रिणामि**त्यादि। मन्त्र्युपदेशानुसारेण कस्यचिल्लाभस्यार्थे समुद्यमे कृतेऽप्यलब्धः स लाभः स्वामिनः प्रद्वेषकरो भवति, 'अयमस्माभिर्वृथा क्षयव्ययौ ग्राहित' इति मन्त्रिणां शङ्काजनकश्च भवतीत्यर्थः। **दूष्यमन्त्रिणामि**ति। दूष्या ये मन्त्रिणस्तेषाम्, अनादराद् अवज्ञानाद्, लाभः लभ्यमानः, कोपकः शङ्काकरो भवति। शङ्कायाः स्वरूपमाह — **सिद्धार्थोऽयमि**त्यादि। **विपरीतः प्रसादक** इति। मन्त्र्युपदेशाल्लभ्यमानो लाभः, दूष्यमन्त्रिणामनादरादलभ्यमानो लाभश्च, प्रसादजनको भवति। **इति प्रसादके**त्यादि। व्याख्यातौ पूर्ववत् सह निरूपितौ।

अथ लाभस्याभिसन्धियोग्यत्वप्रयोजकान् ह्रस्वकालत्वादिगुणानाह — **गमनमात्रसाध्यत्वादि**त्यादि। अचिरव्यापारनिष्पाद्यो लाभो ह्रस्वकाल इत्यर्थः।

**मन्त्रसाध्यत्वादि**ति। मन्त्रेण उपजापादिना प्रधानभूतेनाल्पयुद्धवत्तयाल्पयुग्यपुरुषापचयवता साध्यत्वात्, तनुक्षयो नाम लाभः।

**भक्तमात्रव्ययत्वादि**त्यादि। धनग्रहणानपेक्षभक्तदानमात्रतृप्तसैन्यसाध्योऽल्पव्ययो नाम।

**तदात्ववैपुल्यादि**त्यादि। तत्काल एव प्रचुरतया लभ्यमानो लाभो महान् नाम।

**अर्थानुबन्धकत्वादि**त्यादि। तत्काललभ्यार्थानुबन्ध्युत्तरकाललभ्यार्थको वृद्ध्युदयो नाम।

निराबाधकत्वात् कल्यः ।

प्रकाशोपादानाद् धर्म्यः ।

सामवायिकानामनिर्बन्धगामित्वात् पुरोग इति ।

तुल्ये लाभे, देशकालौ, शक्त्युपायौ, प्रियाप्रिये, जवाजवौ सामीप्यविप्रकर्षौ, तदात्वानुबन्धौ सारत्वसातत्ये बाहुल्यबाहुगुण्ये च विमृश्य बहुगुणयुक्तं लाभमाददीत ।

लाभविघ्नाः — कामः कोपः साध्वसं कारुण्यं ह्रीः अनार्यभावो मानः सानुक्रोशता परलोकापेक्षा धार्मिकत्वम् अत्याशित्वं

---

निराबाधकत्वादित्यादि । उपद्रवाभावान्निरुपद्रवः कल्यः ।

प्रकाशोपादानाद् धर्म्य इति । प्रजानां सन्निधाने प्रकाशयुद्धेन तेन तेन विपर्ययजितो लाभो धर्मानुगतत्वाद् धर्म्यः ।

सामवायिकानामित्यादि । समवायिभिः समुदायभागप्रकर्षानियमोपस्थितः प्रकृष्टो लाभः पुरोग इत्युच्यते ।

अथ लाभसाम्ये तदुत्कर्षापादकानि निमित्तान्याह — तुल्य इत्यादि । देशकालादिनिमित्तप्रयोजनतया अस्मिन् लाभे बहुगुणयोगं पश्यन् तमुपाददीतेत्यर्थः । तत्र देशश्च कालश्च । सर्वस्मिन्नेव द्रव्ये गुणविशेषाधानहेतुत्वं प्रसिद्धम् । शक्तिषु मन्त्रप्रभावोत्साहलक्षणासु पूर्वपूर्वसाध्ये लाभ उत्तरोत्तरसाध्यात् प्रशस्तः । तथा सामादिषु । हिरण्यलाभः सर्वप्रियत्वाद् बहुगुणो, न तथान्यलाभः । जवाजवौ सिद्धिशैघ्र्यविलम्बौ, शीघ्रसिद्धिको हि विलम्बसिद्धिकात् प्रशस्तः । स्वभूमिप्रत्यासन्ना भूमिर्विप्रकृष्टभूम्यपेक्षया श्रेयसीति सामीप्यविप्रकर्षौ गुणप्रयोजकौ । तत्कालमात्रपर्यवसायिनो लाभादुत्तरकालानुबन्धयुक्तः प्रशस्त इति तदात्वानुबन्धौ गुणहेतू । सारत्वसातत्ये श्रेयस्त्वप्रयोजके, यथा रत्नादेः सारत्वं लवणादेः सातत्यम् । बाहुल्यं संख्यातः परिमाणतश्च बहुत्वं बाहुगुण्यं संख्यायबाहुल्येऽपि बहुगुणयोगः ते अपि विमर्शनीये श्रेयस्त्वहेतुत्वात् ।

लाभविघ्नानाह — काम इत्यादि । कामः स्त्रीप्रसङ्गः स खलूत्साहप्रतिपन्थित्वाल्लाभं विहन्ति । कोपः रभसप्रवृत्तिहेतुत्वात् । साध्वसम् अप्रगल्भत्वं शत्रुमित्रादिषु यथार्हव्यवहारविरोधित्वात् । कारुण्यं बहुप्राणिवधशङ्कया युद्धप्रवृत्तिप्रतिबन्धकत्वात् । ह्रीः लज्जा सापराधेऽपि सान्त्ववादिन्यभियोगप्रति-

**दैन्यम् असूया हस्तगतावमानो दौरात्मिकमविश्वासो भयमनिकारः शीतोष्णवर्षाणामाक्षम्यं मङ्गलतिथिनक्षत्रेष्टित्वमिति ॥**

**नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते ।**
**अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ॥**
**साधनाः प्राप्नुवन्त्यर्थान् नरा यत्नशतैरपि ।**
**अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव ॥**

इति कौटिलीयेऽर्थशास्त्रे अभियास्यत्कर्मणि नवमेऽधिकरणे
चतुर्थोऽध्यायः क्षयव्ययलाभविपरिमर्शः,
आदितः पञ्चविंशशततमः ।

---

बन्धात् । अनार्यभावः नृशंसत्वं विश्वासघातादिप्रवर्तकत्वात् । मानः 'अहं महानि'त्यहङ्कारः सहायविघटकत्वात् । सानुक्रोशता अनुक्रोश उपहारार्पणनिमित्ता दया तैक्ष्ण्यविषये मृदुवृत्तिप्रयोजकत्वात् । परलोकापेक्षा परलोकविघातकपापप्रयोगशङ्कया द्रोहादिविलोपादिवैमुख्यापादकत्वात् । धार्मिकत्वं विश्वस्तवञ्चकत्वम् । अत्याशित्वं न्याय्यप्राप्त्यतिकाङ्क्षकत्वम् । दैन्यम् अधमेषु साह्ययाच्ञा । असूया दृष्टगुणेषु मन्त्र्यमात्यप्रभृतिषु दोषारोपः । हस्तगतावमानः हस्तप्राप्तस्यार्थस्यावज्ञानम् । दौरात्मिकं पौरजानपदसाधारणपीडोत्पादकत्वम् । अविश्वासः विश्वसनीयेऽपि विश्वासाकरणम् । भयम् अभियोगे पराजयशङ्का । परस्य निरस्क्रिया निकारः तदकरणम् अनिकारः । अर्थानिकार इति पाठे सिद्धिप्राक्काले परापतितविनिपातप्रतिक्रियाननुष्ठानम् । शीतोष्णवर्षाणाम् आक्षम्यं शीतोष्णवर्षासहिष्णुत्वम् । मङ्गलतिथिनक्षत्रेष्टित्वं कार्यारम्भानुकूलशोभनतिथिनक्षत्रापेक्षकत्वम् । दाम्भिकत्वादीनां लाभविघातकत्वं सहायविघटकत्वप्रवृत्तिप्रतिबन्धकत्वादिना यथायथं बोद्धव्यम् ॥

विघ्नेषु विंशतावुक्तेषु अन्तिमस्यातिप्रातिकूल्यकार्यविपत्तिं वक्तुमाह —

**नक्षत्रमिति** । नक्षत्रम् अतिपृच्छन्तम् अतिमात्रं पृच्छन्तं गृहपटलप्रज्वलितवह्निप्रशमनजातीये सद्यःकरणीयेऽपि कार्ये 'नक्षत्रं कार्यारम्भानुकूलं न वे'त्यनुयुञ्जानं, बालम् अप्राज्ञम्, अर्थः प्रवृत्तिफलम्, अतिवर्तते अतिक्रम्य गच्छति । कुतः, हि यतः, अर्थस्य साध्यस्य फलस्य, अर्थः धनादि, नक्षत्रम् । इह नक्षत्रशब्देन सिद्ध्युपकरणं लक्ष्यते साधनं भवतीत्यर्थः । तारकाः किं करिष्यन्ति तत्रासाधिका इत्यर्थः ।

लाभसाधनेषु धनस्य मुख्यत्वमाविष्कर्तुमाह — **नाधना** इति । अधनाः धनरूपसाधनरहिताः, नराः यत्नशतैरपि कृतैः, अर्थान् शत्रुजयादिरूपान्, न प्राप्नुवन्ति । अर्थाभावेऽर्थासिद्धिलक्षणं व्यतिरेकमुक्त्वा तत्सत्त्वे तत्सिद्धिलक्षणमन्वयमाह—**अर्थैरि**ति । तैः, अर्थाः प्रबध्यन्ते प्रकर्षेण साध्यतया संबद्धा वर्तन्ते । तत्रोपमामाह—**गजाः प्रतिगजैरिवे**ति । यथा गजाः प्रतिगजैः साधनभूतैः साध्यतया संबद्धास्तद्वत् । नाधना इत्यस्य स्थाने साधना इति पाठे तु मत्वर्थलक्षणया धनादिसाधनवन्त इत्यर्थं कल्पयित्वा त एव यत्नशतैरपि कृतैरर्थान प्राप्नुवन्ति, न तु धनादिसाधनरहिता इति कथञ्चिद् व्याख्येयम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायामभियास्यत्कर्माणि नवमेऽधिकरणे
चतुर्थोऽध्यायः क्षयव्ययलाभविपरिमर्शः,
आदितः पञ्चविंशत्यधिकशततमः ॥

## १४३. प्रक. बाह्याभ्यन्तराश्चापदः ।

**सन्ध्यादीनामयथोद्देशावस्थापनमपनयः । तस्मादापदः सम्भवन्ति ।**

**बाह्योत्पत्तिरभ्यन्तरप्रतिजापा । अभ्यन्तरोत्पत्तिर्बाह्यप्रतिजापा । बाह्योत्पत्तिर्बाह्यप्रतिजापा । अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजापा । इत्यापदः ।**

**यत्र बाह्या अभ्यन्तरानुपजपन्ति, अभ्यन्तरा वा बाह्यान् तत्रोभययोगे प्रतिजपतः सिद्धिर्विशेषवती । सुव्याजा हि प्रतिजपितारो**

**बाह्याभ्यन्तराश्चापद्** इति सूत्रम् । बाह्याः राष्ट्रमुख्यान्तपालादिप्रभवाः अभ्यन्तरा मन्त्रिपुरोहितादिप्रभवाः इत्युभयविधा आपदः चकारात् तत्प्रतिविधानं चोच्यन्त इति सूत्रार्थः ।

तासां कारणमाह — **सन्ध्यादीनामिति** । सन्धिविग्रहादीनां षण्णां गुणानाम्, अयथोद्देशावस्थापनं स्वस्वविषयातिक्रमेण प्रयोगः, अपनयः इति नाम्नोच्यत इति शेषः । तस्माद् अपनयाद्, आपदः, संभवन्ति ।

बाह्याभ्यन्तरयोरापदोरुपजपितृप्रतिजपितृभेदात् प्रत्येकं द्वैविध्यं दर्शयन्नापदां चातुर्विध्यमाह — **बाह्योत्पत्तिरिति** । बाह्याद् राष्ट्रमुख्यादेरुपजापकाद् उत्पत्तिर्यस्याः सा तथाभूता अभ्यन्तरप्रतिजापा अभ्यन्तरो मन्त्र्यादिः प्रतिजापः प्रतिजपिता यथोपजापानुष्ठानाभ्युपगन्ता यस्याः सा तथाभूता विपत् प्रथमा । अभ्यन्तरोत्पत्तिः मन्त्र्याद्यभ्यन्तरोपजपितृका, बाह्यप्रतिजापा राष्ट्रमुख्यान्तपालादिप्रतिजपितृका द्वितीया । **बाह्योत्पत्तिर्बाह्यप्रतिजापेति** । बाह्योपजपितृका बाह्यप्रतिजपितृका तृतीया । अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजपितृकेति चतुर्थी । **इत्यापद** इति । उभयजातीयोपजपितृप्रतिजपितृके द्वे एकजातीयोपजपितृप्रतिजपितृके द्वे इत्याहत्य चतूरूपा आपद इत्यर्थः ।

तासूभययोगवत्योराद्ययोर्विपदोः परिहारार्थम् उपजपितृसमाधानात् प्रतिजपितुः समाधानं प्रशस्तमित्याह — **यत्र बाह्या** इत्यादि । सिद्धिः सामदानादिना समाधानम् । विशेषवती श्रेयसी । श्रेयस्त्वे हेतुमाह — **सुव्याजा हीति** । हि यतः, प्रतिजपितारः सुव्याजाः, व्याजा उपजपितृप्रयुक्तो-

**भवन्ति, नोपजापितारः । तेषु प्रशान्तेषु नान्यान् शक्नुयुरुपजापितुमुपजापितारः । कृच्छ्रोपजापा हि बाह्यानामभ्यन्तरास्तेषामितरे वा । महतश्च प्रयत्नस्य वधः, परेषाम् अर्थानुबन्धश्चात्मनोऽन्य इति ।**

**अभ्यन्तरेषु प्रतिजपत्सु सामदाने प्रयुञ्जीत । स्थानमानकर्म सान्त्वम् । अनुग्रहपरिहारौ कर्मस्वायोगो वा दानम् ।**

प्रजापाङ्गीकारकारणानि धनग्रहणादीनि तानि सुखोपलभ्यानि सुबहूनि च येषां ते तथाभूताः, भवन्ति । उपजापितारः, न सुव्याजाः अचिन्त्योपजपनकारणा इत्यर्थः । प्रतिजापितुरेकैकस्य प्रशमने कृतेऽपि नवनवप्रतिजापितृप्रादुर्भावे प्रशमयितव्यापरिसमाप्तिः प्रसज्येतेत्याशङ्कायामाह — **तेष्वित्यादि** । प्रतिजपितृषु केषुचित् कृतसमाधानेषु उपजपितारोऽन्यानुपजपितुमुपजापोद्भेदभयादपारयन्तः स्वयमेव शाम्येयुरित्यभिप्रायः । अशक्यश्च कर्तुमुपजापो बाह्याभ्यन्तराणाम्, आभ्यन्तरैश्च बाह्यानामसामानाधिकरण्यादित्यभिप्रायवानाह — **कृच्छ्रोपजापा हीत्यादि** । यद्युपजप्यमानैरन्यैरुपजापो नाभ्युपगम्येत नीयेत चोद्भेदं, तर्हि उपजापितुरुपजपनविषयोऽतिमहान् यत्नो निष्फलः स्यात्, उपजाप्यानां स्वामिप्रसादरूपार्थानुवृत्तिः सिध्येद्, आत्मनः स्वामिप्रकोपानर्थश्चोत्पद्येतेत्याह — **महतश्चेत्यादि** । वधो घातः नैष्फल्यम् । आत्मनः स्वस्य उपजापितुः । अन्यः अर्थानुबन्धादितरः अनर्थानुबन्ध इत्यर्थः । इदमादर्शविशेषावेक्षितपाठानुरोधि व्याख्यानम् । माधवस्तु 'महतश्च प्रयत्नस्य वधः परेषामर्थानुबन्धश्चात्मनः' इति पाठमाश्रित्यान्यथा व्याचष्टे । तद्यथा — 'यदि बाह्याभ्यन्तराणामन्योन्यस्योपजापो दुष्करस्तर्हि त्याज्य एवायमित्यत्राह — **महतश्चेत्यादि** । उपजापेन परोत्साहवधः स्वोत्साहफलातिशयश्च स्यादिति भावः' इति ।

प्रतिजापितृप्रशमनोपायाना — **अभ्यन्तरेष्वित्यादि** । मन्त्र्यादिषु, प्रतिजपत्सु बाह्यकृतोपजापानुष्ठानाभ्युपगन्तृषु, सामदाने, प्रयुञ्जीत प्रयुज्य तान् प्रशमयेत् । तत्र साम्नः प्रकारमाह — **स्थानमानकर्म सान्त्वमिति** । विशिष्टाधिकारयोजनलक्षणं स्थानकर्म छत्रचामरादिप्रतिपादनलक्षणं मानकर्म च सान्त्वापरपर्यायं सामेत्यर्थः । दानस्याह — **अनुग्रहपरिहारावित्यादि** । अनुग्रहो धनदानं परिहारः आदेयाग्रहणं करमोक्षणं वा तौ, कर्मसु आयोगो वा विशिष्टेषु कर्मसु समग्रफलग्रहणाभ्यनुज्ञा वा, दानम् ।

**बाह्येषु प्रतिजपत्सु भेददण्डौ प्रयुञ्जीत। सत्रिणो मित्रव्यञ्जना वा बाह्यानां चारमेषां ब्रूयुः 'अयं वो राजा दूष्यव्यञ्जनैरतिसन्धातुकामो, बुध्यध्वम्' इति। दूष्येषु वा दूष्यव्यञ्जनाः प्रणिहिता दूष्यान् बाह्यैर्भेदयेयुः, बाह्यान् वा दूष्यैः। दूष्यानुप्रविष्टा वा तीक्ष्णाः शस्त्ररसाभ्यां हन्युः। आहूय वा बाह्यान् घातयेयुरिति।**

**यत्र बाह्या बाह्यानुपजपन्ति, अभ्यन्तरान् अभ्यन्तरा वा, तत्रै-**

अभ्यन्तरप्रतिजपितृविषयं प्रशमोपायमुक्त्वा बाह्यविषयमाह— **बाह्येष्विति**। राष्ट्रमुख्याटविकादिषु, प्रतिजपत्सु, भेददण्डौ प्रयुञ्जीत भेददण्डयोः प्रयोगेण तान् प्रशमयेदित्यर्थः। तत्र भेदप्रयोगप्रकारमाह — **सत्रिण** इति। ते, एषां बाह्यानां प्रतिजपतां, मित्रव्यञ्जनाः मित्रभावमभिनयन्तः, चारं राज्ञः कपटप्रयोगं ब्रूयुः। कथमिति, अयं राजा दूष्यव्यञ्जनैः आत्मनः प्रियैरेवाप्रियवेषैर्मन्त्र्यादिभिराभ्यन्तरैरुजपितृभावं गमितैः, वः युष्मान्, अतिसन्धातुकामः वञ्चयितुमिच्छति। बुध्यध्वम् इदं रहस्यं ज्ञात्वा प्रतिजपितृकर्मणि मा प्रवर्तध्वमित्यर्थः। इति। मित्रव्यञ्जनत्वस्वीकारेण भेदनमुक्त्वा दूष्यव्यञ्जनत्वस्वीकारेण भेदनमाह — **दूष्येषु** वेति। राजाप्रियेषु अभ्यन्तरेषु मन्त्र्यादिषु राष्ट्रमुख्यादिषु बाह्येषु वा प्रतिजपत्सु विषये, दूष्यव्यञ्जनाः प्रणिहिताः राजाप्रियवेषतया प्रयुक्ता गूढपुरुषाः, दूष्यान् अर्थात् प्रतिजपतोऽभ्यन्तरान्, बाह्यैर्भेदयेयुः बाह्यैरुपजपितृभिरेव करणभूतैर्भेदयेयुः 'य एते व उपजपितारस्ते राजप्रणिहिता' इति छलोक्त्या तान् प्रतिजपितृकर्मानुष्ठानान्निवर्तयेयुरित्यर्थः। **बाह्यान् वा दूष्यैरिति**। दूष्यैराभ्यन्तरैरुपजपितृभिः करणभूतैर्बाह्यान् प्रतिजपितॄन् भेदयेत्, पूर्ववच्छलोक्त्या तान् प्रतिजापितृकर्मानुष्ठानान्निवर्तयेदित्यर्थः। दण्डप्रयोगप्रकारमाह — **दूष्यानिति**। तान्, अनुप्रविष्टा वा कार्यव्याजेन तैः सह संभूय वा, तीक्ष्णाः, शस्त्ररसाभ्यां हन्युः। **आहूय वेति**। 'भवदनुष्ठेयप्रतिजापकर्मानुगुणमाचरिष्यामि' इति वचनेन विश्राम्य वा, बाह्यान् प्रतिजपितॄन्, घातयेयुः। इति।

इत्थमुभययोगवत्योराद्ययोरापदोः प्रतिक्रियामुक्त्वा एकयोगवत्योरनन्तरयोराह— **यत्रेत्यादि**। या बाह्योत्पत्तिर्बाह्यप्रतिजापा, या चाभ्यन्तरोत्पत्तिराभ्यन्तरप्रतिजापा, तयोरुभयोरपि उपजपितृसमाहितिः प्रशस्तेत्यर्थः। तत्र

कान्तयोग उपजपितुः सिद्धिर्विशेषवती । दोषशुद्धौ हि दूष्या न विद्यन्ते । दूष्यशुद्धौ हि दोषः पुनरन्यान् दूषयति ।

तस्माद् बाह्येषूपजपत्सु भेददण्डौ प्रयुञ्जीत । सत्रिणो मित्रव्यञ्जना वा ब्रूयुः—'अयं वो राजा स्वयमादातुकामः, विगृहीताः स्थानेन राज्ञा, बुध्यध्वम्' इति । प्रतिजपितुर्वाततो दूतदण्डाननुप्रविष्टास्तीक्ष्णाः शस्त्ररसादिभिरेषां छिद्रेषु प्रहरेयुः । ततः सत्रिणः प्रतिजापितारमभिशंसेयुः ।

अभ्यन्तरानभ्यन्तरेषूपजपत्सु यथार्हमुपायं प्रयुञ्जीत । तुष्टलिङ्गमतुष्टं विपरीतं वा साम प्रयुञ्जीत ।

---

हेतुमाह —**दोषशुद्धौ** हीति । दोष उपजापः तस्योपजपितृदमनेन प्रतिषेधसिद्धौ, दूष्या न विद्यन्ते नैव स्युः, उपजापेन हि दूष्याणामभिनिर्वृत्तिः सा कथमुपजापाभावे स्यादिति भावः । **दूष्यशुद्धौ** हीति । दूष्या उपजापदूषितबुद्धयः प्रतिजपितारः तेषां शुद्धौ समाधाने तु कृते, दोषः उपजापः, पुनः भूयः, अन्यान् दूषयति, उपजपितारोऽप्रशान्तत्वान्नवनवान् दूष्यान् उपजापकरणेनाभिनिर्वर्तयेयुरिति भावः ।

**तस्मा**दिति । उपजपितुरेव शोध्यत्वाद् , बाह्येषु उपजपत्सु, **भेददण्डौ** प्रयुञ्जीत भेदं दण्डं च प्रयुज्योपजापं प्रतिकुर्यात् । भेदप्रकारमाह—**सत्रिणो मित्रव्यञ्जना** वेति । ते, ब्रूयुः अर्थादुपजपितॄन् । किमिति, अयं राजा, वः युष्मान् , स्वयम् आदातुकामः प्रतिजपितृद्वारेण ग्रहीतुमिच्छति । अनेन राज्ञा, विगृहीताः, स्थ भवथ । बुध्यध्वं जागृत, न कञ्चिदपि विश्वस्योपजपतेत्यर्थः । इति । दण्डप्रकारमाह — **प्रतिजपितुर्वे**ति । प्रतिजापकसकाशाद् वा, अततः उपजपितारमुद्दिश्य संभाषार्थं गच्छतः, अथवा प्रतिजपितुरिति षष्ठ्यन्तं बोध्यम् । तत इति तु अव्ययं यत्रोपजपिता तत्रेत्यर्थः, प्रोस्थतानिति च शेषः । दूतदण्डान् दूतान् दण्डांश्च, अनुप्रविष्टाः, भूत्वेति शेषः, तीक्ष्णाः, शस्त्ररसादिभिः, एषाम् उपजपितॄणां, छिद्रेषु प्रहरेयुः प्रमादस्थानान्युपलभ्य तान् हन्युरित्यर्थः । **तत** इति । उपजपितृवधानन्तरं, सत्रिणः, प्रतिजपितारम् , अभिशंसेयुः 'उपजपितृवधकारयितायमि'ति मिथ्या ख्यापयेयुः उपजिजपिषोः प्रतिजापकेष्वविश्वासार्थमित्यभिप्रायः ।

इत्थं बाह्येषूपजपत्सु भेददण्डयोः प्रयोगमुक्त्वा अभ्यन्तरेषूपजपत्सु सामादीनुपायान् यथायोग्यं प्रयुञ्जीतेत्याह — **अभ्यन्तराने**त्यादि । कथ-

शौचसामर्थ्यापदेशेन व्यसनाभ्युदयापेक्षणेन वा प्रतिपूजनमिति दानम् ।

मित्रव्यञ्जनो वा ब्रूयादेतान् — चित्तज्ञानार्थमुपधास्यति वो राजा, तदस्याख्यातव्यम् इति । परस्पराद् वा भेदयेदेनान — असौ चासौ च वो राजन्येवमुपजपति । इति भेदः ।

दाण्डकर्मिकवच्च दण्डः ।

एतासां चतसृणामापदामभ्यन्तरामेव पूर्वं साधयेत् । 'आहेभयादभ्यन्तरकोपो बाह्यकोपात् पापीयान्' इत्युक्तं पुरस्तात् ॥

पूर्वां पूर्वां विजानीयाल्लघ्वीमापदमापदाम् ।
उत्थितां बलवद्भ्यो वा गुर्वीं लघ्वीं विपर्यये ॥

इति कौटलीयार्थशास्त्रे अभियास्यत्कर्मणि नवमाधिकरणे
पञ्चमोऽध्यायः बाह्याभ्यन्तराश्चापदः
आदितः षड्विंशतिशततमः ॥

---

म्भूतं साम प्रयोक्तव्यमित्याह — **तुष्टलिङ्गमित्यादि** । तुष्टिसूचकं वस्तुतोऽतुष्टं साम वा, तद्विपरीतम् अतुष्टिसूचकं वस्तुतस्तुष्टं साम वा प्रयुञ्जीतेत्यर्थः ।

दानप्रकारमाह — **शौचेत्यादि** । शौचं सामर्थ्यं च निमित्तीकृत्य वा बन्धुवियोगादिव्यसनावसरं पुत्रजन्माद्यभ्युदयावसरं वापेक्ष्य वस्त्राभरणादिना यत् सत्करणं तज्जातीयं दानं प्रयुञ्जीतेत्यर्थः ।

भेदप्रकारमाह — **मित्रव्यञ्जनो वेति** । तथाभूतो वा सत्री, एतान् अभ्यन्तरानुपजापितॄन्, ब्रूयात्, कथमिति, 'चित्तज्ञानार्थं राजा वः युष्मान् उपधास्यति अर्थाद्युपधया परीक्षिष्यते, तत् स्वचित्तम्, अस्य राज्ञः आख्यातव्यम्' इति । एवं ह्युच्यमानाः प्रतिजापकाः उपजापं भयान्नाभ्युपगच्छेयुरित्याशयः । प्रकारान्तरमाह — **परस्पराद् वेति** । मिथो वा, भेदयेत्, एनान् अभ्यन्तरान्, कथमुक्त्वा, असौ च, असौ च, राजनि राज्ञः सकाशे, एवम् अनेन प्रकारेण, वः उपजपति युष्मान् प्रति दोषं बोधयति । इति । इति भेदः एवम्प्रकारो भेदः प्रयोक्तव्य इत्यर्थः ।

दण्डप्रकारमाह — **दाण्डकर्मिकवच्च दण्ड इति** । दाण्डकर्मिकोक्त उपांशुदण्ड इह प्रयोक्तव्य इत्यर्थः ।

इत्थं निरूपितप्रकारासु चतसृष्वापत्सु अभ्यन्तरा कृच्छ्रप्रतिकार्यत्वादनर्थातिशयहेतुत्वाच्च प्रथमं प्रतिकर्तव्येत्याह — **एतासां चतसृणामित्यादि** ॥

**पूर्वामिति** । आपदां 'बाह्योत्पत्तिरभ्यन्तरप्रतिजापा' इत्यादिनोक्तानां चतसृणां मध्ये, पूर्वां पूर्वां, लघ्वीम् उत्तरोत्तरापेक्षया, विजानीयात्, अर्थाच्च पूर्वपूर्वापेक्षयोत्तरोत्तरां गुर्वीम् । अयमुत्सर्गः । अस्यापवादमाह — **उत्थितामित्यादि** । पूर्वा वा भवतूत्तरा वा या बलवद्भ्य उपजपितृभ्य उत्पन्ना तां पूर्वामपि दुर्बलोपजपितृकोत्तरापेक्षया गुर्वीं विजानीयात्, दुर्बलेभ्यश्चोपजपितृभ्य उत्पन्नामुत्तरामपि प्रबलोपजपितृकपूर्वापेक्षया लघ्वीं विजानीयादित्यर्थः ॥

इति श्रीमदर्थशास्त्रव्याख्यायाम् अभियास्यत्कर्मणि नवमेऽधिकरणे
पञ्चमोऽध्यायः बाह्याभ्यन्तराश्चापदः .
आदितः पञ्चविंशत्यधिकशततमः ॥

## १४४. प्रक. दूष्यशत्रुसंयुक्ताः ।

**दूष्येभ्यः शत्रुभ्यश्च द्विविधाः शुद्धाः ।**

**दूष्यशुद्धायां पौरेषु जानपदेषु वा दण्डवर्जानुपायान् प्रयुञ्जीत । दण्डो हि महाजने क्षेप्तुमशक्यः, क्षिप्तो वा तं चार्थं न कुर्यात् । अन्यं चानर्थमुत्पादयेत् । मुख्येषु त्वेषां दाण्डकर्मिकवच्चेष्टेतेति ।**

**शत्रुशुद्धायां यतः शत्रुः प्रधानः कार्यो वा, ततः सामादिभिः सिद्धिं लिप्सेत ।**

**दूष्यशत्रुसंयुक्ता** इति सूत्रम् । पूर्वसूत्रमिहानुवर्तते । दूष्याः राजावग्रहचारिणो मुख्याः शत्रवः सहजकृत्रिमादयः तत्संयुक्तास्तत्संबद्धास्तदुत्पन्नाः बाह्याभ्यन्तरा आपदस्तत्प्रतीकारश्चाभिधीयन्ते इति सूत्रार्थः ।

तासां शुद्धमिश्रभेदं मनसि निधाय शुद्धा विभजते — **दूष्येभ्य** इत्यादि । दूष्येभ्य एव केवलेभ्य उत्थिताः शत्रुभ्य एव केवलेभ्य उत्थिता इति द्विप्रकाराः शुद्धा इत्यर्थः ।

दूष्यशुद्धायाः प्रतीकारमाह — **दूष्यशुद्धायामिति** । तस्यां विषये, पौरेषु, जानपदेषु वा, दण्डवर्जान् उपायान् सामदानभेदान् , प्रयुञ्जीत । दण्डस्य वर्जने हेतुमाह — **दण्डो ही**त्यादि । स हि महाजने पौरजानपदसमूहलक्षणे प्रयोक्तुं न शक्यस्तद्विरोधोत्पादकत्वात् , प्रयुक्तो वा साध्यमर्थं न साधयेद् अनर्थं च नवमुत्थापयेदित्यर्थः । सामादिभिरशान्तौ किं कर्तव्यं तत्राह — **मुख्येषु त्वेषामि**त्यादि । ये पौरजानपदानामुपजपितारो मुख्याः, तेषु दाण्डकर्मिकोक्तं विधिमुपांशुदण्डप्रयोगलक्षणमाचरेत् । तावतैव ते शाम्येयुरित्यभिप्रायः ।

शत्रुशुद्धायां प्रतीकारमाह — **शत्रुशुद्धायामिति** । शत्रुमात्रोत्पादितायां मित्रसङ्कररहितायामापदि अर्थात् स्वयमेव शत्रुणा साक्षादुत्पादितायां तन्मन्त्र्युत्पादितायां तदमात्योत्पादितायां तन्मन्त्रितदमात्योभयोत्पादितायां चेति चतुष्प्रकारायां, यतः शत्रुः यस्मिन्नधीनः सामन्तः, यतः प्रधानः यस्मिन्नधीनो मन्त्री, यतः कार्यो वा अमात्यादिर्वा यस्मिन्नधीनः, ततः सामादिभिः सिद्धिं लिप्सेत तान् सामदानादिभिरभिमुखीकृत्य चतुर्षु पूर्वोक्तापत्प्रकारेषु यथाक्रमं प्रतीकारमन्विच्छेदित्यर्थः ।

स्वामिन्यायत्ता प्रधानासिद्धिः, मन्त्रिण्यायत्तायत्तसिद्धिः, उभयायत्ता प्रधानायत्तसिद्धिः ।

दूष्यादूष्याणामामिश्रितत्वादामिश्रा । आमिश्रायामदूष्यतः सिद्धिः । आलम्बनाभावे ह्यालम्बिता न विद्यते । मित्रामित्राणामेकीभावात् परमिश्रा । परमिश्रायां मित्रतः सिद्धिः । सुकरो हि मित्रेण सन्धिर्नामित्रेणेति ।

मित्रं चेन्न सन्धिमिच्छेत्, अभीक्ष्णमुपजपेत्, ततः सत्रिभिरमित्राद् भेदयित्वा मित्रं लभेत । मित्रामित्रसङ्घस्य वा योऽन्तस्थायी तं लभेत । अन्तस्थायिनि लब्धे मध्यस्थायिनो भिद्यन्ते । मध्यस्था-

कस्मिन्नधीनः प्रधानः कस्मिन्नधीनः कार्यं इति विवरीतुमाह — **स्वामिन्यायत्ते**त्यादि । प्रधानसिद्धिः प्रधानप्रतिक्रिया । आयत्तसिद्धिः कार्यशब्दितस्यामात्यस्य प्रतिक्रिया । उभयायत्ता स्वामिमन्त्र्युभयमुखसाध्या । प्रधानायत्तसिद्धिः प्रधानायत्तयोः संहत्यापदुत्पादकयोर्मन्त्र्यमात्ययोः प्रतिक्रिया । ननु स्वयमेव साक्षादापदुत्पादकः शत्रुर्यस्मिन्नधीनः स कस्मान्नोक्तः । उच्यते । स हि शत्रोर्मित्रं वा मित्रामित्रं वा मध्यमादिर्वा स्यादित्यनियत आपदनुत्पादकश्च; नियतस्त्विह वक्तुं प्रक्रान्त आपदुत्पादकश्चेत्यदोषः ।

आमिश्रामाह — **दूष्यादूष्याणामामिश्रितत्वादि**ति । दूष्यादूष्यैरुभयैर्मिलित्वा जनितत्वाद्, आमिश्रा तदाख्या दूष्यशुद्धा । **आमिश्रायामि**ति । तस्याम्, अदूष्यतः, सिद्धिः प्रतिक्रिया कार्या । प्रतिक्रियया ह्यदूष्ये दूष्यालम्बनभूते शान्ते तमालम्ब्य चेष्टमानो दूष्यः स्वयमेव शाम्यतीत्याह — **आलम्बनाभाव** इत्यादि । मिश्रान्तरमाह — **मित्रामित्राणामि**ति । मित्राणाममित्राणां च, एकीभावात् मिश्रणात्, जनितेति शेषः, परमिश्रा शत्रुमिश्रा नाम । **परमिश्रायामि**ति । तस्यां, मित्रतः, सिद्धिः प्रतिक्रिया । तत्र हेतुमाह — **सुकरो ही**त्यादि ।

सन्धिमनभिलषति मित्रे तत् पुनःपुनरुपजप्य ततः सत्रिभिरमित्राद् भेदयित्वा स्ववशे कुर्यादित्याह — **मित्रं चे**दित्यादि । भूम्येकान्तरत्वभूम्यनन्तरत्वक्रमेण सन्निविष्टस्य मित्रामित्राणां सङ्घस्यावसाने यस्तिष्ठति तं लभेतेत्याह — **मित्रामित्रसङ्घस्य वे**त्यादि । अन्तस्थायिनि लब्धे मध्यस्थायिनः सर्वे भिन्ना भवन्तीत्याह — **अन्तस्थायिनी**त्यादि । यः सङ्घस्य मध्ये तिष्ठति

यिनं वा लभेत । मध्यस्थायिनि वा लब्धे नान्तस्थायिनः संहन्यन्ते । यथा चैषामाश्रयभेदः तानुपायान् प्रयुञ्जीत ।

धार्मिकं जातिकुलश्रुतवृत्तस्तवेन सम्बन्धेन पूर्वेषां त्रैकाल्योपकारानपकाराभ्यां वा सान्त्वयेत् ।

निवृत्तोत्साहं विग्रहश्रान्तं प्रतिहतोपायं क्षयव्ययाभ्यां प्रवासेन चोपतप्तं शौचेनान्यं लिप्समानमन्यस्माद् वा शङ्कमानं मैत्रीप्रधानं वा कल्याणबुद्धिं साम्ना साधयेत् ।

लुब्धं क्षीणं वा तपस्विमुख्यावस्थापनापूर्वं दानेन साधयेत् ।

तत् पञ्चविधं देयविसर्गो, गृहीतानुवर्तनम्, आत्तप्रतिदानं,

---

तं वा लभेत, तेन चान्तस्थायिनः सर्वे भिन्ना भवन्तीत्याह — **मध्यस्थायिनं** **वे**त्यादि । न संहन्यन्ते परस्परस्माद् भिद्यन्ते । सर्वथा च मित्रामित्रा यैरुपायप्रकारैराश्रयाद् भिन्ना भवेयुस्तानुपायप्रकारान् प्रयुञ्जीतेत्याह — **यथा चैषा**मित्यादि ।

धार्मिकविषयं साम्नः प्रकारमाह — **धार्मिक**मित्यादि । तं, जातिकुलश्रुतवृत्तस्तवेन जातेरसङ्करविशुद्धत्वादिना कुलस्योदितोदितत्वादिना श्रुतस्य नानाशास्त्रविषयत्वादिना वृत्तस्य विहितानुष्ठाननिष्ठत्वादिना च यः स्तवः तेन, संबन्धेन योनिविद्यादिनिमित्तेन, पूर्वेषां कुलवृद्धानां, त्रैकाल्योपकारानपकाराभ्यां कालत्रयेऽप्युपकर्तृत्वानपकर्तृत्वाभ्यां वा सान्त्वयेत ।

सामसाध्यमाह — **निवृत्तोत्साह**मिति । निरुत्साहं, विग्रहश्रान्तं चिरयुद्धकरणखिन्नं, प्रतिहतोपायं विफलितसामाद्युपायप्रयोगं, क्षयव्ययाभ्यां युग्यपुरुषापचयहिरण्यधान्याद्यपचयाभ्यां, प्रवासेन च दूराध्वगतागतेन च, उपतप्तं सन्तप्तं, शौचेनान्यं लिप्समानं शुचित्वगुणापेक्षया कमप्यन्यं मित्रत्वेन लब्धुमिच्छन्तम्, अन्यस्माद् वा शङ्कमानं पराविश्वासिनं वा, मैत्रीप्रधानं वा सर्वत्र मित्रभावेन व्यवहार एव परम इति मन्यमानं, कल्याणबुद्धिम् अशठं, साम्ना साधयेत् ।

दानसाध्यमाह — **लुब्धमि**ति । गृध्नुं, क्षीणं वा अर्थकृशं वा, तपस्विमुख्यावस्थापनापूर्वं तपस्विनां मुख्यानां च अवस्थापना दानविश्वासार्थं स्थेयीकरणं तत्पूर्वकं, दानेन, साधयेत् ।

दानस्य पञ्च प्रकारानाह — **तत् पञ्चविध**मित्यादि । देयविसर्गः गृहीतभूमौ ब्रह्मदेयादेर्यथापूर्वविमोक्षणम् । गृहीतानुवर्तनं गृहीतस्य पूर्वपुरुषैः

**स्वद्रव्यदानम् अपूर्वं, परस्वेषु स्वयंग्राहदानं चेति दानकर्म ।**

**परस्परद्वेषवैरभूमिहरणशङ्कितम् अतोऽन्यतमेन भेदयेत् । भीरुं वा प्रतिघातेन, 'कृतसन्धिरेष त्वयि कर्म करिष्यति, मित्रमस्य निसृष्टं; सन्धौ वा नाभ्यन्तर' इति ।**

**यस्य वा स्वदेशाद् अन्यदेशाद् वा पण्यानि पण्यागारतयागच्छेयुः, तान्यस्य 'यातव्याल्लब्धानि' इति सत्रिणश्चारयेयुः । बहुलीभूते शासनमभिव्यक्तेन प्रेषयेत् —'एतत् ते पण्यं, पण्यागारं वा मया ते प्रेषितं, सामवायिकेषु विक्रमस्व, अपगच्छ वा, ततः पणशेषमवाप्स्यसि' इति । ततः सत्रिणः परेषु ग्राहयेयुरेतद् अरिप्रदत्तम् इति ।**

पूर्वमात्तस्य भूम्यादेर्भोगाप्रतिषेधः । आत्तप्रतिदानं गृहीतस्य भूम्यादेः प्रत्यर्पणम् । स्वद्रव्यदानमपूर्वं स्वद्रव्यस्यैवादत्तपूर्वस्य प्रतिनवं दानम् । परस्वेषु स्वयंग्राहदानं 'शत्रुदेशावस्कन्दने तदीयद्रव्येषु त्वया ह्रियमाणं द्रव्यं तवैव भविष्यती'त्येवं रूपं दानम् ।

भेदनमेवाह — **परस्परद्वेषवैरभूमिहरणशङ्कितमित्यादि** । तत्कालापकारजो द्वेषः चिरानुवृत्तापकारप्ररूढं वैरं मित्रामित्राणां मध्ये परस्परद्वेषशङ्काविषयभूतं परस्परवैरशङ्काविषयभूतं परस्परभूमिहरणशङ्काविषयभूतं च, अतोऽन्यतमेन एषां द्वेषादीनामेकतमेन, भेदयेत् । भेदनस्य प्रकारान्तराण्याह — **भीरुं वेति** । तं, प्रतिघातेन शत्रुबलीयस्तया त्वदभियोगः प्रतिहतो भविष्यतीति प्रतिघातविभीषिकया, भेदयेत् । कृतसन्धिः विजिगीषुणा कृतसन्धानः, एषः, त्वयि, कर्म अभियोगं, करिष्यति । करिष्यतीति कथं ज्ञायते, तत्राह **मित्रमिति** । मित्रमस्य, निसृष्टं सन्धिकरणार्थं विजिगीषुसकाशे प्रेषितम् । इत्युक्त्वा भेदयेत् । सन्धौ मित्रामित्रैः क्रियमाणे इति शेषः, त्वं, नाभ्यन्तरः बहिष्कृत इत्यर्थः, इत्युक्त्वा वा भेदयेत् ।

प्रकारान्तरमाह — **यस्य वेत्यादि** । मित्रामित्राणामन्यतमस्य यस्य, स्वदेशाद्, अन्यदेशाद् वा, पण्यानि, पण्यागारतया पण्यागाराङ्गतया, आगच्छेयुः, तानि अस्य, यातव्यात् लब्धानि यातव्येनैव गूढकृतसन्धिना प्रहितानि, इति अनेन प्रकारेण, सत्रिणः, चारयेयुः मृषा वृत्तान्तं प्रवर्तयेयुः । **बहुलीभूते** मिथ्यावृत्तान्तेऽस्मिन् सर्वतः प्रसृते सति, शासनं मिथ्यालेखम्, **अभिव्यक्तेन** निश्चितवध्यभावोऽभिव्यक्तः तस्य हस्ते दत्त्वेत्यर्थः, प्रेषयेत् । कीदृगर्थकं शासनमित्याह — **एतदिति** । एतत् ते पण्यं यत्किञ्चिदल्पं मया प्रेषितं

**शत्रुप्रख्यातं वा पण्यमविज्ञातं विजिगीषुं गच्छेत् । तदस्य वैदेहकव्यञ्जनाः शत्रुमुख्येषु विक्रीणीरन् । ततः सत्रिणः परेषु ग्राहयेयुः 'एतत् पण्यमरिप्रदत्तम्' इति ।**

**महापराधानर्थमानाभ्यामुपगृह्य वा शस्त्ररसाग्निभिरमित्रे प्रणिदध्यात् । अथैकममात्यं निष्पातयेत् । तस्य पुत्रदारमुपगृह्य रात्रौ हतमिति ख्यापयेत् । अथामात्यः शत्रोस्तानेकैकशः प्ररूपयेत् । ते चेद्**

पण्यागारं वा प्रभूतपण्यवर्गवत्तया पण्यगृहसदृशं पण्यशकटादि वा मया ते प्रेषितं, सामवायिकेषु सम्भूयोत्थायिषु मच्छत्रुसाह्यकारिषु, विक्रमस्व अभियुङ्क्ष्व, अथवा, अपगच्छ तेभ्योऽपसर, अर्थान्मदुपकारार्थे, ततः विक्रमणापसरणान्यतरानुष्ठानानन्तरं, पणशेषं पणितार्थावशिष्टमर्थम्, अवाप्स्यसि मत्सकाशादधिगमिष्यसि । इति एवम्प्रकारार्थकोसन्दर्थः । तत इति । प्रेषणानन्तरं, सत्रिणः, परेषु अन्येषु सामवायिकेषु, एतत् कूटशासनम्, अरिप्रदत्तमिति विजिगीषुणा प्रतिपादितमिति, अपदिश्येति शेषः, ग्राहयेयुः ।

प्रकारान्तरमाह — **शत्रुप्रख्यातं** वेति । शत्रुरिह सामवायिकान्यतमः तत्सम्बन्धित्वेन प्रख्यातं, पण्यं रत्नादि, अविज्ञातं गूढं यथा भवति तथा, विजिगीषुं गच्छेद् विजिगीषोरेव केनाप्युपायेन वशं प्राप्नुयात् । तद् अस्य, वैदेहकव्यञ्जनाः वणिग्वेषाः गूढपुरुषाः, शत्रुमुख्येषु शत्रुधर्माणो येऽन्ये सामवायिकास्तेषां मुख्येषु, विक्रीणीरन् । ततः तत्, सत्रिणः, परेषु सामवायिकान्तरेषु, ग्राहयेयुः रक्षिपुरुषैर्ग्राहितं कुर्युः । कथं कृत्वा, एतत् पण्यम् अरिप्रदत्तम् अरिणा विजिगीषुणा विक्रयार्थं प्रेषितम्, इति अनेन प्रकारेणापदिश्य । एवं कृते 'सामवायिकान्यतमो विजिगीषुणा सह कृतसन्धिरि'ति सामवायिकान्तराणां बुद्धिरुत्पद्येतेत्यभिप्रायः ।

अन्यं प्रकारमाह — **महापराधानि**ति । महान् अपराधो यैरात्मनः कृतस्तथाभूतान् अमात्यान्, अर्थमानाभ्यां भूहिरण्यादिदानेन छत्रचामरादिदानेन च, उपगृह्य स्ववशीकृत्य, शस्त्ररसादिना अमित्रे प्रणिदध्यात् 'युष्माभिः शत्रुः शस्त्रेण विषेणाग्निना वा हन्तव्यः' इत्यादिश्य गूढं प्रेषयेत् । प्रेषणे क्रममाह—**अथेति** । प्रथमम्, एकम् अमात्यं, निष्पातयेत् स्वान्तिकान्निष्पात्य शत्रुपार्श्वं प्रापयेत् । तस्य पुत्रदारं पुत्रान् दारांश्च, उपगृह्य छन्नरक्षितं कृत्वा, रात्रौ, हतमिति राज्ञा व्यापादितम् इति, ख्यापयेत् मृषाप्रवादमुत्पादयेत् । एतच्च

**यथोक्तं कुर्युः. न चैनान् ग्राहयेत् । अशक्तिमतो वा ग्राहयेत् । आप्तभावोपगतो मुख्यादस्यात्मानं रक्षणीयं कथयेत्; अथामित्रशासनम् मुख्यायोपघातनाय प्रेषितमुभयवेतनो ग्राहयेत् ।**

**उत्साहशक्तिमतो वा प्रेषयेत्— ‘अमुष्य राज्यं गृहाण यथास्थितो न सन्धिः’ इति । ततः सत्त्रिणः परेषु ग्राहयेयुः ।**

**एकस्य स्कन्धावारं विवधमासारं वा घातयेयुः, इतरेषु मैत्रीं ब्रुवाणाः । तं सत्त्रिणः —‘त्वमेतेषां घातयितव्यः’ इत्युपजपेयुः ।**

निष्पतितं प्रति शत्रोर्विजिगीपुद्वेषविश्वासार्थम् । अथ शत्रावात्मास्पदलाभानन्तरम्, अमात्यः पूर्वनिष्पतितः, शत्रोः, तान् अन्यानमात्यान्, एकैकशः एकैकक्रमेण प्रख्यापयेद् ‘विजिगीषुद्वेषनिष्पतिता एते भवत्पार्श्वोपस्थानयोग्या’ इत्येवं प्रदर्शयेत् । ते निष्पतिता अमात्याः, यथोक्तं कुर्युश्चेत् शस्त्रादिना शत्रुं हन्युश्चेत्, एनान्, न च ग्राहयेत् उभयवेतनमुखेन नैव ग्राहयेत् । अशक्तिमतो वा यथोक्तशत्रुघातासमर्थान् वा, ग्राहयेत्, महापराधतया तेषां वध्यत्वादित्यभिप्रायः । एवं विजिगीपुनिष्पतितोऽमात्यः सामवायिकमुख्यं यथा भेदयेत्, तथाह — **आप्तभावोपगत** इत्यादि । अयमर्थः — शत्र्वाप्तत्वं गतोऽमात्यः ‘सामवायिकमुख्यसकाशात् त्वया स्वात्मा रक्षणीयस्तस्याविश्वास्यत्वाद्’ इत्येवं शत्रुमुपजपेत् । पश्चाच्चामित्रशासनं कूटकृतम् अमुख्योपघातादेशकं मुख्याय प्रेषितम् उभयवेतनो रक्षिपुरुषैर्ग्राहयेदिति । ‘अमुख्याये’ति पाठेऽपि तुल्योऽर्थः ।

प्रकारान्तरमाह — **उत्साहे**त्यादि । शासनमिति पूर्वतः संबध्यते । उत्साहशक्तिमतो वा विक्रमशक्तियुक्तस्य वा सामवायिकान्यतमस्य, शासनं कूटनिर्मितं, प्रेषयेत् । तत् कीदृगर्थकम्, अमुष्य सामवायिकमुख्यस्य, राज्यं गृहाण, यथास्थितो न सन्धिः स्थितप्रकारः सन्धिर्नाङ्गीकृतः । इति ईदृशार्थकमित्यर्थः । ततः पश्चात्, सत्त्रिणः, परेषु सामवायिकान्तरेषु, ग्राहयेयुः अर्थात् तदेव शासनम् ।

अन्यं पक्षमाह — **एकस्ये**ति । सामवायिकान्यतमस्य, स्कन्धावारं सेनानिवेशं, विवधं स्वदेशधान्याद्यागमम्, आसारं वा सुहृद्बलागमं वा, घातयेयुः वारयेयुः, अर्थात् सत्त्रिणः । कथम्भूताः, इतरेषु मैत्रीं ब्रुवाणाः सामवायिकान्तरेषु मित्रभावं वदन्तः अर्थात् तेभ्यो गोपनाय । **तमि**ति । तं च सामवायिकान्यतमं, सत्त्रिणः, उपजपेयुः, कथमुपजपेयुः, त्वम्, एतेषां सामवायिकानां, घातयितव्यः । तत् कृत एतैस्ते सन्धिरिति भावः । इति अनेन प्रकारेण ।

**यस्य वा प्रवीरपुरुषो हस्ती हयो वा म्रियेत, गूढपुरुषैर्हन्येत ह्रियेत वा, तं सत्रिणः परस्परोपहतं ब्रूयुः । ततः शासनमभिशस्तस्य प्रेषयेत्—'भूयः कुरु ततः पणशेषमवाप्स्यसि' इति । तदुभयवेतना ग्राहयेयुः ।**

**भिन्नेष्वन्यतमं लभेत ।**

**तेन सेनापतिकुमारदण्डचारिणो व्याख्याताः ।**

**साङ्घिकं च भेदं प्रयुञ्जीत । इति भेदकर्म ।**

**तीक्ष्णमुत्साहिनं व्यसनिनं स्थितशत्रुं वा गूढपुरुषाः शस्त्राग्निरसादिभिः साधयेयुः । सौकर्यतो वा तेषामन्यतमः । तीक्ष्णो ह्येकः**

---

प्रकारान्तरमाह—**यस्य वे**ति । यस्य सामवायिकान्यतमस्य सम्बन्धी, प्रवीरपुरुषः, हस्ती हयो वा म्रियेत, स्वयमिति शेषः, गूढपुरुषैः हन्येत ह्रियेत वा, तं सामवायिकान्यतमं, सत्रिणः, परस्परोपहतं ब्रूयुः सामवायिकान्तरैरेव परस्परेण हतं बोधयेयुः, अर्थात् प्रवीरादिम् । ततः पश्चात्, शासनं कूटलेखम्, अभिशस्तस्य आरोपितहननदोषस्य सामवायिकस्य, प्रेषयेत् । शासनार्थमाह— भूयः पुनरपि, कुरु प्रवीरपुरुषादिं घातय, ततः पणशेषम् अवाप्स्यसि । इति अनेन प्रकारेण लिखितार्थमित्यर्थः । **त**दिति । तच्च शासनम्, उभयवेतनाः विजिगीषोरभिशस्तसामवायिकाच्चोभयतो भृतिग्राहिणः, ग्राहयेयुः अर्थाद् गूढपुरुषैः ।

**भिन्नेष्वन्यतमं लभे**तेति । उक्तैर्भेदनोपायैर्भेदं प्राप्तेषु सामवायिकेषु एकतमं स्वायत्तं कुर्याद् विजिगीषुः ।

यदिदमुपदिष्टं भेदनोपायजातं, तत् सेनापतियुवराजसैन्यचारिणां भेदनेऽपि यथायोगम् उपयोक्तव्यमित्याशयेनाह— **तेने**त्यादि ।

सङ्घवृत्ताधिकरणे वक्ष्यमाणो भेदप्रकारोऽप्यत्र प्रयोक्तव्य इत्याह— **साङ्घिकं चे**त्यादि । **इति भेदकर्मे**ति । व्याख्यातमिति शेषः ।

अथ दण्डविधिप्रकारं तत्प्रयोगविषयं चाह— **तीक्ष्णमि**त्यादि । तीक्ष्णम् अतिमात्रामर्षम्, उत्साहिनं विक्रमिणं, व्यसनिनं मृगयादिप्रसक्तं, स्थितशत्रुं वा दुर्गवन्तं शत्रुं वा, गूढपुरुषाः, शस्त्राग्निरसादिभिः, साधयेयुः हन्युः, अर्थात् सम्भूय । तेष्वन्यतमेन येन शक्ततरतया घातः सुकरः, स वा तान् हन्यादित्याह— **सौकर्यतो वे**त्यादि । तमेवान्यतमं विवृणोति—

**शस्त्ररसाग्निभिः साधयेत । अयं सर्वसन्दोहकर्म विशिष्टं वा करोति । इत्युपायचतुर्वर्गः ।**

**पूर्वः पूर्वश्चास्य लघिष्ठः । सान्त्वमेकगुणम् । दानं द्विगुणं सान्त्वपूर्वम् । भेदस्त्रिगुणः सान्त्वदानपूर्वः । दण्डश्चतुर्गुणः सान्त्वदानभेदपूर्वः ।**

**इत्यभियुञ्जानेषूक्तम् । स्वभूमिष्ठेषु तु त एवोपायाः । विशेषस्तु । स्वभूमिष्ठानामन्यतमस्य पण्यागारैरभिज्ञातान् दूतमुख्यानभीक्ष्णं प्रेषयेत्, त एनं सन्धौ परहिंसायां वा योजयेयुः, अप्रतिपद्यतीक्ष्णो हीति** । न हि गूढपुरुषविशेषरूपः, एकः असहायः सन्, शस्त्ररसाग्निभिः, साधयेत् अमात्यचिकीर्षितप्रभृतीन् हन्यात । न केवलं सर्वविधगूढपुरुषसमुदायसाध्यं कर्मायमेकाकी करोति, किन्तु तदपेक्षयोत्कृष्टमपि कर्म करोतीत्याह—**अयमित्यादि** । **इत्युपायचतुर्वर्ग** इति । उपायसंबन्धी चतुर्वर्गः सामदानभेददण्डचतुष्टयात्मा, निरूपित इति शेषः ।

**पूर्व** इति । अस्य उपायवर्गस्य मध्ये, पूर्वः पूर्व उपायः, लघिष्ठः उत्तरोत्तरापेक्षयाल्पावयवत्वादनायासप्रयोज्यः । अल्पावयवतां विवृणोति—**सान्त्वमिति** । साम, एकगुणम् एक आलंबको गुणोऽवयवो यस्य तत् तथाभूतम् । दानं हि, द्विगुणं सान्त्वपूर्वं सान्त्वदानोभयावयवकम् । भेदः, त्रिगुणः सान्त्वदानपूर्वः सान्त्वदानभेदत्रितयावयवकः । दण्डः, चतुर्गुणः सान्त्वदानभेदपूर्वः सान्त्वदानभेददण्डाख्यचतुर्गुणोपेतः ।

**इत्यभियुञ्जानेषूक्तमिति** । ये मित्रामित्राः यातव्यमभियोक्तुं प्रस्थिताः कृतशिबिराः, तेषु विषये सामादिविधानमनेन प्रकारेणोक्तमित्यर्थः । तेष्वप्रस्थितेषु स्वस्वभूमिस्थितेष्वपि त इमे उपायप्रयोगाः समाना इत्याह—**स्वभूमिष्ठेषु त्वित्यादि** । तुश्चार्थे । **विशेषस्त्विति** । तत्र विशेषस्तु अभिधीयत इति शेषः । **स्वभूमिष्ठानामिति** । सम्भूयप्रस्थानात् प्राक् स्वस्वभूमिस्थितानां मित्रामित्राणाम्, अन्यतमस्य, पण्यागारैः प्रभूतैः मणिमुक्तादिभिः पण्यैः सहितानिति शेषः, अभिज्ञातान् परविदितान्, दूतमुख्यान्, अभीक्ष्णं पुनःपुनः, प्रेषयेत् विजिगीषुः । ते प्रेषिताश्च दूताः, एनं मित्रामित्रान्यतमं, सन्धौ परहिंसायां वा योजयेयुः 'विजिगीषुणा सन्धत्स्व तद्विरोधिषु च विक्रमस्व' इति चोदयेयुरित्यर्थः । **अप्रतिपद्यमानमिति** । सन्धिमनभ्युपगच्छन्तमेव तं

**मानं कृतो नः सन्धिः इत्यावेदयेयुः। तमितरेषामुभयवेतनाः सङ्क्रामयेयुः—अयं वो राजा दुष्टः इति।**

**यस्य वा यस्माद् भयं वैरं द्वेषो वा, तं तस्माद् भेदयेयुः—'अयं ते शत्रुणा सन्धत्ते, पुरा त्वामतिसन्धत्ते, क्षिप्रतरं सन्धीयस्व, निग्रहे चास्य प्रयतस्व'। इति।**

**आवाहविवाहाभ्यां वा कृत्वा संयोगमसंयुक्तान् भेदयेत्।**

**सामन्ताटविकतत्कुलीनावरुद्धैश्चैषां राज्यं निघातयेत्। सार्थव्रजाटवीर्वा। दण्डं वाभिसृतम्। परस्परापाश्रयाश्चैषां जातिसङ्घाश्छिद्रेषु प्रहरेयुः। गूढाश्चाग्निरसशस्त्रेण॥**

मित्रामित्रान्यतमं, 'कृतो नः सन्धिरि'ति, आवेदयेयुः मिथ्या वदेयुः। **तमिति**। तं विजिगीषुणा सह कृतसन्धित्वेन मिथ्याप्रख्याप्यमानं मित्रामित्राद्यन्यतमम्, अथवा मिथ्याकथ्यमानं सन्धिम्, इतरेषां तदन्येषां मित्रामित्राणाम्, उभयवेतनाः विजिगीषुसकाशात् मित्रामित्रान्यतमसकाशाच्चोभयतो वेतनग्राहिणः, संक्रामयेयुः बोधयेयुः। कथम्, अयं वो राजा दुष्ट इति युष्माकमन्योन्यसन्धेयानामन्यतमोऽयं नृपतिः, दुष्टः स्वयं विजिगीषुणा सन्धिं कृत्वा प्रच्छादनाद् दुर्जनः, इति अनेन प्रकारेण वदन्त इति शेषः। एवं बोधिता मित्रामित्राः स्वान्यतमात् तस्माद् भिद्येरन्नित्यभिप्रायः।

अन्यं प्रकारमाह—**यस्य वेति**। यस्य यस्माद् भयं वैरं द्वेषो वा, यस्मिन्नित्यार्थे, तं भयवैरद्वेषान्यतमवन्तं, तस्माद् भयवैरद्वेषगोचराद्, भेदयेयुः, अर्थाद् गूढपुरुषाः। कथमुक्त्वा, अयं ते शत्रुणा विजिगीषुणा सह, सन्धत्ते, त्वां, पुरा अतिसन्धत्ते अतिसन्धास्यते, क्षिप्रतरम् अतिशीघ्रं, सन्धीयस्व विजिगीषुणा संहितो भव, निग्रहे चास्य प्रयतस्व त्वदतिसन्धित्सोरेतस्य मित्रामित्रान्यतमस्यापकारे प्रकर्षेण यत्नं कुरु, इति एवम्, उक्त्वेति शेषः।

अन्यं दण्डप्रकारमाह—**आवाहविवाहाभ्यां वेति**। आवाहः कन्यास्वीकरणं विवाहः कन्यादानं ताभ्यां वा, संयोगं सम्बन्धं, कृत्वा, असंयुक्तान् सम्बन्धरहितान्, भेदयेत्। त इमे स्वभूमिष्ठेषु भेदनप्रकाराः।

अथ दण्डप्रकारमाह—**सामन्तेत्यादि**। सामन्तैर्भूम्यनन्तरैः आटविकैररण्यपातिभिः तत्कुलीनैः तेषां मित्रामित्राणां कुलभवैः अवरुद्धैर्नियन्त्रितैस्तत्पुत्रैश्च, एषां मित्रामित्राणां, राज्यं पुरजनपदादिकं, निघातयेद्, अर्थाद् विजिगीषुः। सार्थव्रजाटवीर्वेति माधवपाठः, सार्थान् वणिक्सम्भारवाहिपशुबृन्दानि

**वितंसगिलवच्चारीन् योगैराचरितैः शठः ।**
**घातयेत् परमिश्रायां विश्वासेनामिषेण च ॥**

**इति कौटलीयार्थशास्त्रेऽभियास्यत्कर्माणि नवमाधिकरणे**
**षष्ठोऽध्यायः दूष्यशत्रुसंयुक्ताः,**
**आदितः सप्तविंशतिशततमः ॥**

---

व्रजान् गोमहिषादीन् अटवीः द्रव्यहस्तिवनानि च, निघातयेत् । दण्डं वाभिसृतं वनाजीवादिप्रसक्तं सैन्यं च, निघातयेत् । 'सार्थव्रजाटवीभिर्वे'ति मूलादर्शदृष्टे तृतीयान्तपाठे सार्थादिभिः अभिसृतं रक्षकत्वेनाश्रितं, दण्डं च निघातयेदिति योज्यम् । किन्तु तत्र द्वितीयो वाशब्दश्चकारार्थः । **परस्परापाश्रयाश्चेति** । अन्योन्योपोद्बलिताश्च, जातिसङ्घाः सङ्घवृत्ते वक्ष्यमाणा विच्छिलिकादयः, एषां मित्रामित्राणां, छिद्रेषु प्रमादस्थानेषु, प्रहरेयुः अर्थादेनान् । **गूढाश्च** तीक्ष्णरसदादयो गूढपुरुषाश्च, अग्निरसशस्त्रेण वह्निविषायुधैः, प्रहरेयुः ॥

वक्तव्यशेषं वदन् प्रकरणमुपसंहरति — **वितंसेत्यादि** । परमिश्रायां मित्रामित्रमिश्रणजनितायामापदि, शठः विजिगीषुर्गूढवृत्तिः सन्, वितंसगिलवत् 'वितंसः पक्षिविश्वासार्थपक्षिरूपालेख्ययोगी देहाच्छादनपटः' इति माधवः, गिलः भक्ष आमिषं ताभ्यां तुल्यं वर्तमानैः, योगैः कपटोपायैः, आचरितैः प्रयुक्तैः, विश्वासेन स्वस्मिन् विश्वासोत्पादनेन, आमिषेण च सारपण्यादिदानेन च, अरीन्, घातयेत् ॥

इति कौटलीयार्थशास्त्रव्याख्यायामभियास्यत्कर्माणि नवमेऽधिकरणे
षष्ठोऽध्यायः दूष्यशत्रुसंयुक्ताः, आदितः
सप्तविंशत्युत्तरशततमः ॥

---

१४५,१४६. प्रक. अर्थानर्थसंशययुक्ताः, तासामुपाय-
विकल्पजाः सिद्धयश्च ।

**कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति ; अपनयो बाह्याः । तदुभयमासुरी वृत्तिः । स्वजनविकारः कोपः परवृद्धिहेतुष्वापद् अर्थोऽनर्थः संशय इति ।**

**योऽर्थः शत्रुवृद्धिमप्राप्तः करोति, प्राप्तः प्रत्यादेयः परेषां भवति, प्राप्यमाणो वा क्षयव्ययोदयो भवति, स भवत्यापदर्थः । यथा — सामन्तानामामिषभूतः सामन्तव्यसनजो लाभः शत्रुप्रार्थितो वा स्वभावा-**

**अर्थानर्थसंशययुक्ता** इति सूत्रम् । अर्थो हिरण्यभूम्यादिः, अनर्थस्त-न्नाशः शरीरनाशश्च, संशयः तयोरनिर्धारणं, एभिः युक्ताः प्रकृत-त्वादापद उच्यन्त इति सूत्रार्थः । सामदानभेददण्डानामुपायानां या आपदः पूर्वमुक्ताः तासामुपायविकल्पजाः सिद्धयश्च निरूप्यन्ते इति प्रकरणमिदमा-रभ्यते ।

**कामादिरुत्सेक** इति । कामक्रोधादिरुत्सेकः, स्वाः प्रकृतीः मन्त्र्याद्या-भ्यन्तरप्रकृतीः, कोपयति विकारयति, अपनयः सन्धिविग्रहादीनामयथावत्-प्रयोगः, बाह्या राष्ट्रमुख्यान्तपालाटविकरूपा बाह्यप्रकृतीः, कोपयति । तद् उभयं कामादिरपनयश्चेत्येतद् द्वयम्, आसुरी वृत्तिः असुराणां धर्मः, मायावृत्तिर्वा । अतोऽस्य वर्जने महान् यत्नो राज्ञा कर्तव्य इत्यभिप्रायः । अस्य स्वजन-कोपहेतोः पूर्वमुक्तस्येदं पुनर्वचनमासुरवृत्तित्वेन निन्दार्थम् । **स्वजनेत्यादि** । तदुभयप्रभवः स्वजनविकारलक्षणो यः कोपः स एव शत्रुवृद्धिनिमित्तेषु आयमा-नेषु आपद्रूपतां प्रतिपद्यते । सा चापद् अर्थरूपा अनर्थरूपा तदुभयसंशयरूपा चेत्यर्थः ।

तत्र कोऽसावापदर्थ इत्याह — **योऽर्थ** इत्यादि । योऽर्थः उपेक्षा-वशात् स्वहस्तमप्राप्तः सन् शत्रोरेव वृद्धिं करोति सोऽर्थ एक आपदर्थो भवति, योऽर्थः स्वहस्तप्राप्तोऽपि परैः प्रत्यादेयो भवति सोऽपर आपदर्थः, यो वार्थः प्राप्यमाणतायामतिप्रवृद्धक्षयव्यययोगी भवति सोऽन्य आपदर्थ इत्यर्थः । तमुदाहृत्य दर्शयति —— **यथेत्यादि** । सामन्तानाम् आमिषभूतः बहुसामन्तभोग्य एकेन गृहीतो लाभः । स हि तैः सम्भूयाभियोगिभिः प्रत्या-देयत्वादापदर्थो भवति । **सामन्तव्यसनजो लाभ** इति । सामन्तस्य गुण-प्रातिलोम्यादिव्यसनदशायां तस्मादपहृतो लाभः, स हि तद्व्यसनापगमे प्रत्या-

धिगम्यो लाभः पश्चात्कोपेन पार्ष्णिग्राहेण वा विगृहीतः पुरस्ताल्लाभः मित्रोच्छेदेन सन्धिव्यतिक्रमेण वा मण्डलविरुद्धो लाभ इत्यापदर्थः ।

स्वतः परतो वा भयोत्पत्तिरित्यनर्थः ।

तयोः 'अर्थो न वे'ति, 'अनर्थो न वा' इति, 'अर्थोऽनर्थः' इति, 'अनर्थः अर्थः' इति, संशयः ।

शत्रुमित्रमुत्साहयितुमर्थो न वेति संशयः । शत्रुबलमर्थमानाभ्यामावाहयितुमनर्थो न वेति संशयः । बलवत्सामन्तां भूमिमादातुमर्थोऽनर्थः इति संशयः । ज्यायसा सम्भूययानमनर्थोऽर्थ इति संशयः ।

देयत्वादापदर्थः । शत्रुप्रार्थितो वेत्यादि । स्वभावात् प्रार्थनां विनैव लब्धुं योग्य एव शत्रुणा प्रार्थितः प्रत्यादेयत्वादापदर्थः । शत्रुप्राप्य इति पाठे शत्रुकाम्य इत्यर्थः । पश्चात्कोपेनेति । मूले दृष्याद्दिकोपेन, पार्ष्णिग्राहेण वा पृष्ठशत्रुणा वा, विगृहीतः बाधितः, पुरस्ताल्लाभः यातव्यसकाशलभ्यो लाभः, आपदर्थः । मित्रोच्छेदेनेति । मित्रस्य दुर्गहरणादिना, सन्धिव्यतिक्रमेण कृतसन्ध्युल्लङ्घनेन वा निमित्तेन, मण्डलविरुद्धः राजमण्डलाननुज्ञातः, लाभः । इत्यापदर्थ इति । एवञ्जातीयो लाभ आपदर्थो विज्ञेय इत्यर्थः ।

अनर्थमाह—स्वत इत्यादि । स्वतः योऽर्थो गृह्यते तस्मात्, परतो वा गृह्यमाणमर्थं निमित्तीकृत्यान्यतो वा, भयोत्पत्तिः, इत्यनर्थः एवम्प्रकारोऽनर्थः ।

उक्तयोरर्थानर्थयोः संशयमाह—तयोरित्यादि । अर्थानर्थयोः, अर्थो न वेति संशयः अर्थस्य किं भाव उताभाव इत्येवमाकारः अर्थतदभावकोटिकः संशय एकः । अनर्थो नवेति किमनर्थस्य भाव उताभाव इति अनर्थतदभावकोटिको द्वितीयः । अर्थोऽनर्थ इति किम् अर्थः उतानर्थ इति अर्थानर्थकोटिकस्तृतीयः, अनर्थोऽर्थ इति किमनर्थ उतार्थ इति अनर्थार्थकोटिकश्चतुर्थः ।

इमान् क्रमेणोदाहरति—शत्रुमित्रमिति । शत्रोर्मित्रम्, उत्साहयितुं शत्रावभियोजयितुं शत्रावभियोजनमित्यर्थः, अर्थो नवेति अर्थभावाभावकोटिकः संशयः । शत्रुबलमित्यादि । शत्रोः सैन्यम्, अर्थमानाभ्यां भूम्यादिदानबहुमानाभ्याम्, आवाहयितुम् आह्वातुम्, अनर्थो नवेति अनर्थभावाभावकोटिकः । बलवत्सामन्तामिति । प्रबलप्रत्यमित्रां, भूमिम्, आदातुम्, अर्थो-

**तेषामर्थसंशयमुपगच्छेत् ।**

**अर्थोऽर्थानुबन्धः, अर्थो निरनुबन्धः, अर्थोऽनर्थानुबन्धः, अनर्थोऽर्थानुबन्धः, अनर्थो निरनुबन्धः, अनर्थोऽनर्थानुबन्ध इत्यनुबन्धषड्वर्गः ।**

**शत्रुमुत्पाट्य पार्ष्णिग्राहादानमर्थोऽर्थानुबन्धः ।**

**उदासीनस्य दण्डानुग्रहः फलेन अर्थो निरनुबन्धः ।**

**परस्यान्तरुच्छेदनमर्थोऽनर्थानुबन्धः ।**

ऽनर्थ इति अर्थानर्थकोटिकः । **ज्यायसेति** । बलाधिकेन सह, सम्भूययानं यातव्याभियानम्, अनर्थोऽर्थः अनर्थो वार्थो वा इत्यनर्थार्थकोटिकः संशयः । अत्राद्येऽनर्थस्य द्वितीयेऽर्थस्य तृतीयेऽर्थाभावस्य च शङ्का नेति बोद्धव्यम् ।

**तेषामिति** । उक्तानां संशयानां मध्ये, अर्थसंशयम् अर्थमात्रविषयमनर्थस्पर्शरहितं संशयम् 'अर्थो न वा' इत्येवंलक्षणं संशयम्, उपगच्छेत् उपगम्य तथाभूते विषये समुद्युञ्जीतेत्यर्थः ।

अथार्थानर्थयोः प्रत्येकमनुबन्धयोगात् तदयोगाच्चानुबन्धनिबन्धनः षड्वर्गो जायत इत्याह — **अर्थ** इत्यादि । अर्थः 'योऽर्थः शत्रुवृद्धिमप्राप्तः करोति' इत्यादिनोक्त आपदर्थः, तस्य तथाविधेनार्थेनानुबन्धः, अथ तथाविधार्थानुबन्धाभावः, अथ 'स्वतः परतो वा भयोत्पत्तिरित्यनर्थः' इत्युक्तलक्षणेनानर्थेनानुबन्ध इति त्रयः । तथानर्थस्यार्थेनानुबन्धः, अनुबन्धाभावः, अनर्थेनानुबन्ध इति त्रय इत्याहत्य षट् ।

तेष्वाद्यमुदाहरति — **शत्रुमुत्पाट्येति** । यातव्यमरिमुत्पाट्य, पार्ष्णिग्राहादानं पृष्ठशत्रोर्ग्रहणम्, अर्थोऽर्थानुबन्धः ।

द्वितीयमुदाहरति — **उदासीनस्येति** । तस्य, फलेन धनादिग्रहणेन, दण्डानुग्रहः स्वसैन्यदानेनोपकारः, अर्थो निरनुबन्धः, अर्थस्यानर्थस्य वा तेनानुत्पादादित्यभिप्रायः ।

अर्थमनर्थानुबन्धमुदाहरति — **परस्येति** । शत्रोः, अन्तरुच्छेदनम् इहान्तश्शब्देन 'अरेर्नेतुश्च मध्यस्थो दुर्बलोऽन्तर्धिरुच्यते । प्रतिघातो बलवतः' इति पार्ष्णिग्राहचिन्तोक्तलक्षणोऽन्तर्धिरुच्यते, अन्तर्धेरुच्छेदनम्, अर्थोऽनर्थानुबन्धः बलवतः शत्रोरनिवारणादित्यभिप्रायः । इत्थमर्थत्रिवर्ग उदाहृतः ।

शत्रुप्रातिवेशिकस्यानुग्रहः कोशदण्डाभ्यामनर्थोऽर्थानुबन्धः ।

हीनशक्तिमुत्साह्य निवृत्तिरनर्थो निरनुबन्धः ।

ज्यायांसमुत्थाप्य निवृत्तिरनर्थोऽनर्थानुबन्धः ।

तस्य पूर्वः पूर्वः श्रेयानुपसम्प्राप्तुम् । इति कार्यावस्थापनम् ।

समन्ततो युगपदर्थोत्पत्तिः समन्ततोऽर्थापद् भवति ।

सैव पार्ष्णिग्राहविगृहीता समन्ततोऽर्थसंशयापद् भवति ।

अनर्थत्रिवर्गमुदाहरति — शत्रुप्रातिवेशिकस्येति । शत्रोः प्रातिवेशः भूम्यनन्तरः तस्य, कोशदण्डाभ्याम् अनुग्रहः शत्रुविरोधे कोशदण्डदानेन सहकरणम्, अनर्थोऽर्थानुबन्धः तदात्वानर्थरूपोऽप्यायत्यावर्थानुबन्धः शत्रुनिग्रहहेतुत्वात् । नन्वर्थत्रिवर्गेऽर्थोऽर्थानुबन्धः प्रथमं कथितः । तत्क्रमेणह्यानर्थोऽनर्थानुबन्धः प्रथमं कथनीयः, न त्वनर्थोऽर्थानुबन्ध. इति चेत्, सत्यं, किन्तु 'तस्य पूर्वः पूर्वः श्रेयानुपसम्प्राप्तुम्' इति वक्ष्यति, तदानुगुण्यार्थमत्र क्रमान्यत्वमाहृतम् ।

हीनशक्तिमिति । दुर्बलम्, उत्साह्य 'अहं ते सहकरिष्यामि' इति, शत्र्वभियोगे सन्नाह्य, निवृत्तिः ततः स्थानं निवर्तनम्, अनर्थो निरनुबन्धः धनव्ययादिहेतुत्वात् तदात्वेऽनर्थरूपः, तेन शत्रुनिग्रहासिद्ध्या नार्थानुबन्धो न वा हीनशक्तिकोपस्याकिञ्चित्करत्वान्नानर्थानुबन्ध इत्यतो निरनुबन्धश्चेत्यर्थः ।

ज्यायांसमिति । प्रबलम्, उत्थाप्य 'तव सहकारी भविष्यामि' इत्युत्साह्य, निवृत्तिः, अनर्थोऽनर्थानुबन्धः धनव्ययहेतुत्वात् तदात्वेऽनर्थः प्रबलकोपनिमित्तकेनानर्थान्तरेणानुबध्यते चेत्यर्थः ।

तस्येत्यादि । अनुबन्धषड्वर्गस्य मध्ये अर्थत्रिवर्गे पूर्वपूर्व उपादेयतया प्रतिपत्तुमर्हः, अनर्थत्रिवर्गे तु परिहर्तव्यतया प्रतिपत्तुमर्ह इत्यर्थः । इति कार्यावस्थापनमिति । कार्ययोरर्थानर्थयोः अवस्थापनं स्वरूपतो व्यवस्थापनम् ।

अथ देशतोऽवस्थापनमाह — समन्तत इत्यादि । अग्रतः पृष्ठतः पार्श्वतश्च सर्वतो यौगपद्येनार्थोत्पत्तिः समन्ततोर्थापद् भवति । सैवेत्यादि । समन्ततो युगपदर्थोत्पत्तिरेव पार्ष्णिग्राहेण विरोधिता समन्ततोर्थसंशयापद् भवति ।

**तयोर्मित्राक्रन्दोपग्रहात् सिद्धिः ।**

**समन्ततः शत्रुभ्यो भयोत्पत्तिः समन्ततोनर्थापद् भवति ।**

**सैव मित्रविगृहीता समन्ततोनर्थसंशयापद् भवति ।**

**तयोश्चलामित्राक्रन्दोपग्रहात् सिद्धिः । परमिश्राप्रतीकारा वा ।**

**इतो लाभ इतरतो लाभ इत्युभयतोर्थापद् भवति । तस्यां समन्ततोर्थायां च लाभगुणयुक्तमर्थमादातुं यायात् । तुल्ये लाभगुणे प्रधानमासन्नमनतिपातिनम्, ऊनो वा येन भवेत् तम्, आदातुं यायात् ।**

उक्तयोरर्थानर्थसंशयापदोः प्रतीकारमाह — **तयोरिति** । समन्ततोर्थापत्समन्ततोर्थसंशयापदोः, मित्राक्रन्दोपग्रहात् मित्रस्य पुरस्तान्मित्रस्य **आक्रन्दस्य** पृष्ठतोमित्रस्य च उपग्रहात् सन्धानेन सहायीकरणात्, सिद्धिः प्रतिक्रिया ।

समन्ततो युगपच्छत्रुभ्यो भयोत्पत्तिः समन्ततोनर्थापदित्याह — **समन्ततः शत्रुभ्य** इत्यादि ।

समन्ततोनर्थापदेव मित्रेण स्वानुकूलेन विरोधिता समन्ततोनर्थसंशयापद् भवतीत्याह — **सैव मित्रविगृहीतेत्यादि** ।

तयोः प्रतीकारमाह — **तयोरिति** । समन्ततोनर्थापत्समन्ततोनर्थसंशयापदोः, चलामित्राक्रन्दोपग्रहात् चलामित्रस्य दुर्गान्तरस्थस्य शत्रोः आक्रन्दस्य पृष्ठतोमित्रस्य च उपग्रहात् स्वानुकूलीकरणात्, सिद्धिः प्रतीकारः । **परमिश्राप्रतीकारा** वेति । परमिश्रायाम् आपदो यः प्रतीकारः 'परमिश्रायां मित्रतः सिद्धिः' इति कृत्यामित्रसंयुक्तप्रकरणे कथितः, स वा तयोः प्रतीकार इत्यर्थः ।

एकतोऽपरतश्चेत्युभयतो लाभो यस्यां भवति सोभयतोर्थापदित्याह — **इतो लाभ** इत्यादि । प्रतीकारमाह — **तस्यामिति** । उभयतोर्थापदि, समन्ततोर्थायां च समन्ततोर्थापदि च, लाभगुणयुक्तम् 'आदेयः प्रत्यादेयः प्रसादकः' इत्यादिना क्षयव्ययलाभविपरिमर्शप्रकरणे ये लाभगुणा उक्ताः तैर्युक्तम्, **अर्थम्**, आदातुं, यायात् । पूर्वमेका प्रतिक्रिया समन्ततोर्थापदि 'तयोर्मित्राक्रन्दोपग्रहात् सिद्धिरि'त्युक्ता, अन्या त्वत्रोपदिष्टा । **तुल्ये लाभगुण** इति । लाभगुणे समाने, प्रधानं वा प्रशस्ततरफलं वा, आसन्नं वा देशतः सन्निकृष्टं वा, अनतिपातिनं वा कालातिक्रमासहम् आसन्नकालं वा, अतिपातिनमिति पाठे आत्ययिकमित्यर्थः, ऊनो वा येन भवेत् तं यस्मिन्ननुपात्ते हीनत्वमात्मनः यात् तं वा अर्थलाभम्, आदातुं यायात् ।

**इतोऽनर्थ इतरतोऽनर्थ इत्युभयतोनर्थापत् । तस्यां समन्ततोनर्थायां च मित्रेभ्यः सिद्धिं लिप्सेत ।**

**मित्राभावे प्रकृतीनां लघीयस्यैकतोनर्थां साधयेत् । उभयतोनर्थां ज्यायस्या । समन्ततोनर्थां मूलेन प्रतिकुर्यात् । अशक्ये सर्वमुत्सृज्यापगच्छेत् । दृष्टा हि जीवतः पुनरापत्तिः, यथा सुयात्रोदयनाभ्याम् ।**

**इतो लाभ इतरतो राज्याभिमर्श इत्युभयतोर्थानर्थापद् भवति ।**

---

उभयतोनर्थापदमाह — **इतोऽनर्थ इतरतोऽनर्थ** इत्यादि । तस्यां प्रतीकारमाह— **तस्यामिति** । उभयतोनर्थापदि, समन्ततोनर्थायां च, मित्रेभ्यः, सिद्धिं प्रतिक्रियां, लिप्सेत । समन्ततोनर्थायाः 'तयोश्चल्यामित्राक्रन्दोपग्रहात् सिद्धिरि' ति प्रतिक्रिया पूर्वमभिहिता, प्रतिक्रियान्तरं त्वत्रोच्यते ।

एष एव मित्रद्वारकः प्रतीकारः एकतोनर्थायामपि भवतीत्यभिसन्धि मनसि कुर्वन् मित्राभावपक्षे तस्या उभयतोनर्थायाः समन्ततोनर्थायाश्च प्रतीकारमाह — **मित्राभाव इति** । मित्रसाहाय्यालाभे, प्रकृतीनां मध्ये, लघीयस्या लघुतरया प्रकृत्या तथाविधप्रकृतित्यागेनेत्यर्थः, एकतोनर्थां, साधयेत् प्रतिकुर्यात् । उभयतोनर्थां, ज्यायस्या प्रशस्यतरप्रकृतित्यागेन, प्रतिकुर्यात् । समन्ततोनर्थां मूलेन मूलं स्थानीयं तत्त्यागेन प्रतिकुर्यात् । **अशक्य इति** । प्रतीकारे लघुतरप्रकृत्यादित्यागैरशक्ये सति, सर्वम् उत्सृज्य स्वात्मातिरिक्तं सर्वस्वं परित्यज्य, अपगच्छेत् अन्यत्रापसृत्यात्मानं रक्षेदित्यर्थः । तथात्मरक्षणस्य प्रयोजनं पुनःस्वपदप्राप्तिरूपं सम्भावितमित्याह — **दृष्टा हीति** । जीवता विपद्यन्यत्रापसृत्य यत्नेनात्मानं रक्षता, पुनरापत्तिः दृष्टा हि पुनः स्वस्थानप्रतिलम्भोऽनुभूतो हि । आत्मरक्षणेन स्वपदपुनःप्राप्तिदर्शनस्य ऐतिहासिकमहापुरुषसमुदाचारसिद्धतां दर्शयितुमाह — **यथा सुयात्रोदयनाभ्यामिति** । सुयात्रो नलः उदयनो वत्सराजः ताभ्यां विपदि आत्मानं रक्षद्भ्यां पुनरापत्तिर्दृष्टेत्यर्थः । इह 'जीवतः पुनरावृत्तिरि'त्यपि पाठः । तदा तु दृष्टेत्यस्य लोकः कर्ता गम्यः । यथा सुयात्रोदयनाभ्यामित्यस्य च जीवित्वा पुनरावृत्तिं प्राप्तवद्भ्यां नलवत्सराजाभ्यां निदर्शनभूताभ्यामित्यर्थः ।

उभयतोर्थानर्थामाह — **इतो लाभ इति** । एकतो लाभः, इतरतो राज्याभिमर्शः स्वजनपदाक्रमणम्, इति एवमुभयतोऽर्थानर्थाभ्यां युक्तेत्यर्थः,

**तस्यामनर्थसाधको योऽर्थः तमादातुं यायात्; अन्यथा हि राज्याभिमर्शं वारयेत् ।**

**एतया समन्ततोर्थानर्थापद् व्याख्याता ।**

**इतोऽनर्थ इतरतोऽर्थसंशय इत्युभयतोनर्थार्थसंशया । तस्यां पूर्वमनर्थं साधयेत्, तत्सिद्धावर्थसंशयम् ।**

**एतया समन्ततोनर्थार्थसंशया व्याख्याता ।**

**इतोऽर्थ इतरतोऽनर्थसंशय इत्युभयतोर्थानर्थसंशयापत् ।**

**एतया समन्ततोर्थानर्थसंशया व्याख्याता ।**

**तस्यां पूर्वां पूर्वां प्रकृतीनामनर्थसंशयान्मोक्षयितुं यतेत । श्रेयो हि मित्रमनर्थसंशये तिष्ठन्न दण्डः, दण्डो वा न कोश इति ।**

---

उभयतोर्थानर्थापद् भवति । तत्र प्रतीकारमाह — **तस्यामित्यादि** । उक्तायामापदि, योऽर्थ आदीयमानोऽनर्थस्यापि प्रतीकारं प्रयोजयेत् तमर्थमादातुं यायात् । स चेदर्थोऽनर्थप्रतीकाराक्षमः तर्हि अर्थलाभमुपेक्ष्य राज्याभिमर्शमेव प्रतिकुर्यादित्यर्थः ।

उभयतोर्थानर्थापद उक्तां प्रतिक्रियां समन्ततोर्थानर्थापद्यतिदिशति— **एतया समन्ततोर्थेत्यादि** ।

अनर्थनिश्चयार्थसंशयवतीमाह — **इतोऽनर्थ इति** । एकतोऽनर्थनिश्चयः अन्यतोऽर्थसंशय इत्युभयवती उभयतोनर्थार्थसंशया नाम । तत्प्रतिक्रियामाह — **तस्यामित्यादि** । तस्यां प्रथममनर्थं प्रतिकुर्यात् । अनर्थप्रतीकारे जाते पश्चादर्थसंशयं प्रतिकुर्यादित्यर्थः ।

उभयतोनर्थार्थसंशयायामुक्तं प्रतिक्रियाक्रमं समन्ततोनर्थार्थसंशयायामतिदिशति — **एतया समन्ततोनर्थेत्यादि** ।

अथानर्थसंशयार्थनिश्चयवतीमापदमाह — **इतोऽर्थ इतरतोऽनर्थसंशय इत्यादि** ।

उभयतोर्थानर्थसंशयया समानलक्षणा समानप्रतीकारा च समन्ततोर्थानर्थसंशयेत्यभिप्रायेणाह — **एतया समन्ततोर्थानर्थसंशयेत्यादि** ।

तत्प्रतीकारमाह— **तस्यामित्यादि** । उभयतोर्थानर्थसंशयापदि, प्रकृतीनां स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रलक्षणानां मध्ये, पूर्वां पूर्वां प्रकृतिम्, अनर्थसंशयात्, मोक्षयितुं यतेत उत्तरोत्तरस्याः प्रागेव मोचयितुं यत्नं कुर्यात् । पूर्वपूर्वामपेक्ष्योत्तरोत्तरस्या अप्राधान्याद् अप्रधानप्रकृत्यनर्थमोक्षणस्य

**समग्रमोक्षणाभावे प्रकृतीनामवस्थानेन मोक्षयितुं यतेत । तत्र पुरुषप्रकृतीनां न बहुलमनुरक्तं वा तीक्ष्णलुब्धवर्जम् । द्रव्यप्रकृतीनां सारं महोपकारं वा । सन्धिनासनेन द्वैधीभावेन वा लघूनि विपर्ययैर्गुरूणि ।**

**क्षयस्थानवृद्धीनां चोत्तरोत्तरं लिप्सेत । प्रातिलोम्येन वा क्षयादीनाम् । आयत्यां विशेषं पश्येत् ।**

पश्चात्करणे ऽभिनियोगादिरभिप्रायः । [illegible] मोक्षणविलम्बस्यानति-पीडावहत्वं [illegible] न प्रकृतिविशेषनि-दर्शनेन स्पष्टयति ---- श्रेय इति । [illegible] तिष्ठन् मित्रे, श्रेयः अनति-पीडाहेतुत्वा [illegible] निष्ठत्वातिपीडाहेतुतया नैव [illegible] तिष्ठन् श्रेयान्, न तु [illegible], अनेन प्रकारेणान्य-न्यापि [illegible] भावश्च बोद्ध-व्यमित्यभिप्रायः ।

समग्रमोक्षणाभाव इति । प्रकृतयो हि पुरुषा द्रव्याणि च, तेषां सर्वेषां मोक्षणस्याशक्यत्वात्, प्रकृतीनाम् अवस्थानेन, मोक्षयितुं यतेत । तत्र विशेष-माह ---- तत्रेति । अवस्थानेन, पुरुषप्रकृतीनां, बहुलम् अनुरक्तं वा, ती-क्ष्णलुब्धवर्जं तीक्ष्णलुब्धाभ्यां वर्जितं, मोक्षयितुं यतेत । द्रव्यप्रकृतीनां मध्ये, सारं महामूल्यं, महोपकारं वा, मोक्षयितुं यतेत । सन्धिनेत्यादि । तेन, आस-नेन, द्वैधीभावेन वा, लघुभूतेन गुणेनेत्यर्थः, लघूनि लघुद्रव्याणि, मोक्षयितुं यतेत । विपर्ययैः सन्ध्यादिविपर्ययरूपैर्गुणैः अर्थाद् विग्रहयानसमाश्रयरूपैः, गुरूणि गुरुद्रव्याणि, मोक्षयितुं यतेत । एवं तावद् मोक्षयितव्यं मोक्षणौपयिकं चाभिहितम् ।

अथ मोक्षणपरिपाटीमाह---- **क्षयस्थानवृद्धीनां चेति** । शक्तिसिद्ध्यो-रपचयः क्षयः स्थानं साम्यं प्रकृतिस्थता शक्तिसिद्ध्योरुपचयो वृद्धिः, क्षया-दीनां मध्यात्, उत्तरोत्तरं लिप्सेत क्षयात् स्थानं स्थानाद् वृद्धिं च, प्राप्तुमी-हेत, न तु क्षयात् वृद्धिमित्यभिप्रायः । **प्रातिलोम्येन वा क्षयादीनामिति** । प्राप्तवृद्धिरेव वृद्धेः स्थानं स्थानात् क्षयं च प्रतिलोमगत्या लिप्सेतेत्यर्थः । कि-मर्थमियं प्रतिलोमगत्या लिप्सेत्याकाङ्क्षायामायतौ वृद्धिविशेषलाभार्थमित्या-ह---- **आयत्यां विशेषं पश्येदिति** । अनया प्रतिलोमगत्या कमपि वृद्धे-रतिशयमुत्तरकाले लभेयेति यदि जानीयादित्यर्थः ।

**इति देशावस्थापनम् ।**

**एतेन यात्रादिमध्यान्तेष्वर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता ।**

**निरन्तरयोगित्वाच्चार्थानर्थसंशयानां यात्रादावर्थः श्रेयानुपसम्प्राप्तुं पार्ष्णिग्राहासारप्रतिघाते क्षयव्ययप्रवासप्रत्यादेयमूलरक्षणेषु च भवति। तथानर्थः संशयो वा स्वभूमिष्ठस्य विषह्यो भवति ।**

**एतेन यात्रामध्येऽर्थानर्थसंशयानामुपसम्प्राप्तिर्व्याख्याता ।**

---

**इति देशावस्थापनमिति** । अनेन प्रकारेण देशनिमित्तापदां व्यवस्थापनमुक्तमित्यर्थः ।

उक्तं देशनिमित्तापद्विषयं विधिं कालनिमित्तापद्यतिदिशति— **एतेने**त्यादि । उक्तेन देशनिमित्तापत्स्वरूपप्रतिविधानकथनेन, यात्रादिमध्यान्तेषु यात्राया आदौ मध्येऽन्ते च, अर्थानर्थसंशयानाम्, उपसम्प्राप्तिः अर्थात् प्रतिक्रिया च, व्याख्याता उक्तप्राया, देशस्योक्ताः समन्ततोयुगपदर्थोत्पत्त्यादय आपदस्तत्प्रतिक्रियाश्च पार्ष्णिग्राहाक्रन्दामित्रोपग्रहादयो यात्राया आदिमध्यान्तकालेष्वपि भवन्तीति भावः ।

तत्र यात्राया आद्यवस्थायां युगपदर्थाद्युत्पत्तावाह —**निरन्तरे**त्यादि । यात्रादौ यात्राया आरम्भे, अर्थानर्थसंशयानां, निरन्तरयोगित्वात् युगपद् योगे सतीत्यर्थः, अर्थः, उपसंप्राप्तुम्, आदातुं, श्रेयान् भवति । श्रेयस्त्वं चार्थस्य पार्ष्णिग्राहासारप्रतिघातादिसाधकत्वादित्यभिप्रायेणाह — **पार्ष्णिग्राहासारप्रतिघाते** इति । पार्ष्णिग्राहस्य पृष्ठशत्रोः आसारस्य यातव्यसुहृद्बलस्य च, प्रतिघाते प्रतिघातार्थमित्यर्थः, क्षयव्ययप्रवासप्रत्यादेयमूलरक्षणेषु च क्षयो युग्यपुरुषापचयः व्ययो हिरण्यधान्याद्यपचयः प्रवासो दूराध्वगमनं प्रत्यादेयं यातव्यात् प्रत्यादातुं योग्यं तदपहृतं भूम्यादिकम् अर्थादर्थसाध्यसहायोपग्रहनिर्वर्त्यं प्रत्यादेयप्रत्यादानं मूलरक्षणं स्थानीयस्य रक्षणम् इत्येतेषु च फलभूतेष्वित्यर्थः । अर्थो यथा तथानर्थः संशयो वा यात्रादौ स्वभूमिस्थितस्य विजिगीषोः सुखसाध्यो भवतीत्याह — **तथानर्थ** इत्यादि । विषह्यः सोढुं शक्यः साध्य इत्यर्थः ।

यात्रादाविव यात्रामध्येऽप्यर्थानर्थसंशयानां पार्ष्णिग्राहासारप्रतिबन्धादिप्रयोजनवत्त्वाविशेषादुपसम्प्राप्तिर्बोद्धव्येत्याह — **एतेने**त्यादि ।

**यात्रान्ते तु कर्शनीयमुच्छेदनीयं वा कर्शयित्वोच्छिद्य वार्थः श्रेयानुपसम्प्राप्तुं नानर्थः संशयो वा पराबाधभयात् ।**

**सामवायिकानामपुरोगस्य तु यात्रामध्यान्तगोऽनर्थः संशयो वा श्रेयानुपसम्प्राप्तुमनिबन्धगामित्वात् ।**

**अर्थो धर्मः काम इत्यर्थत्रिवर्गः । तस्य पूर्वः पूर्वः श्रेयानुपसम्प्राप्तुम् ।**

**अनर्थोऽधर्मः शोक इत्यनर्थत्रिवर्गः । तस्य पूर्वः पूर्वः श्रेयान् प्रतिकर्तुम् ।**

**अर्थोऽनर्थ इति, धर्मोऽधर्म इति, कामः शोक इति संशयत्रिवर्गः । तस्योत्तरपक्षसिद्धौ पूर्वपक्षः श्रेयानुपसम्प्राप्तुम् ।**

---

यात्राया अन्ते तु कर्शनीयमुच्छेदनीयं वा शत्रुं कर्शयित्वोच्छिद्य वा परभूमौ स्थितस्य विजिगीषोरर्थ एवोपसम्प्राप्तियोग्यो भवति, न त्वनर्थः संशयो वा, परस्य रन्ध्रान्वेषिणः सकाशादाबाधस्य सम्भावनादित्याह — **यात्रान्ते त्वित्यादि** ।

सामवायिकानां प्रधानस्यैष विधिः । अप्रधानस्य त्वाह — **सामवायिकानामिति** । तेषाम्, अपुरोगस्य तु अप्रधानस्य तु, यात्रामध्यान्तगः यात्राया मध्येऽन्ते वा सम्भूतः, अनर्थः संशयो वा, उपसम्प्राप्तुं प्रतिकर्तुं, श्रेयान्, कुतः, अनिबन्धगामित्वात् पुरोगस्य धूर्वहतया सप्रतिबन्धत्वेनान्यत्र गन्तुमशक्तत्वेऽपि अपुरोगस्य प्रतिबन्धरहितस्यान्यत्र गतिसम्भवादित्यर्थः ।

अथार्थानर्थसंशयानां प्रत्येकं त्रिवर्गं दर्शयन् वर्ग्याणामितरेतरापेक्षं श्रेयस्त्वमाह — **अर्थ** इत्यादि । अर्थत्रिवर्गः उपादेयत्रिवर्गः । **तस्येति** । अर्थत्रिवर्गस्य मध्ये पूर्वः पूर्वः उपसम्प्राप्तुं श्रेयान् कामाद् धर्मः प्रशस्ततरो धर्माच्चार्थ इत्यर्थः ।

**अनर्थ** इत्यादि । अनर्थत्रिवर्गः परिहार्यत्रिवर्गः ।

संशयत्रिवर्गमाह — **अर्थोऽनर्थ इतीत्यादि** । **तस्येति** । संशयत्रिवर्गस्य मध्ये, उत्तरपक्षसिद्धौ अत्र हि वर्गे अर्थानर्थरूपपक्षद्वयात्मकः प्रथमो वर्ग्यः धर्माधर्मरूपपक्षद्वयात्मको द्वितीयः कामशोकरूपपक्षद्वयात्मकस्तृतीय इति त्रयो वर्ग्याः, तेष्वेकैकस्मिन् उत्तरपक्षस्यानर्थादेः सिद्धौ प्रतिक्रियायां कृतायां, पूर्वपक्षः अर्थादिः, उपसम्प्राप्तुं श्रेयान् ।

**इति कालावस्थापनम् । इत्यापदः ।**

**तासां सिद्धिः पुत्रभ्रातृबन्धुषु सामदानाभ्यां सिद्धिरनुरूपा, पौरजानपददण्डमुख्येषु दानभेदाभ्यां, सामन्ताटविकेषु भेददण्डाभ्याम् ।**

**एषानुलोमा विपर्यये प्रतिलोमा । मित्रामित्रेषु व्यामिश्रा सिद्धिः । परस्परसाधका ह्युपायाः ।**

---

**इति कालावस्थापनमिति** । अनेन प्रकारेण यात्रादिमध्यान्तकालिकार्थानर्थादिसम्बद्धा व्यवस्था निरूपितेत्यर्थः । **इत्यापद** इति । प्रपञ्चिता इति शेषः ।

**तासामुपायविकल्पजाः सिद्धय** इति सूत्रम् । उक्तानामापदां सामदानाद्युपायभेदप्रयोगानिबन्धनाः प्रतिक्रिया उच्यन्त इति सूत्रार्थः । पूर्वं तावत् 'तयोर्मित्राक्रन्दोपग्रहात् सिद्धिरि'त्यादिना मित्राद्युपग्रहः साधकतयोक्तः, तदुपायास्त्विदानीमभिधीयन्ते ।

तानुपायान् यथाविषयमवस्थापयति — **तासां सिद्धिरिति** । आपदां प्रतिक्रिया या पूर्वमुक्ता सा, पुत्रभ्रातृबन्धुषु विषये, सामदानाभ्यां सिद्धिरनुरूपा सामदानलक्षणाभ्यामुपायाभ्यां भवन्ती समुचिता सिद्धिः, तेषु सहजानुरागवत्तया विधेयेषूपायान्तरप्रयोगानौचित्यादित्यभिप्रायः । पौरजानपददण्डमुख्येषु पौरादीनां मुख्येषु विषये यद्वा पौरादिषु राष्ट्रमुख्यान्तेषु चतुर्षु विषये, दानभेदाभ्यां भवन्ती सिद्धिः अनुरूपा सिद्धिः । तेषु सहजस्नेहादिरहिततया सामदण्डप्रयोगानौचित्यादिति भावः । सामन्ताटविकेषु विषये, भेददण्डाभ्यां भवन्ती सिद्धिः, अनुरूपा सिद्धिः, निसर्गविरोधिषु सामदानप्रयोगानौचित्यादित्यर्थः ।

**एषेति** । उक्ता सामाद्युपायद्वारिका नैयमिकी सिद्धिः, अनुलोमा क्रमनियमयुक्ता औत्सर्गिकस्वस्वगुणानुवर्तित्वलक्षणानुलोम्ययुक्तपुत्रादिविषयत्वादिति भावः । विपर्यये पुत्राद्यानुलोम्याभावे, प्रतिलोमा अव्यवस्थितक्रमा सिद्धिः, द्रोहवृत्तितया प्रतिलोमेषु पुत्रादिष्वपि दण्डप्रयोगात् सिद्धिरेषितव्या भवति, श्लाघ्यगुणयोगानिर्वैरवृत्तितयानुलोमेषु सामन्तादिष्वपि सामप्रयोगात् सिद्धिरेषितव्या भवतीत्यभिप्रायः । **मित्रामित्रेष्विति** । मित्रेषु अमित्रेषु च विषये, व्यामिश्रा सिद्धिः प्रतिक्रिया संकीर्णा भवति । तेषां हि विकारापत्तौ

**शत्रोः शङ्कितामात्येषु सान्त्वं प्रयुक्तं शेषप्रयोगं निवर्तयति; दूष्यामात्येषु दानम् । सङ्घातेषु भेदः; शक्तिमत्सु दण्ड इति ।**

**गुरुलाघवयोगाच्चापदां नियोगविकल्पसमुच्चया भवन्ति ।**

**'अनेनैवोपायेन नान्येन' इति नियोगः ।**

**'अनेन वान्येन वा' इति विकल्पः ।**

**'अनेनान्येन च' इति समुच्चयः ।**

**तेषामेकयोगाश्चत्वारस्त्रियोगाश्च; द्वियोगाः षट्; एकश्चतुर्योग इति पञ्चदशोपायाः । तावन्तः प्रतिलोमाः ।**

---

तत्तद्विकारप्रशमानुगुणतया सर्व एवोपाया व्यस्ता मिश्रिता वा अनियमेन प्रयोक्तव्या भवन्तीति भावः । तत्रोपायसमुच्चयपक्षे द्वयोर्विरुद्धस्वभावयोरुपाययोः कथमेकार्थसाधकतेत्याशङ्कायामाह— **परस्परसाधका ह्युपाया** इति । परस्परविरुद्धा अप्युपाया एकस्मिन्नर्थे साध्ये परस्परसहकारिणो भवन्तीत्यर्थः ।

उपायविषयं नियमविशेषमाह — **शत्रोः शङ्कितामात्येष्विति** । शत्रुसम्बन्धिषु क्रुद्धत्वादिदोषात् कृत्यत्वेन शङ्क्यमानेषु अमात्येषु विषये, सान्त्वं साम, प्रयुक्तं सत्, शेषप्रयोगं दानाद्युपायप्रयोगं, निवर्तयति, सान्त्वेनैव कृत्यसिद्ध्या शेषानपेक्षणादिति भावः । **दूष्यामात्येष्विति** । शत्रोर्दूष्या येऽमात्यास्तेषु, दानं प्रयुक्तं सत, शेषप्रयोगं निवर्तयति । **सङ्घातेष्विति** । इह शत्रोरिति निवृत्तम् । सङ्घातेषु विषये, भेदः प्रयुक्तः सन्, शेषप्रयोगं निवर्तयति । **शक्तिमत्स्विति** । उत्साहादिशक्तियुक्तेषु विषये, दण्ड इति नियम इति शेषः, दण्ड एवेत्यर्थः । इत्थमुपायानां विषयापेक्षा व्यवस्थाभिहिता ।

आपद्गुरुलघुभावापेक्षयोपायानां नियोगविकल्पसमुच्चया भवन्तीत्याह— **गुरुलाघवयोगाच्चेत्यादि** ।

नियोगविकल्पसमुच्चयानां स्वरूपमाह — **अनेनैवेत्यादि** । इह वाक्यत्रयेऽपि 'सिद्धिरि'ति शेषो द्रष्टव्यः ।

नियोगादियोगनिबन्धनान् उपायानां प्रकारान् सङ्ख्ष्टे—**तेषामिति** । सामादीनां मध्ये, एकयोगाः एकेति भावप्रधानो निर्देशः एकेन एकत्वेनैव न तु द्वित्वत्रित्वादिना योगः प्रयोगो येषां ते तथाभूताः अर्थात् सामैव केवलं प्रयोक्तव्यं दानमेव केवलं भेद एव केवलो दण्ड एव केवल इत्येवं व्यवस्थायुक्ताः, चत्वारः, त्रियोगाश्च त्रिप्रयोगयुक्ताश्च, चत्वारः । यथा—सामदान-

**तेषामेकेनोपायेन सिद्धिरेकसिद्धिः, द्वाभ्यां द्विसिद्धिः, त्रिभिस्त्रिसिद्धिः, चतुर्भिश्चतुस्सिद्धिरिति ।**

**धर्ममूलत्वात् कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धा यार्थस्य सिद्धिः, सा सर्वार्थसिद्धिः ।**

**इति सिद्धयः ।**

**दैवादग्निरुदकं व्याधिः प्रमारो विद्रवो दुर्भिक्षमासुरी सृष्टिः इत्यापदः ।**

---

भेदाः, सामदानदण्डाः सामभेददण्डाः दानभेददण्डा इत्येवं चतुष्प्रकाराः । द्वियोगा द्विप्रयोगयुक्ताः, षट् । यथा — सामदाने सामभेदौ सामदण्डौ दानभेदौ दानदण्डौ भेददण्डौ इत्येवं षट् प्रकाराः । एकः चतुर्योगः चतुष्प्रयोगयुक्त एकः प्रकारः । इति एवं, पञ्चदश पञ्चदशप्रकाराः, उपायाः । ते चैतेऽनुलोमक्रमप्रयोज्याः । प्रतिलोमक्रमप्रयोज्या अपि पञ्चदशेत्याह — **तावन्तः प्रतिलोमा** इति । तद्यथा — दण्डभेददानसामानि एकैकश्येन चत्वार उपायाः दण्डभेददानानि दण्डभेदसामानि भेददानसामानि दण्डदानसामानीति त्रियोगाश्चत्वारः । दण्डभेदौ दण्डदाने दण्डसामनी भेददाने भेदसामनी दानसामनी इति द्वियोगाः षट् । दण्डादिचतुष्टययुक्त एक इत्याहत्य पञ्चदश प्रतिलोमक्रमिका उपायाः ।

एकद्वित्रिचतुर्योगानिबन्धनमुपायानां चातुर्विध्यं तन्निर्वर्त्यानां प्रतिक्रियाणामपि चातुर्विध्यं प्रयोजयतीत्यभिप्रायेणाह — **तेषामित्यादि** । इतिशब्दानन्तरं चतुर्विधाः सिद्धय इति शेषः ।

या एताः प्रतिक्रियालक्षणाः सिद्धयः प्रपञ्चिताः, ताभिः सिध्यत्सु नानाप्रकारेषु लाभेषु मध्येऽर्थस्य लाभ एव परम इत्युपदेष्टुं तं स्तौति — **धर्ममूलत्वादिति** । धर्मं प्रति हेतुत्वात्, कामफलत्वात् कामोपभोगसाधकत्वात्, चकारादर्थसाधकत्वाच्च, धर्मार्थकामानुबन्धा धर्मादिसमुच्चयप्राप्तिलक्षणफलोपधायिका, या, अर्थस्य, सिद्धिः लाभः, सा सर्वार्थसिद्धिः धर्मादित्रितयातिरेकेण लोके लब्धव्यार्थाभावादिति भावः ।

**इतीति** । अनेन प्रकारेण, सिद्धयः प्रतिक्रियाः अर्थादपनयप्रभवाणां मानुषीणामापदां, व्याख्याता इति शेषः ।

दैवीस्ता आह — **दैवादित्यादि** । दैवात् पूर्वजन्मसञ्चितादृष्टात् ।

**तासां दैवतब्राह्मणप्रणिपाततः सिद्धिः ॥**

**अवृष्टिरतिवृष्टिर्वा सृष्टिर्वा यासुरी भवेत् ।**
**तस्यामाथर्वणं कर्म सिद्धारम्भाश्च सिद्धयः ॥**

इति कौटलीयार्थशास्त्रेऽभियास्यत्कर्मणि नवमेऽधिकरणे सप्तमोऽध्यायः
अर्थानर्थसंशययुक्तास्तासामुपायविकल्पजाः सिद्धयश्च,
आदितोऽष्टाविंशतिशततमः ॥
एतावता कौटलीयस्यार्थशास्त्रस्य अभियास्यत्कर्म
नवममधिकरणं समाप्तम् ॥

---

प्रमारः सङ्कुशो मरणम् । विद्रवो राष्ट्रात् पलायनम् । दुर्भिक्षम् ईतिबाधा । आसुरी सृष्टिः मूषिकादीनां प्रभूतोत्पत्तिरिति माधवः ।

दैवीनामापदां दैवतब्राह्मणनमस्करणात् प्रतीकारो भवतीत्याह — **तासामित्यादि** ॥

**अवृष्टिरिति** । वृष्ट्यभावः, अतिवृष्टिर्वा अतिमात्रवर्षणं वा, आसुरी सृष्टिर्वा मूषिकादिप्रभूतोत्पत्तिरूपा वा, या, आपद्, भवेत्, तस्यां विषये, आथर्वणं कर्म अथर्ववेदोक्तं शान्तिकादि, सिद्धारम्भाश्च सिद्धानां तपस्सिद्धियुक्तानां महताम् आरम्भाः शान्तिकर्माणि च, सिद्धयः प्रतीकाराः, भवन्ति ॥

या **कौटल्यार्थशास्त्र**स्य व्याख्या **श्रीमूल**संज्ञिता ।
तत्रा**भियास्यत्कर्मा**धिकरणं नवमं गतम् ॥

इति श्री**वञ्चिमण्डलमहाराजा**श्रितस्य ताम्रपर्णीतीरवर्ति**तरुवाग्रहारा**भिजनस्य श्री**सीताम्बाश्रीरामसुब्रह्मण्यार्य**सूनोर्महामहोपाध्याय**गणपतिशास्त्रिणः** कृतिषु **कौटलीयार्थशास्त्र**व्याख्यायां **श्रीमूलाख्यायाम्** अभियास्यत्कर्मणि नवमेऽधिकरणे सप्तमोऽध्यायः अर्थानर्थसंशययुक्ताः, तासामुपायविकल्पजाः सिद्धयश्च । आदितोऽष्टाविंशत्यधिकशततमः ॥
इति अभियास्यत्कर्म नवममधिकरणं
समाप्तम् ॥

---

# सांग्रामिकं—दशममधिकरणम् ।

## १४७. प्रक. स्कन्धावारनिवेशः ।

**वास्तुकप्रशस्ते वास्तुनि नायकवर्धकिमौहूर्तिकाः स्कन्धावारं वृत्तं दीर्घं चतुरश्रं वा, भूमिवशेन वा, चतुर्द्वारं षट्पथं नवसंस्थानं मापयेयुः । खातवप्रसालद्वाराट्टालकसम्पन्नं भये स्थाने च ।**

**मध्यमस्योत्तरे नवभागे राजवास्तुकं धनुश्शतायाममर्धविस्तारं, पश्चिमार्धे तस्यान्तःपुरम् । अन्तर्वंशिकसैन्यं चान्ते निविशेत । पुरस्ता-**

---

अथ **सांग्रामिकं** नाम दशममधिकरणमारभ्यते । संग्राममधिकृत्य कृतं **सांग्रामिकमुच्यते** । विजिगीषुणा हि शक्तिदेशकालबलाबलादिज्ञानपूर्वं सुविहितबाह्याभ्यन्तरादिविपत्प्रतीकारेणाभियाय संग्रामे करणीये तदीयमङ्गजातं तदारम्भपूर्वोत्तरकालानुष्ठेयमस्मिन्नधिकरणेऽभिधीयते ।

तत्र प्रथमं सूत्रं—**स्कन्धावारनिवेश** इति । युद्धभूम्यासन्नं सैन्यावासस्थानं स्कन्धावारः तस्य निवेशो निर्माणमुच्यत इति सूत्रार्थः ।

**वास्तुकप्रशस्त** इति । वास्तुविद्याविचक्षणश्लाघिते, वास्तुनि प्रदेशे नायकवर्धकिमौहूर्तिकाः नायकः सेनापतिः वर्धकिः स्थपतिः मौहूर्तिकः निर्माणारम्भार्थशुभकालनिश्चायकः इत्येते मिलिताः, स्कन्धावारं, वृत्तं दीर्घं चतुरश्रं वा, भूमिवशेन वा निर्माणभूमियोग्यतानुगुण्येनान्यादृशाकारं वेत्यर्थः, चतुर्द्वारं पूर्वतः पश्चिमतो दक्षिणत उत्तरतश्चेति चतुर्भिर्द्वारैरुपेतं, षट्पथं दुर्गनिवेशोक्तरीत्या प्राक्प्रत्यगायतैस्त्रिभिः दक्षिणोत्तरायतैस्त्रिभिरिति षड्भिः पथिभिर्युक्तं, नवसंस्थानं नवसंख्यसन्निवेशं, मापयेयुः निर्मापयेयुः । **खातेत्यादि** । खातं परिखा वप्रं प्राकाराधारः सालः प्राकारः द्वारं गोपुरम् अट्टालकः उपरिगृहम् एतैः सम्पन्नं युक्तं, मापयेयुरिति सम्बध्यते । कदैवम्भूतं मापयेयुः, भये स्थाने च पराघातभये चिरावस्थाने च, सम्भाविते इति शेषः ।

**मध्यमस्येति** । वास्तुहृदयस्य, उत्तरे उदग्भवे, नवभागे नवमांशे, राजवास्तुकं राजवासस्थानं, धनुश्शतायामं धनुश्शतदीर्घम्, अर्धविस्तारं पञ्चाशद्धनुर्विस्तारं, कार्यमिति शेषः । मापयेयुरिति वा वर्तते । **पश्चिमार्धे तस्येति** । राजवास्तुकस्य पश्चिमभागे, अन्तःपुरं राजस्त्रीवासस्थानं, कार्यम् । **अन्तर्वंशिकसैन्यं चेति** । अन्तःपुररक्षिसैन्यं च, अन्ते अन्तःपुरसमीपे, निविशेत निवेशं लभेत । **पुरस्तादिति** । राजवास्तुकस्य पुरोभागे, उपस्थान-

**दुपस्थानं, दक्षिणतः कोशशासनकार्यकरणानि, वामतो राजौपवाह्यानां हस्त्यश्वरथानां स्थानम्। अतो धनुश्शतान्तराश्चत्वारः शकटमेथीप्रततिस्तम्भसालपरिक्षेपाः। प्रथमे पुरस्तान्मन्त्रिपुरोहितौ, दक्षिणतः कोष्ठागारं महानसं च, वामतः कुप्यायुधागारम्। द्वितीये मौलभृतानां स्थानम् अश्वरथानां, सेनापतेश्च। तृतीये हस्तिनः श्रेण्यः प्रशास्ता च। चतुर्थे विष्टिर्नायको मित्रामित्राटवीबलं स्वपुरुषाधिष्ठितम्। वणिजो रूपाजीवाश्चानुमहापथम्। बाह्यतः लुब्धकश्वगणिनः सतूर्याग्नयः गूढाश्चारक्षाः।**

उपतिष्ठन्ते सन्दर्शनार्थिनो राजानमत्रेत्युपस्थानगृहं, कर्तव्यमिति शेषः। **दक्षिणत** इति। दक्षिणभागे, कोशशासनकार्यकरणानि कोशो रत्नादिस्थानं शासनकरणम् अक्षपटलं कार्यकरणं व्यवहारदर्शनस्थानम् इत्येतानि, कर्तव्यानि। **वामत** इति। वामभागे, राजौपवाह्यानां राजवाहनानां, हस्त्यश्वरथानां, स्थानं कर्तव्यम्। **अत** इति। राजवास्तुकात् परतः, धनुश्शतान्तराः धनुश्शतपरिमाणपरस्परान्तरालाः, चत्वारः, शकटमेथीप्रततिस्तम्भसालपरिक्षेपाः शकटैः कृतः परिक्षेपः प्रथमः मेथ्यः कण्टकिवृक्षशाखाः तासां प्रततिभिः प्रकृष्टाभिस्ततिभिः कृतः परिक्षेपो द्वितीयः स्तम्भैर्दारुमयैः कृतः परिक्षेपस्तृतीयः सालः प्राकारः तत्कृतः परिक्षेपश्चतुर्थ इत्येते, रक्षार्थं कर्तव्या इति शेषः। **प्रथम** इति। तेष्वादिमे शकटपरिक्षेपे, पुरस्तात् प्राग्भागे मन्त्रिपुरोहितौ, निवेशनीयाविति शेषः, दक्षिणतः कोष्ठागारं धान्यादिस्थानं, महानसं च पाकशाला च। इह 'अध्यक्षा गुप्तिस्थानं च' इत्यधिकपाठो नयचन्द्रिकायां प्रतिभाति। तत्र अध्यक्षाः समाहर्त्रादयः, गुप्तिस्थानम् आरक्षकबलस्थानम्। वामतः कुप्यायुधागारं कुप्यगृहम् आयुधशाला च, निवेशनीयानि। **द्वितीय** इति। मेथीप्रततिपरिक्षेपे, मौलभृतानां सैन्यानाम्, अश्वरथानां, सेनापतेश्च, स्थानं कार्यम्। **तृतीय** इति। स्तम्भपरिक्षेपे, हस्तिनः, श्रेण्यः श्रेणीबलानि, श्रेण्य इत्येतत्स्थाने गोण्य इत्यपपाठः। 'काम्बोजकसौराष्ट्रादयः' इति तु व्याचष्टे माधवः। प्रशास्ता च कण्टकशोधनाध्यक्षश्च, निवेश्याः। **चतुर्थ** इति। सालपरिक्षेपे, विष्टिः कर्मकरवर्गः, नायकः सेनापतिदशकपतिः, मित्रामित्राटवीबलं स्वपुरुषाधिष्ठितं स्वपुरुषनेतृकं मित्राणाम् अमित्राणां क्रयाद्यधिगतानाम् आटविकानां च बलं, निविशेतेति शेषः। **वणिज** इति। ते, रूपाजीवाश्च

शत्रूणामापाते कूपकूटावपातकण्टकिनीश्च स्थापयेत् । अष्टादशवर्गाणामारक्षविपर्यासं कारयेत् । दिवायामं च कारयेदपसर्पज्ञानार्थम् ।

विवादसौरिकसमाजद्यूतवारणं च कारयेत् । मुद्रारक्षणं च ।
सेनानिवृत्तमायुधीयमशासनं शून्यपालोऽनुबध्नीयात् ॥
पुरस्तादध्वनः सम्यक् प्रशास्ता रक्षणानि च ।
यायाद् वर्धकिविष्टिभ्यामुदकानि च कारयेत् ॥

इति कौटलीयार्थशास्त्रे सांग्रामिके दशमेऽधिकरणे
प्रथमोऽध्यायः स्कन्धावारनिवेशः,
आदितः एकोनत्रिंशच्छततमः ॥

---

वेश्याश्च, अनुमहापथं राजपथसमीपे, निविशेरन् । बाह्यत इति । सर्वबहिर्देशे, लुब्धकश्वगणिनः व्याधाः श्वगणजीविनश्च, सतूर्याग्नयः शत्रुबलागमनमात्मना विज्ञातं तूर्यघोषणेनाग्निदीपनधूपनैश्च राजादिभ्यः प्रकाशयितुं तूर्याग्निसहिताः, गूढाश्चारक्षाः गोपालादिवेषच्छन्नाः रक्षिपुरुषाश्च शत्रुचारग्रहणार्थाः, निविशेरन्निति शेषः ।

**शत्रूणामापात** इति । येन मार्गेण शत्रूणामापतनं सम्भाव्यते तस्मिन् मार्गे, कूपकूटावपातकण्टकिनीश्च कूटकूपान् तृणच्छन्नान् कूपान् अवपातान् गर्तान् कण्टकिनीः कण्टकयुक्ताः फलकाश्च, स्थापयेत् । अष्टादशवर्गाणां मौलभृतादीनां षण्णां प्रत्येकं पदिकसेनापतिनायकलक्षणैः पतिभिस्त्रिभिर्योगादष्टादशत्वं प्राप्तानां बलानाम्, आरक्षविपर्यासम् अधिष्ठातृव्यत्ययं, कारयेत्, अर्थात् शत्रूपजापपरिहारार्थम् । दिवायामं च दिवासंचारनियमं च, कारयेत्, किमर्थम्, अपसर्पज्ञानार्थं परचारज्ञानार्थम् ।

**विवादेत्यादि** । विवादः परस्परविप्रतिपत्तिः सौरिकं सुरा मद्यपाने समाजः कौतुकगोष्ठी द्यूतम् अक्षादिदेवनम् एभ्यो वारणं च, अर्थात् सैनिकानां, कारयेत् । मुद्रारक्षणं च प्रवेशनिर्गमयोरनुमतिचिह्नभूतराजकीयमुद्राप्रदर्शननियम इह मुद्रा तस्या रक्षणमनुवर्तनं च, कारयेत् ।

**सेनानिवृत्तमिति** । योद्धुं गतायाः सेनायाः निवृत्तं निवृत्य स्थानीयप्राप्तम्, आयुधीयम् आयुधजीविनम्, अशासनं निवृत्त्यनुमतिलेखरहितं, शून्यपालः सपरिकरराजरहितं स्थानीयं शून्यं तत्पालकः, अनुबध्नीयाद् अनुसरेद् गृह्णीयादित्यर्थः । अन्तपाल इति क्वचित् पाठः ॥

पुरस्तादिति । प्रशास्ता कण्टकशोधनाध्यक्षः, पुरस्तात् सपरिकरराजप्रस्थानात् प्रागेव, वर्धकिविष्टिभ्यां स्थपतिकर्मकराध्यक्षाभ्यां सह, यायात् । पुरस्ताद्यानस्य फलमाह — अध्वनो रक्षणानि च विषमसमीकरणकण्टकापनयनदुष्टसत्त्वप्रतिरोधकापसारणानि च, उदकानि च निर्जलप्रदेशे जलानि च, कारयेत् ॥

इति कौटलीयार्थशास्त्रव्याख्यायां साङ्ग्रामिके दशमेऽधिकरणे
प्रथमोऽध्यायः स्कन्धावारनिवेशः,
आदितः एकोनत्रिंशदुत्तरशततमः ॥

## १४८, १४९. प्रक. स्कन्धावारप्रयाणं बलव्यसनावस्कन्दकालरक्षणं च ।

**ग्रामारण्यानामध्वनि निवेशान् यवसेन्धनोदकवशेन परिसङ्ख्याय स्थानासनगमनकालं च यात्रां यायात् । तत्प्रतीकारद्विगुणं भक्तोपकरणं वाहयेत् । अशक्तो वा सैन्येष्वायोजयेत् । अन्तरेषु वा निचिनुयात् ।**

**पुरस्तान्नायकः । मध्ये कलत्रं स्वामी च । पार्श्वयोरश्वा बाहूत्सारः । चक्रान्तेषु हस्तिनः । प्रसारवृद्धिर्वा सर्वतः । वनाजीवः प्रसारः । स्वदेशादन्वायतिर्वीवधः । मित्रबलमासारः. कलत्रस्थानमपसारः । पश्चात् सेनापतिः पर्यायान्निविशेत ।**

---

**स्कन्धावारप्रयाण**मिति सूत्रम् । यथोक्तरीत्या निर्मितं स्कन्धावारमुद्दिश्य राज्ञः सपरिकरस्य प्रयाणमुच्यत इति सूत्रार्थः ।

**ग्रामारण्याना**मिति । ग्रामाणामरण्यानां च, अध्वनि, निवेशान् निवेशयोग्यदेशान्, यवसेन्धनोदकवशेन तृणकाष्ठजलयोगवशेन, परिसंख्याय इयत्तया निर्णीय, स्थानासनगमनकालं च स्थानं पक्षमासाद्यवस्थानम् आसनं पञ्चषदिनाद्यवस्थानं गमनम् एकरात्रमात्रावस्थानम् एषां कालं च, परिसंख्याय, यात्रां यायात् । **तत्प्रतीकारद्विगुण**मिति । परिसंख्यातदेशकालपर्याप्तभक्तोपकरणतो द्विगुणं, भक्तोपकरणं भक्तं तण्डुलादि उपकरणं वस्त्रादि च, वाहयेत् वाहनमारोप्य नयेत् । **अशक्तो वे**ति । वाहयितुमशक्तश्चेत् , सैन्येषु, आयोजयेत् वहनीयत्वेनार्पयेत् । अन्तरेषु वा तत्तन्निवेशप्रदेशेषु वा, निचिनुयात् पूर्वमेव निचित्य स्थापयेत् ।

यातृयानक्रममाह — **पुरस्ता**दिति । सेनाया अग्रे, नायकः सेनापतिदशकपतिः । यायादिति शेषः । मध्ये कलत्रं दारादिकं, स्वामी च राजा च, यायात् । पार्श्वयोः अश्वाः अश्वरूपो दण्डो यायादित्यर्थः । स च बाहुभ्यां पराभिघातवारणार्थ इत्याह — **बाहूत्सार** इति । बाहुभ्याम् उत्सारयति पराभ्याघातं वारयतीति तथा । चक्रान्तेषु सेनायाः पश्चाद्भागेषु, हस्तिनः, गच्छेयुः । **प्रसारवृद्धिर्वा सर्वत** इति । वन्यमुपजीव्यं व्रीहितृणादिद्रव्यं प्रसारः तस्य वृद्धिः प्रभूतः प्रसार इत्यर्थः, स च सर्वतः, यायात् । प्रसारपदार्थमाह — **वनाजीव** इत्यादि । तत्प्रसङ्गाद् विवधादीनाह— **स्वदेशा**दिति । आत्मनो जनपदाद्, अन्वायतिः अविच्छिन्न आजीवद्रव्यागमः

**पुरस्ताद् अभ्याघाते मकरेण यायात्, पश्चाच्छकटेन, पार्श्वयोर्वज्रेण, समन्ततः सर्वतोभद्रेण, एकायने सूच्या।**

**पथिद्वैधीभावे स्वभूमितो यायात्। अभूमिष्ठानां हि स्वभूमिष्ठा युद्धे प्रतिलोमा भवन्ति। योजनमधमा, अध्यर्धं मध्यमा, द्वियोजनमुत्तमा, संभाव्या वा गतिः।**

**आश्रयकारी, सम्पन्नघाती, पार्ष्णिरासारो मध्यम उदासीनो।**

वीवधः, सोऽपि सर्वतो गच्छेदित्यर्थः। मित्रबलम् आसारः आसारशब्दितं, कलत्रस्थानम्, अपसारः अपसारशब्दितम्। तदुभयमपि सुरक्षितं यायादित्यार्थम्। **पश्चादिति**। सेनायाः पश्चाद्भागे, सेनापतिः, पर्यायात् स्वस्वसेनापश्चाद्भागक्रमात्, निविशेत तिष्ठेत्।

**पुरस्तादिति**। पुरोभागे, अभ्याघाते पराभिघाते शङ्क्यमाने, मकरेण भोगाख्यस्य प्रकृतिव्यूहविशेषस्य प्रभेदो मकरो नाम दण्डभोगमण्डलासंहतव्यूहव्यूहनप्रकरणे वक्ष्यमाणः तेन, यायात्। पश्चाद् अभ्याघाते, शकटेन तदाख्येन भोगभेदेन, यायात्। पार्श्वयोः अभ्याघाते, वज्रेण असंहताख्यस्य प्रकृतिव्यूहस्य प्रभेदो वज्रः तेन, यायात्। समन्ततः अभ्याघाते, सर्वतोभद्रेण मण्डलाख्यस्य प्रकृतिव्यूहस्य प्रभेदः सर्वतोभद्रः तेन, यायात्। एकायने एकैकमात्रगन्तव्ये मार्गे, सूच्या तदाख्येन मण्डलभेदेन, यायात्।

**पथिद्वैधीभाव** इति। पथो मार्गस्य द्वैधीभावे भूम्यानुगुण्यानानुगुण्याभ्यां द्विरूपत्वे सति, स्वभूमितो यायात् स्वरथाश्वपदातिहस्त्यनुगुणया भूम्या गच्छेत्। सा च युद्धभूमिप्रकरणे वक्ष्यते। स्वभूमितो यानस्य फलमाह — **अभूमिष्ठानां हीति**। तेषां हि, स्वभूमिष्ठाः, युद्धे, प्रतिलोमा अनाक्रमणीयाः, भवन्ति। कियान् अध्वा दिवस एकस्मिन् गन्तव्य इत्याह — **योजनमधमेत्यादि**। योजनं पद्गोरुतं तत्परिच्छिन्ना गतिरवरा, सार्धयोजनपरिच्छिन्ना मध्यमा, द्वियोजनपरिच्छिन्ना उत्तमा। उक्ताधिकपरिमाणापि देशकालाद्यानुगुण्येन गतिः सम्भाव्यत इत्याह — **सम्भाव्या वा गतिरिति**।

प्रस्थितस्य शनैर्यानशीघ्रयानयोर्निमित्तान्याह — **आश्रयकारीति**। आत्मोदयार्थं कमप्याश्रयं करिष्यन्। एतदादिषु 'इति शनैर्यायादि'ति सम्बध्यते। आत्मोदयार्थं कञ्चिदाश्रयं करिष्यामीत्यस्मिन् निमित्ते शनैर्यायादित्यर्थः। **सम्पन्नघातीति** शत्रुदेशं सम्पन्नं हनिष्यामीत्यस्मिन् निमित्ते, पार्ष्णिः पार्ष्णि-

**वा प्रतिकर्तव्यः, सङ्कटो मार्गः शोधयितव्यः, कोशो दण्डो मित्रामित्राटवीबलं विष्टिः ऋतुर्वा प्रतीक्ष्याः, कृतदुर्गकर्मनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्चागमिष्यति, उपजपितारो वा नातित्वरयन्ति, शत्रुरभिप्रायं वा पूरयिष्यति इति शनैर्यायात् । विपर्यये शीघ्रम् ।**

**हस्तिस्तम्भसङ्क्रमसेतुबन्धनौकाष्ठवेणुसङ्घातैः, अलाबुचर्मकरण्डदृतिप्लवगण्डिकावेणिकाभिश्चोदकानि तारयेत् ।**

**तीर्थाभिग्रहे हस्त्यश्वैरन्यतो रात्रावुत्तार्य सत्रं गृह्णीयात् ।**

---

ग्राहः, आसारः मित्रबलं, मध्यमः अरिविजिगीष्वोर्भूम्यनन्तरो विदिक्स्थः, उदासीनो वा अरिविजिगीषुमध्यमप्रकृतिबाह्यो वा, प्रतिकर्तव्य इति प्रशमितकोपः कर्तव्य इत्यस्मिन् निमित्ते । सङ्कटो मार्गः शोधयितव्य इति विषमो मार्गः सुगमतां नेतव्य इत्यस्मिन् निमित्ते । कोशो धनसंग्रहः, दण्डः स्वसैन्यं विक्षिप्तं मिलिष्यत्, मित्रामित्राटवीबलं मित्रामित्राटविकानां सैन्यं साहाय्यार्थमागमिष्यत्, विष्टिः कर्मकरवर्गः, ऋतुर्वा स्वबलसामर्थ्यानुरूपयुद्धयोग्यः कालो वा, प्रतीक्ष्या इति प्रतिपाल्या इत्यस्मिन् निमित्ते । कृतदुर्गकर्मनिचयरक्षाक्षयः कृतस्य शत्रुणा पूर्वमनुष्ठितस्य दुर्गकर्मणः स्वदुर्गसंस्कारस्य निचयस्य धान्यादिसञ्चयस्य रक्षायाश्च क्षयः, क्रीतबलनिर्वेदः धनदानस्वीकृतस्य सैन्यस्य निर्वेदः, मित्रबलनिर्वेदश्च मित्रबलस्य साहाय्यागतस्य निर्वेदश्च, अर्थात् कालविलम्बनिमित्तः, आगमिष्यति शत्रोः सम्भविष्यति, इत्यस्मिन् निमित्ते । उपजपितारो वा शत्र्वभियोगार्थमस्मानुपजपन्तः शत्रुदूष्या इत्यर्थः, नातित्वरयन्ति अभियोगेऽतित्वरां कर्तव्यां नेच्छन्ति, इत्यस्मिन् वा निमित्ते । शत्रुः, अभिप्रायं विजिगीषुमनोरथं, पूरयिष्यति ऋते युद्धात् सफलयिष्यति, इत्यस्मिन् वा निमित्ते, शनैर्यायात् । विपर्यये यथोक्तनिमित्ताभावे, शीघ्रं यायात् ।

सैन्यस्य नद्यादितरणोपायानाह हस्तिस्तम्भेत्यादि । हस्तिभिः गजैः स्तम्भसंक्रमैः स्तम्भानामुपरि दारुफलकादिघटनया कल्पितैः संक्रमैः सेतुबन्धैः नौभिः काष्ठसंघातैः वेणुसंघातैश्च, अलाबुचर्मकरण्डादिभिश्च अलाबुभिस्तुम्बीफलकोशैः चर्मकरण्डैश्चर्मावनद्धैर्विदलभाजनैः दृतिभिर्भस्त्राभिः प्लवैः उडुपैः गण्डिकाभिः प्लवनकाष्ठैरिति माधवः वेणिकाभिः रज्जुभिश्च, उदकानि तारयेत् ।

**तीर्थाभिग्रह** इति । तीर्थस्यावतरणस्थानस्य अभिग्रहे परप्रतिरोधे

**अनुदके चक्रिचतुष्पदं चाध्वप्रमाणेन शक्त्योदकं वाहयेत् ।**

**दीर्घकान्तारमनुदकं यवसेन्धनोदकहीनं वा कृच्छ्राध्वानमभियोगप्रस्कन्नं क्षुत्पिपासाध्वक्लान्तं पङ्कतोयगभीराणां वा नदीदरीशैलानामुद्यानापयाने व्यासक्तम् एकायनमार्गे शैलविषमे सङ्कटे वा बहुलीभूतं निवेशे प्रस्थिते विसन्नाहं भोजनव्यासक्तम् आयतगतपरिश्रान्तमवसुप्तं व्याधिमरकदुर्भिक्षपीडितं व्याधितपत्त्यश्वद्विपमभूमिष्ठं वा बलव्यसनेषु वा स्वसैन्यं रक्षेत् । परसैन्यं चाभिहन्यात् ।**

**शङ्क्यमाने**, हस्त्यश्वैः साधनैः, अन्यतः अतीर्थे, रात्रौ अन्याविदित इत्यर्थः, **उत्तार्य**, सत्रं धान्वनसङ्कटादिकं कूटयुद्धविकल्पप्रकरणे वक्ष्यमाणं, गृह्णीयात् ।

अनुदकाध्वकरणीयमाह --- **अनुदक** इति । तस्मिन्, चक्रिचतुष्पदं चक्रीणि शकटानि चतुष्पदान् बलीवर्दादींश्च, अध्वप्रमाणेन निरुदकमार्गप्रमाणपर्याप्तप्रमाणेन युक्तं, शक्त्या वोढृशक्त्यानुगुण्येन, उदकं वाहयेत् । इत्थं स्कन्धावारप्रयाणं व्युत्पादितम् । अथ

**बलव्यसनावस्कन्दकालरक्षणमि**ति सूत्रम् । अमानितविमानितादीनि बलव्यसनानि अवस्कन्दकाला दीर्घकान्तारगमनादिकाला 'दीर्घकान्तारमनुदकमि'त्यादिना वक्ष्यमाणाः तेभ्यः स्वबलरक्षणमुच्यत इति सूत्रार्थः ।

**दीर्घकान्तारमित्या**दि । दीर्घं कान्तारं दुर्गमो गन्तव्यमार्गो यस्य तत् तथाभूतं, स्वसैन्यं रक्षेत् । अनुदकम् अलभ्यमार्गजलं स्वसैन्यं रक्षेत् । एवमुत्तराण्यपि विशेषणानि प्रत्येकं योज्यानि । यवसेन्धनोदकहीनं वा तृणकाष्ठजलरहितं वा, उदकस्य पुनर्ग्रहणं प्राधान्यद्योतनार्थम् । कृच्छ्राध्वानं कष्टलङ्घ्यमार्गमध्यगतम् । कृच्छ्राध्वगतमिति क्वचित् पाठः । अभियोगप्रस्कन्नं चिराभियोगावसन्नं, क्षुत्पिपासाध्वक्लान्तम् अशनायोदन्यामार्गगमनैः परिश्रान्तम्, पङ्कतोयगभीराणां वा नदीदरीशैलानाम् अगाधपङ्कानामगाधतोयानां च नदीनां कन्दरपर्वतयोश्च, उद्यानापयाने आरोहणेऽवरोहणे च, व्यासक्तं व्यापृतम् । एकायनमार्गे एकमात्रगन्तव्ये मार्गे, शैलविषमे सङ्कटे वा पर्वतदन्तुरे दुर्गप्रदेशे वा, बहुलीभूतं समूहितम् । निवेशे अवस्थाने, प्रस्थिते यात्रायां, विसन्नाहं शस्त्रावरणादिरहितम् । भोजनव्यासक्तं भोजनव्यापृतम्, आयतगतपरिश्रान्तं दीर्घाध्वगमनपरिखिन्नम् । अवसुप्तं प्राप्तनिद्रम् । व्याधिमरकदुर्भिक्षपीडितं रोगेण सङ्घातमृत्युना सुभिक्षविरहेण वा पीडितम् ।

**एकायनमार्गप्रयातस्य सेनानिश्रारग्रासाहारशय्याप्रस्ताराग्नि-
निधानध्वजायुधसङ्ख्यानेन परबलज्ञानम् । तदात्मनो गूहयेत् ॥**

**पार्वतं वनदुर्गं वा सापसारप्रतिग्रहम् ।
स्वभूमौ पृष्ठतः कृत्वा युध्येत निविशेत च ॥**

इति कौटलीयार्थशास्त्रे साङ्ग्रामिके दशमाधिकरणे द्वितीयोऽध्यायः
स्कन्धावारप्रयाणं, बलव्यसनावस्कन्दकालरक्षणं च.
आदितस्त्रिंशदुत्तरशततमः ॥

---

व्याधितपत्त्यश्वद्विपं रुग्णपद्रहयगजम् । अभूमिष्ठं वा स्वयुद्धाननुरूपभूमि-
स्थितं वा । बलव्यसनेषु वा तत्र स्थितं वा, स्वसैन्यं रक्षेत् । परसैन्यं च
उक्तविशेषयुक्तमित्यार्थम्, अभिहन्यात् ।

परेण सह विग्रहस्य सन्धेर्वानुष्ठाने तद्बलेयत्ताज्ञानस्यापेक्षितत्वात् तदु-
पायमाह — **एकायनमार्गप्रयातस्येति** । एकैकमात्रगम्येन मार्गेण प्रस्थि-
तस्य शत्रोः, सेनानिश्रारग्रासाहारादिसंख्यानेन सेनानिश्रारसंख्यानेन एका-
यनमार्गेणैकैकशो निश्चरत्सैनिकव्यक्तिपरिगणनेन ग्रासो गजादिभोज्यं तत्सं-
ख्यानेन आहारो यादृशपुरुषभोज्यं तत्संख्यानेन शय्याप्रस्तारः शयनीया-
स्तरणं तत्संख्यानेन अग्निनिधानं चुल्ली तत्संख्यानेन ध्वजसंख्यानेन आयुध-
संख्यानेन च, परबलज्ञानं शत्रुसैन्येयत्तानिश्चयः, कार्य इति शेषः । **तदा-
त्मन इति** । आत्मीयं सेनानिश्रारादिकमायुधान्तं स्वबलेयत्ताज्ञापकजातं,
गूहयेत् संवृणुयात् ॥

**पार्वतमिति** । 'प्रस्तरं गुहां वा पार्वतम्' इति दुर्गविधानोक्तलक्षणं
पर्वतकृतं दुर्गं, वनदुर्गं वा 'खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम्' इत्युक्त-
लक्षणं वा, सापसारप्रतिग्रहं पराजयेष्वपसरणस्थानमपसारः अभ्यापतत्पर-
बलप्रतिग्रहणस्थानं प्रतिग्रहः ताभ्यां सहितं, पृष्ठतः कृत्वा सज्जीकृत्येत्यर्थः,
स्वभूमौ आत्मानुगुणायां भूमौ, युध्येत निविशेत च ॥

इति कौटलीयार्थशास्त्रव्याख्यायां सांग्रामिके दशमेऽधिकरणे द्वितीयोऽध्यायः
स्कन्धावारप्रयाणं बलव्यसनावस्कन्दकालरक्षणं च,
आदितस्त्रिंशदुत्तरशततमः ॥

---

## १५०—१५२. प्रक. कूटयुद्धविकल्पाः, स्वसैन्योत्साहनं, स्वबलान्यबलव्यायोगश्च ।

बलविशिष्टः कृतोपजापः प्रतिविहितर्तुः स्वभूम्यां प्रकाशयुद्धमुपेयात् ; विपर्यये कूटयुद्धम् ।

बलव्यसनावस्कन्दकालेषु परमभिहन्यात् । अभूमिष्ठं वा स्वभूमिष्ठः । प्रकृतिप्रग्रहो वा स्वभूमिष्ठं दूष्यामित्राटवीबलैर्वा भङ्गं दत्त्वा विभूमिप्राप्तं हन्यात् । संहतानीकं हस्तिभिर्भेदयेत् ।

पूर्वं भङ्गप्रदानेनानुप्रलीनं भिन्नमभिन्नं प्रतिनिवृत्य हन्यात् । पुर-

---

**कूटयुद्धविकल्पा** इति सूत्रम् । कपटेन पराभिहननं कूटयुद्धं तस्य भेदा अभिधीयन्त इति सूत्रार्थः ।

कूटयुद्धस्य कदा प्रसङ्ग इत्याह—**बलविशिष्ट** इति । बलेन विशिष्टः शौर्यतः परिमाणेन च परबलादभ्यधिकेन स्वीयबलेन परापेक्षया प्रकृष्टः, कृतोपजापः, प्रतिविहितर्तुः सम्पादितयुद्धयोग्यकालः, स्वभूम्यां स्वयोग्ये देशे, प्रकाशयुद्धम्, उपेयात् अङ्गीकुर्यात् । विपर्यये बलविशिष्टत्वादिविरहे, कूटयुद्धम्, उपेयात् ।

पराभिहननकालविशेषानाह — **बलव्यसनावस्कन्दकालेष्विति** । बलव्यसनेषु अमानितविमानितत्वादिषु, अवस्कन्दकालेषु च दीर्घकान्तारानुदकत्वादिषु, परम् अभिहन्यात् । अभूमिष्ठं वा स्वीयबलाननुगुणभूमिस्थितं वा परं, स्वभूमिष्ठः स्वबलानुगुणभूमिस्थितः, अभिहन्यात् । **प्रकृतिप्रग्रहो वेति** । प्रकृतिं परकीयां प्रगृह्णाति उपजापेन स्वायत्तीकरोतीति तथाभूतो वा भवन्, स्वभूमिष्ठं परम् अभिहन्यात् । **दूष्यामित्राटवीबलैर्वेति** । स्वीयानि यानि दूष्यबलानि अमित्रबलानि आटविकबलानि च तैर्विजिगीषोर्युद्धसहायभूतैर्निमित्तैः, भङ्गं दत्त्वा तेषु पराजयमाधायेत्यर्थः, विभूमिप्राप्तं स्वजयविश्वासात् स्वाननुगुणभूमिगतं परं, हन्यात् । **संहतानीकमिति** । स्वभूमौ संहत्य स्थितं परबलं, हस्तिभिः, भेदयेत् भेदयित्वाभिहन्यात् ।

**पूर्वमिति** । प्रथमं, भङ्गप्रदानेन परपराजयेन हेतुना, अनुप्रलीनं, भिन्नं सङ्घाद् विश्लिष्य तत इतः स्थितं परानीकमित्यर्थः, अभिन्नं संहतं विजिगीष्वनीकं कर्तृ, प्रतिनिवृत्य प्रत्यावृत्य, हन्यात् । इह 'पूर्वभङ्गे'ति समस्तमपि पठ्यते । **पुरस्तादित्यादि** । प्रचलम् अभिघातासिद्ध्या निवृत्तम् । **विमुखं**

स्तादभिहत्य प्रचलं विमुखं वा पृष्ठतो हस्त्यश्वेनाभिहन्यात् । पृष्ठतो-ऽभिहत्य प्रचलं विमुखं वा पुरस्तात् सारबलेनाभिहन्यात् ।

ताभ्यां पार्श्वाभिघातौ व्याख्यातौ । यतो वा दूष्यफल्गुबलं ततोऽभिहन्यात् ।

पुरस्ताद्विषमायां पृष्ठतोऽभिहन्यात् । पृष्ठतो विषमायां पुरस्तादभिहन्यात् । पार्श्वतो विषमायामितरतोऽभिहन्यात् ।

दूष्यामित्राटवीबलैर्वा पूर्वं योधयित्वा श्रान्तमश्रान्तः परमभिहन्यात् । दूष्यबलेन वा स्वयं भङ्गं दत्वा 'जितम्' इति विश्वस्तमविश्वस्तः सत्रापाश्रयोऽभिहन्यात् । सार्थव्रजस्कन्धावारसंवाहविलोपप्रमत्तमप्रमत्तोऽभिहन्यात् । फल्गुबलावच्छन्नसारबलो वा परवीराननुप्रविश्य हन्यात् । गोग्रहणेन श्वापदवधेन वा परवीरानाकृष्य सत्रच्छन्नोऽभिहन्यात् ।

---

वा भङ्गपलायिनं वा । हस्त्यश्वेन हस्तिभिरश्वैश्च । पृष्ठत इति । पृष्ठानुसारेण, अभिहत्य, प्रचलं निवर्तमानं, विमुखं वा परस्तात्, सारबलेन शौर्यवता सैन्येन, अभिहन्यात् ।

पुरस्तात्पृष्ठतोभिघातवत् पार्श्वतोभिघातावपि द्रष्टव्यावित्याह— ताभ्यामित्यादि । एकस्मिन् पार्श्वेऽभिहत्य परस्मिन्नपरस्मिन् पार्श्वेऽभिहन्यादित्यर्थः । यत इति । यत्र, दूष्यफल्गुबलं शत्रुदूष्याणां निस्सारं बलं, ततः तत्र अभिहन्यात् ।

भूम्यपेक्षयाभिहननमाह—पुरस्ताद्विषमायामित्यादि । इतरतः अविषमेऽन्यस्मिन् पार्श्वे । अत्राविषमासु भूमिष्वभिहननस्थितिभिरभिघातोपद्रुतारब्ध-पलायनानां विषमासु पातनं यथा स्यादित्येवमर्थम् ।

दूष्यामित्राटवीबलैर्वेति । तैर्वा स्वकीयैः, पूर्वं योधयित्वा, श्रान्तं तद्वशात् खिन्नं, परम्, अश्रान्तः अभिहन्यात् । दूष्यबलेन वेति । अभक्तियोधित्वात् सुकरभङ्गेन स्वीयेन दूष्यसैन्येन स्वयं प्रथमोपस्थापितेन निमित्तेन, भङ्गं दत्त्वा तत्पराजयमुत्पाद्य, जितमिति विश्वस्तं 'जयो मे लब्ध' इत्युपजातविश्वासम्, अविश्वस्तः, सत्रापाश्रयः सत्रम् अनुपदं वक्ष्यमाणमाश्रितः सन्, अभिहन्यात् । सार्थेत्यादि । सार्थव्रजस्कन्धावाराणां वणिक्सङ्घगोकुलसेनानिवेशानां संवाहे सम्यग्वहने रक्षणे विलोपे लुण्टने च प्रमत्तम्, अप्रमत्तः अभिहन्याद् वा । अन्तश्शूरं स्वबलं बहिरशूरपुरुषच्छन्नं कृत्वा तेन शत्रुवीरान्

**रात्राववस्कन्देन जागरयित्वानिद्राक्रान्तानवसुप्तान् वा दिवा हन्यात् । सपादचर्मकोशैर्वा हस्तिभिः सौप्तिकं दद्यात् । अहस्सन्नाहपरिश्रान्तानपराह्णेऽभिहन्यात् । शुष्कचर्मवृत्तशर्कराकोशकैर्गोमहिषोष्ट्रयूथैर्वा त्रस्नुभिरकृतहस्त्यश्वं भिन्नमभिन्नः प्रतिनिवृत्तं हन्यात् । प्रतिसूर्यवातं वा सर्वमभिहन्यात् ।**

**धान्वनवनसङ्कटपङ्कशैलनिम्नविषमनावो गावः शकटव्यूहो नीहारो रात्रिरिति सत्राणि ।**

---

अनुप्रविश्य हन्याद् वेत्याह — **फल्गुबलावच्छन्न** इत्यादि । **गोग्रहणेनेति** । परविषये गवां बलादपहरणेन, श्वापदवधेन वा व्याघ्रवराहादिवधेन वा, परवीरान् तत्प्रतिक्रियोद्यतान्, आकृष्य, सत्रच्छन्नः वनादिच्छन्नः, अभिहन्यात् ।

**रात्राविति** । तदा, अवस्कन्देन सौप्तिकापहारेण तत इत उत्पादितेन, जागरयित्वा तद्भयक्षीणनिद्रान् कृत्वा, अनिद्राक्रान्तान् निद्राविरहश्रान्तान्, अत एव अवसुप्तान्, दिवा अह्नि, हन्यात् । **सपादचर्मकोशैरिति** । पादेषु रक्षार्थचर्मकोशसहितैः, हस्तिभिः, सौप्तिकं दद्यात् सुप्तवधं कुर्यात् । **अहस्सन्नाहपरिश्रान्तानिति** । दिवा आप्राह्णमध्याह्नयुद्धव्यापारपरिखिन्नान्, अपराह्णे, अभिहन्यात् । **शुष्कचर्मवृत्तशर्कराकोशकैरिति** । शुष्कचर्मनिर्मिताः वृत्तशर्कराकोशाः वर्तुलाश्मप्रायमृद्विशेषखण्डगर्भाः कोशाः येषां तैस्तथाभूतैः, गोमहिषोष्ट्रयूथैः, त्रस्नुभिः कोशध्वनिश्रवणभीरुभिः, अकृतहस्त्यश्वम् अनवस्थापितहस्त्यश्वम्, भिन्नं तत इतो विक्षिप्तं, प्रतिनिवृत्तं युद्धव्यावृत्तं परबलम्, अभिन्नः सन्, हन्याद् वा । प्रतिसूर्यवातं सूर्यप्रतिमुखं चण्डवातप्रतिमुखं च, सर्वं सर्वविधं बलम्, अभिहन्यात् ।

'सत्रं गृह्णीयादि'ति 'सत्रापाश्रयोऽभिहन्याद्' इति च प्रागुक्तम् । कानि तानि सत्राणीत्यपेक्षायामाह — **धान्वनेत्यादि** । धान्वनं 'निरुदकस्तम्बमिरिणं वा धान्वनम्' इति लक्षितं मरुदुर्गं, वनं 'खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम्' इति लक्षितं वनदुर्गं, सङ्कटः गुल्मकण्टकलताकण्टकदुष्प्रवेशः प्रदेशः, पङ्कः कर्दमः, शैलः पर्वतः, निम्नं गभीरप्रदेशः, विषमं निम्नोन्नतदेशः, नौः तरीः, इत्येषां द्वन्द्वः । माधवस्तु 'विषमामि'ति पठित्वा द्वन्द्वैकवद्भावमाह । नाव इति च न पठति । गावः गोयूथानि, शकटव्यूहः भोगव्यूहभेदो वक्ष्यमाणः, नीहारः अवश्यायः, रात्रिः तमस्या, इति सत्राणि छन्नसञ्चारसाधनानि ।

**पूर्वे च प्रहरणकालाः कूटयुद्धहेतवः ।**

**सङ्ग्रामस्तु निर्दिष्टदेशकालो धर्मिष्ठः ।**

**संहत्य दण्डं ब्रूयात् — 'तुल्यवेतनोऽस्मि; भवद्भिः सह भोग्यमिदं राज्यं; मयाभिहितः परोऽभिहन्तव्यः' इति । 'वेदेष्वप्यनुश्रूयते समाप्तदक्षिणानां यज्ञानामवभृथेषु —"सा ते गतिर्या शूराणाम्" इति; 'अपीह श्लोकौ भवतः —**

**"यान् यज्ञसङ्घैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति ।**
**क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः ॥"**

---

**पूर्वे चेति** । पूर्वोक्ताः प्रहरणकालाः, चकारात् सत्राणि च, कूटयुद्धहेतवः । इत्थं कूटयुद्धविकल्पा निरूपिताः । अथ

**स्वसैन्योत्साहनमिति** सूत्रम् । स्वसैन्यस्य प्रकाशयुद्धे समुद्योजनमभिधीयत इति सूत्रार्थः ।

**सङ्ग्रामस्त्विति** । प्रकाशयुद्धं सङ्ग्रामः स तु, निर्दिष्टदेशकालः अमुकदेशे अमुककाले स्वपरसैन्यैः सन्निधाय योद्धव्यमिति सम्भाषितदेशकालः, धर्मिष्ठः धर्मादनपेतः । एतेन कूटयुद्धस्य पापीयस्त्वं प्रकाशयुद्धस्य तेनागतार्थत्वं चोक्तम् ।

प्रोत्साहनप्रकारमाह — **संहत्येति** । सङ्घीभूय स्थितमिति शेषः । दण्डं स्वसैन्यम्, ब्रूयाद्, अर्थाद् राजा । कथम्, तुल्यवेतनोऽस्मि वेतनं लाभः भवल्लाभसमानलाभोऽस्मि । तुल्यलाभतामेव विशदयति — **भवद्भिः सह भोग्यमित्यादि** । नाहमेकाकी युद्धविजितं राज्यं भोक्ष्ये किन्तु भवत्सहित एव भोक्ष्य इत्यर्थः । तदर्थं भवद्भिरेतावत् कर्तव्यमित्याह — **मयाभिहित इत्यादि** । मया निर्दिष्टः, परः शत्रुः, अभिहन्तव्यः, अर्थाद् भवद्भिः । इति अनेन प्रकारेण ब्रूयादिति सम्बन्धः । इत्थं स्वयंवचनेन प्रोत्साहनमुक्त्वा मन्त्रिपुरोहितमुखेनापि प्रोत्साहनमाह — **वेदेष्वपीत्यादि** । सम्यगाप्तऋत्विग्दक्षिणानां यज्ञानामनुष्ठानसमाप्तिषु विषये फलमनुश्रूयत इत्यर्थः । अनुश्रूयमाणं मन्त्रवाक्यमाह — **सा ते गतिर्या शूराणामितीति** । युद्धत्यक्तजीवितानां शूराणां या गतिः सा सुसमापितयज्ञस्य तव भूयादिति तस्य वाक्यस्यार्थः । एतेन युद्धप्राणत्यागस्य भूरियज्ञानुष्ठानसमानफलत्वमुक्तम् । उक्तवेदार्थोपबृंहणपरौ श्लोकावपि प्रमाणभूतौ स्त इत्याह — **अपीह श्लोकौ भवत इत्यादि** ।

**यानित्यादि** । यान् वाञ्छितार्थान् । **यज्ञसङ्घैः** क्रतुशतैरनुष्ठितैरि

**नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।**
**तत् तस्य मा भूत् नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥”**

**इति मन्त्रिपुरोहिताभ्यामुत्साहयेद् योधान् ।**

**व्यूहसम्पदा कार्तान्तिकादिवर्गः सर्वज्ञदैवसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत् । परपक्षं चोद्वेजयेत् । ‘श्वो युद्धम्’ इति कृतोपवासः शस्त्रवाहनं चानुशयीत । अथर्वभिश्च जुहुयात् । विजययुक्ताः स्वर्गीयाश्चाशिषो वाचयेत् । ब्राह्मणेभ्यश्चात्मानमतिसृजेत् ।**

**शौर्यशिल्पाभिजनानुरागयुक्तमर्थमानाभ्यामविसंवादितमनीक-**

त्यर्थः । तपसा कायक्लेशलक्षणेन । ... यज्ञशब्देन योग्यप्रतिग्रहीतृनिर्वर्त्यस्य ... इत्यर्थः । एवञ्च सुयुद्धप्राणत्यागिनां शूराणां ... स्वर्गगमनेन श्लोकेनोक्तमिति द्रष्टव्यम् ॥

नवमित्यादि । अस्य ... पात्रविशेषः ... उदकपूर्णं मन्त्राभिमन्त्रणसंस्कारयुक्तं दर्भसंवीतं युद्धजयाभ्युदयसाधकं प्राभृतं भर्तृपिण्डार्थमयुध्यमानस्य स्वर्गं न भवति, नरके च स पततीति श्लोकार्थः ॥

इतीति । वेदेष्वपीत्याद्युक्तेन प्रकारेण, वाचयित्वेति शेषः । मन्त्रिपुरोहिताभ्याम्, उत्साहयेद् योधान् ।

व्यूहसम्पदेति । अस्य राज्ञः, कार्तान्तिकादिः दैवज्ञनिमित्तज्ञादिः, वर्गश्च, व्यूहसम्पदा व्यूहानां राजकर्तृकाणां सैन्यविन्यासवैचित्र्याणां सम्पत् जयाव्यभिचारित्वगुणयोगः तया, सर्वज्ञदैवसंयोगख्यापनाभ्यां सर्वज्ञख्यापनेन त्रैकालिकफलाभिज्ञत्वख्यापनेन दैवसंयोगख्यापनेन दैवसाक्षात्कारख्यापनेन च, स्वपक्षम्, उद्धर्षयेद् उद्भूतहर्षं कुर्यात् । परपक्षं च, उद्वेजयेद् भग्नोत्साहं कुर्यात् । श्वो युद्धमित्यादि । श्वो युद्धमिति निश्चये सति अद्योपवासं कुर्वन् स्वीयशस्त्रवाहनयोरन्तिके रात्रौ शयीतेत्यर्थः । तयोरर्चनं त्वर्थाक्षिप्तं द्रष्टव्यम् । अथर्वभिश्चेति । शत्रुविध्वंसनैर्मन्त्रैश्च, जुहुयात् । विजययुक्ता इत्यादि । शत्रुविभवश्रीप्राप्तिरूपविजयानुकूलाः, स्वर्गीयाश्च मरणे स्वर्गप्राप्त्यनुकूलाश्च, आशिषः, वाचयेत्, ब्राह्मणैरिति शेषः । ब्राह्मणेभ्यश्चेति । तेभ्यः, आत्मानम्, अतिसृजेत् स्वरक्षणार्थमर्पयेत् ।

शौर्यशिल्पेत्यादि । शौर्यशिल्पादिगुणयुक्तं भूमिहिरण्यादिदानच्छत्रा-

**गर्भं कुर्वीत । पितृपुत्रभ्रातृकाणामायुधीयानामध्वजं मुण्डानीकं राजस्थानम् । हस्ती रथो वा राजवाहनमश्वानुबन्धे । यत्प्रायः सैन्यो, यत्र वा विनीतः स्यात्, तदधिरोहयेत् । राजव्यञ्जनो व्यूहाधिष्ठानमायोज्यः ।**

**सूतमागधाः शूराणां स्वर्गमस्वर्गं भीरूणां जातिसङ्घकुलकर्मवृत्तस्तवं च योधानां वर्णयेयुः । पुरोहितपुरुषाः कृत्याभिचारं ब्रूयुः । सत्रिकवर्धकिमौहूर्तिकाः स्वकर्मसिद्धिमसिद्धिं परेषाम् ।**

---

भरणादिबहुमानदानाभ्यां नित्यसंवादितं सैन्यं महासैन्यमध्ये स्थापयेत् स्वरक्षार्थमित्यर्थः । **पितृपुत्रभ्रातृकाणामिति** । पित्रादीनां राज्ञोऽन्तरङ्गसम्बन्धिनाम्, आयुधीयानां राजरक्षार्थधृतायुधानाम्, अध्वजं राजसम्बन्धित्वज्ञापकवेषरहितं, मुण्डानीकं मुण्डं शिरः तदिव प्रधानभूतं सैन्यं, राजस्थानं राजसमानस्थानं कुर्वीत, राजा यत्र तिष्ठति तत्रैव स्थापयेदित्यर्थः । **हस्तीति** । सः, रथो वा, राजवाहनं राज्ञो वाहनम्, अश्वानुबन्धे अश्वानां रक्षार्थानां साहचर्ये सति, भवेदिति शेषः । पक्षान्तरमाह — **यत्प्रायः सैन्य** इति । गजाश्वादिवाहनेषु मध्ये यद्वाहनबहुलः सैन्यः, तद् वा वाहनम्, अधिरोहयेत अधिरोहेत् । यत्र वाहने, विनीतः आरोहणशिक्षितः, स्याद् राजा, तद् वा वाहनम् अधिरोहेत् । **राजव्यञ्जन** इति । राजवेषधारी कश्चिद्, व्यूहाधिष्ठानं व्यूहस्य अधिष्ठानं शिरःस्थानं सर्वतल्लक्षणोपेतम, आयोज्यः आयुञ्जानः प्रयोजयितव्यः अधिष्ठापयितव्य इति यावत् । राजा तु शत्रुभिर्लक्षितो मा भूदित्येतदर्थं नैवायोज्य इत्यभिप्रायः ।

**सूतमागधा** इति । सूताः ऐतिहासिकाः मागधाः स्तुतिपाठकाश्च, शूराणां स्वर्गं, भीरूणाम् अस्वर्गं स्वर्गाभावं, योधानां जातिसङ्घकुलकर्मवृत्तस्तवं च जातिर्ब्राह्मणत्वादिः सङ्घः तत्तद्देशीयसङ्घरूपता कुलम् अन्वयः कर्म जीविका वृत्तं शीलम् इत्येषां स्तवं च, वर्णयेयुः राज्ञः कथयेयुः । **पुरोहितपुरुषा** इति । ते, कृत्याभिचारं शत्रुहिंसिनी देवता कृत्या तद्द्वारेण अभिचारः शत्रुहिंसार्थोऽथर्वमन्त्रप्रयोगः कृत्याभिचारः तं, ब्रूयुः पुरोहितारब्धं कथयेयुः । **सत्रिकेत्यादि** । सत्रिकः सत्री वर्धकिस्तक्षा मौहूर्तिकः युद्धारम्भमुहूर्तनिश्चायकः एते, स्वकर्मसिद्धिं परेषाम् असिद्धिं च ब्रूयुः । सत्रिकस्थाने यन्त्रिकेति क्वचित् पाठः । तदा जामदग्न्यादियन्त्रशिल्पी यन्त्रिक इति व्याख्येयम् ।

**सेनापतिरर्थमानाभ्यामभिसंस्कृतमनीकमाभाषेत — 'शतसाहस्रो राजवधः। पञ्चाशत्साहस्रः सेनापतिकुमारवधः। दशसाहस्रः प्रवीरमुख्यवधः। पञ्चसाहस्रो हस्तिरथवधः। साहस्रोऽश्ववधः। शत्यः पत्तिमुख्यवधः। शिरो विंशतिकम्। भोगद्वैगुण्यं स्वयंग्राहश्च इति। तदेषां दशवर्गाधिपतयो विद्युः।**

**चिकित्सकाः शस्त्रयन्त्रागदस्नेहवस्त्रहस्ताः, स्त्रियश्चान्नपानरक्षिण्यः पुरुषाणामुद्धर्षणीयाः पृष्ठतस्तिष्ठेयुः।**

---

भूयो योधप्ररोचकमाह —**सेनापतिरिति**। सर्वसेनाध्यक्षः, अर्थमानाभ्याम्, अभिसंस्कृतम् अभिपूजितम्, अनीकम् आभाषेत। आभाषणप्रकारमाह — **राजवधः शतसाहस्र** इति। केनचिद् भटेन शत्रुराजवधे कृते तस्य सुवर्णलक्षलाभो भवेदित्यर्थः। परसेनापतिकुमारयोरन्यतरवधस्तदर्धलाभ इत्याह— **पञ्चाशदित्यादि**। प्रवीरपुरुषमुख्यस्य वधः दशसाहस्रलाभः, तदर्धलाभो हस्तिरथान्यतरवधः, साहस्रलाभोऽश्ववधः, शतलाभः पदातिमुख्यवधः इत्याह—**दशसाहस्र** इत्यादि। **शिर इति**। छित्त्वानीतं योधसामान्यस्यैकं शिरः विंशतिकं पणविंशतिलाभकम्। योद्धृसामान्यस्य युद्धकालिकं लाभसामान्यमाह — **भोगद्वैगुण्यमिति**। भोगस्य भक्तवेतनात्मनः क्लृप्तस्य द्वैगुण्यं, स्वयंग्राहश्च युद्धे परस्य सकाशाद् अपह्रियमाणस्य कोशादेरपहर्तृभिर्योधैः स्वत्वेन ग्रहणं च, भवेदिति शेषः। इतिशब्द आभाषणप्रकारसमाप्तौ। **तदिति**। यथोक्तं राजवधादिविशेषजातं, दशवर्गाधिपतयः पदिकसेनापतिनायका वक्ष्यमाणाः, विद्युः जानीयुः।

योद्धृणां शस्त्रव्रणचिकित्साद्यर्थमाह — **चिकित्सका इति**। शल्यशास्त्रवेदिनः, शस्त्रयन्त्रागदस्नेहवस्त्रहस्ताः शस्त्राणि मण्डलाग्रादीनि यन्त्राणि कङ्कमुखादीनि अगदानि औषधानि स्नेहा घृतादीनि वस्त्राणि व्रणबन्धपट्टार्थानि एतानि हस्ते येषां ते तथाभूताः सन्तः, स्त्रियश्च, अन्नपानरक्षिण्यः योधहितस्वाद्वन्नपानदायिन्यः, पुरुषाणाम् उद्धर्षणीयाः उच्चैर्हृष्यन्त्याभिरिति तथाभूता उद्धर्षणार्था इत्यर्थः, पृष्ठतः युद्धभूमिपश्चाद्भागे, तिष्ठेयुः। इत्थं स्वसैन्यप्रोत्साहनं व्याख्यातम्। अथ

**स्वबलान्यबलव्यायोग** इति सूत्रम्। स्वसैन्यस्य परसैन्यापेक्षया व्यायोगः विशिष्टमायोजनं व्यवस्थापनं दिक्सूर्यवाताद्यानुगुण्यं यथा स्यात् तथा व्यूहरचनमिति यावत्, तदिहाभिधीयत इति सूत्रार्थः।

**अदक्षिणामुखं पृष्ठतस्सूर्यमनुलोमवातमनीकं स्वभूमौ व्यूहेत । परभूमिव्यूहे चाश्वांश्चारयेयुः ।**

**यत्र स्थानं प्रजवश्चाभूमि व्यूहस्य, तत्र स्थितः प्रजवितश्चोभयथा जीयेत । विपर्यये जयति उभयथा स्थाने प्रजवे च ।**

**समा विषमा व्यामिश्रा वा भूमिरिति, पुरस्तात् पार्श्वाभ्यां पश्चाच्च ज्ञेया । समायां दण्डमण्डलव्यूहाः, विषमायां भोगसंहतव्यूहाः । व्यामिश्रायां विषमव्यूहाः ।**

**विशिष्टबलं भङ्क्त्वा सन्धिं याचेत । समबलेन याचितः सन्दधीत । हीनमनुहन्यात् । न त्वेव स्वभूमिप्राप्तं त्यक्तात्मानं वा ॥**

---

**अदक्षिणामुखमिति** । दक्षिणाभिमुख्यस्यामाङ्गलिकत्वात् तदितरदिगभिमुखं, पृष्ठतस्सूर्यम् अप्रतिसूर्यम्, अनुलोमवातम् अप्रतिवातम्, अनीकं, स्वभूमौ तद्योग्यभूमौ, व्यूहेत अवस्थापयेत् । परानीकस्य तद्योग्यभूमौ व्यूहनप्रसङ्गे तद्विघातार्थं स्वीयानश्वांस्तत्र चारयेयुरित्याह— **परभूमिव्यूहे चे**त्यादि ।

**यत्रे**ति । यत्र देशे, व्यूहस्य, स्थानं चिरावस्थानं, प्रजवश्च क्षिप्रक्रिया च, अभूमि अलब्धावकाशम् अशक्यमित्यर्थः, तत्र, स्थितः चिरावस्थितः, प्रजवितश्च क्षिप्रक्रियश्च, उभयथा जीयेत परेण परिभूयेत । विपर्यये स्थानप्रजवयोरुभयोः सभूमित्वे, उभयथा स्थाने प्रजवे च स्थितः प्रजवितश्च प्रकारद्वयेनापीत्यर्थः, जयति परं परिभवति । तथाच स्थानप्रजवोभयानुगुणायां भूमौ व्यूहः कार्य इति फलितम् ।

व्यूहानुगुण्यस्य भूमिविशेषाश्रयत्वाद् भूमिं विभजते— **समे**त्यादि । समविषमव्यामिश्रभेदेन त्रिविधा भूमिः पुरःपार्श्वपश्चाद्भागसम्बन्धात् प्रत्येकं त्रिविधेत्यर्थः । तत्र व्यूहव्यवस्थामाह— **समायामि**ति । त्रिप्रकारायां समायां, दण्डमण्डलव्यूहाः दण्डव्यूहा मण्डलव्यूहाश्च, कार्या इति शेषः । विषमायां त्रिप्रकारायां, भोगसंहतव्यूहा भोगव्यूहाः संहतव्यूहाश्च, कार्याः । व्यामिश्रायां तथाभूतायां, विषमव्यूहाः कार्याः । व्यूहानां स्वरूपमधिकरणशेषे वक्ष्यते ।

युद्धे शत्रुभङ्गदर्शने विजिगीषुणा कर्तव्यमाह— **विशिष्टबलमि**ति । स्वाभ्यधिकबलं, भङ्क्त्वा भङ्गेन योजयित्वा, सन्धिं याचेत न केवलं नानुप्रहरेत् किन्तु स्वयं सन्धिमभ्यर्थयेत बलाधिकसख्यातिशयार्थमिति भावः । **समबलेन** भग्नेन, याचितः, सन्दधीत न तु स्वयं सन्धिं याचेतेत्यर्थः । **हीनं** हीन-

**पुनरावर्तमानस्य निराशस्य च जीविते ।**
**अधार्यो जायते वेगस्तस्माद् भग्नं न पीडयेत् ॥**

इति कौटलीयार्थशास्त्रे सांग्रामिके दशमाधिकरणे तृतीयोऽध्यायः,
कूटयुद्धविकल्पाः स्वसैन्योत्साहनं स्वबलान्यबलव्यायोगश्च ।
आदित एकत्रिंशच्छततमः ॥

---

बलं भग्नम्, अनुहन्यात् अनुबध्य प्रहरेत् पुनरनुन्मज्जनार्थमित्यर्थः । तत्र विशेषमाह— **न त्वेवे**त्यादि । हीनमपि स्वानुगुणभूमिगतं वा जीवितनिराशं वा नानुहन्यादित्यर्थः ॥

जीवितनिराशतया प्रत्यावर्तमानस्य हीनबलस्यापि युद्धवेगो धारयितुमशक्यो यस्मात् तस्माद् भग्नं तं भूयः पीडनेन न प्रकोपयेदित्याह — **पुनरावर्तमानस्ये**त्यादि ॥

इति कौटलीयार्थशास्त्रव्याख्यायां सांग्रामिके दशमेऽधिकरणे तृतीयोऽध्यायः
कूटयुद्धविकल्पाः स्वसैन्योत्साहनं स्वबलान्यबलव्यायोगश्च,
आदित एकत्रिंशदुत्तरशततमः ॥

**१५३,१५४. प्रक. युद्धभूमयः, पत्त्यश्वरथहस्तिकर्माणि च ।**

**स्वभूमिः पत्त्यश्वरथद्विपानामिष्टा युद्धे निवेशे च ।**

**धान्वनवननिम्नस्थलयोधिनां खनकाकाशदिवारात्रियोधिनां च पुरुषाणां नादेयपार्वतानूपसारसानां च हस्तिनामश्वानां च यथास्वमिष्टा युद्धभूमयः कालाश्च ।**

**समा स्थिराभिकाशा निरुत्खातिन्यचक्रखुरानक्षग्राहिणी अवृक्षगुल्मप्रततिस्तम्भकेदारश्वभ्रवल्मीकसिकतापङ्कभङ्गुरा दरणहीना च रथभूमिः ।**

---

युद्धभूमय इति सूत्रम् । युद्धानुगुणाः समस्थिराभिकाशादिलक्षणा भूमय उच्यन्त इति सूत्रार्थः ।

स्वभूमिरिति । स्वानुगुणा भूमिः, पत्त्यश्वरथद्विपानां, युद्धे, निवेशे च अवस्थाने च, इष्टा अपेक्षिता ।

धान्वनवननिम्नस्थलयोधिनामिति । धान्वनदुर्गयोधिनां वनदुर्गयोधिनां निम्नं जलं तद्योधिनां स्थलयोधिनां च, खनकादीनां च भूमिं खात्वा तत्र स्थित्वा युध्यमानाः खनकयोधिनः प्राकारबहिर्देशे वृक्षादिशून्ये देशे वा स्थित्वा युध्यमाना आकाशयोधिनः दिवैव युध्यमाना दिवायोधिनः रात्रावेव युध्यमाना रात्रियोधिनः इत्येषामष्टविधानां, पुरुषाणां पदातीनां, नादेयादीनां च नदीसम्बन्धिनां पर्वतसम्बन्धिनाम् अनूपसम्बन्धिनां सरस्सम्बन्धिनां च, हस्तिनाम्, अश्वानां च, युद्धभूमयः युद्धयोग्या भूमयः, कालाश्च तत्तद्भूमियोग्या ऋतवश्च, यथास्वम् इष्टाः धान्वनयोधिनां धन्वभूमिरित्यादिक्रमेण नादेयानां नदीभूमिरित्यादिक्रमेण च यथायथमिष्यन्त इत्यर्थः ।

रथभूमिमाह — समेति । अदन्तुरा, स्थिरा अशिथिलावयवा, अभिकाशा अभितः काशते भासते तृणाद्यनवच्छन्नत्वात्, निरुत्खातिनी उत्पाटनरहिता, अचक्रखुरा अप्रविशन्तः चक्रखुराः चक्राणि रथाङ्गानि खुराः गवादिशफाश्च यस्यां सा तथाभूता, अनक्षग्राहिणी अक्षश्चक्राधारस्तद्ग्राहिणी न भवति, अवृक्षगुल्मप्रतत्यादिः वृक्षादिरहिता, तत्र गुल्मः सान्द्रपर्णा प्रतानशतगामिनी लता वीरुत्संज्ञा तृणसङ्घातो वा, प्रततिर्लता, स्तम्भः स्थाणुः, केदारः धान्यवापः, श्वभ्रं गर्तः, भङ्गुरं वक्रप्रदेशः, शेषं प्रतीतम् । दरणहीना च दीर्घरेखाकारसुषिररहिता च, रथभूमिः । भङ्गुरदरणहीनेति समस्तपाठे स्तम्भशब्दात् प्राग् विसर्गान्तं छेत्तव्यम् ।

**हस्त्यश्वयोर्मनुष्याणां च समे विषमे हिता युद्धे निवेशे च ।**

**अण्वश्मवृक्षा ह्रस्वलङ्घनीयश्वभ्रा मन्ददरणदोषा चाश्वभूमिः ।**
**स्थूलस्थाण्वश्मवृक्षप्रततिवल्मीकगुल्मा पदातिभूमिः । गम्यशैलनिम्नविषमा मर्दनीयवृक्षा छेदनीयप्रततिः पङ्कभङ्गुरदरणहीना च हस्तिभूमिः ।**

**अकण्टकिन्यबहुविषमा प्रत्यासारवतीति पदातीनामतिशयः ।**

**द्विगुणप्रत्यासारा कर्दमोदकखञ्जनहीना निश्शर्करेति वाजिनामतिशयः ।**

**पांसुकर्दमोदकनलशराधानवती श्वदंष्ट्राहीना महावृक्षशाखाघातवियुक्तेति हस्तिनामतिशयः ।**

---

उक्ता रथभूमिरेव हस्त्यश्वमनुष्याणां समे विषमे च देशे युद्धे निवेशे चानुगुणेत्याह — **हस्त्यश्वयोरित्यादि** ।

अश्वादीनां भूमिं सामान्यत उक्त्वा विशेषत आह— **अण्वश्मवृक्षेति** । कृशशिलावृक्षा, ह्रस्वलङ्घनीयश्वभ्रा ह्रस्वेनापि लङ्घयितुं शक्यं श्वभ्रं यस्यां सा तथाभूता, मन्ददरणदोषा स्वल्पदरणदोषा च, अश्वभूमिः । मनुष्यभूमिमाह—**स्थूलस्थाण्वित्यादि** । हस्तिभूमिमाह— **गम्यशैलनिम्नविषमेति** । गम्याः हस्तिभिः गन्तुं शक्याः शैलाः पर्वताः निम्नानि जलानि विषमाणि वन्तुरस्थलानि च यस्यां सा तथाभूता, मर्दनीयवृक्षा हस्तिमर्दनयोग्यवृक्षयुक्ता, छेदनीयप्रततिः, क्वचिद् 'भञ्जनीयप्रततिरि'ति पाठः । पङ्कभङ्गुरादिहीना च भङ्गुरेत्याकारान्तपाठे भूम्यभिप्रायं स्त्रीत्वं विवक्षणीयम् । रथभूम्यतिदेशसिद्धं पङ्कभङ्गुरदरणहीनत्वं हस्तिभूमेः पुनरुच्यते तस्यां तन्नियमयोगार्थम् । तेनाश्वपदातिभूम्योस्तद्योगानियमो द्रष्टव्यः ।

रथहस्त्यश्वमनुष्याणां भूमेरतिशयलक्षणं गुणविशेषं प्रतिलोमक्रमेणाह — **अकण्टकिनीत्यादि** । अबहुविषमा बहुनिम्नोन्नतरहिता । प्रत्यासारवती प्रत्यासारः प्रतिनिवर्तनावकाशस्तद्युक्ता । **इति पदातीनामतिशय** इति। एवम्प्रकारभूमिलाभः पत्तीनाम् अतिशयहेतुरित्यर्थः ।

**द्विगुणप्रत्यासारेत्यादि** । पुरःप्रसारावकाशद्विगुणप्रतिनिवर्तनावकाशा पङ्केन तत्प्रायजलेन च रहिता अश्मप्रायमृद्रहिता च भूमिरश्वानामतिशयहेतुरित्यर्थः ।

**पांस्वित्यादि** । पांसवो रेणवः कर्दमोदकं पङ्किलजलं नलः सुषिराख्यस्तृणविशेषः शरो मुञ्जः तयोराधानानि आधीयते धार्यतेऽनेनेत्याधानमिति

**तोयाशयाश्रयवती निरुत्खातिनी केदारहीना व्यावर्तनसमर्थेति रथानामतिशयः। उक्ता सर्वेषां भूमिः।**

**एतया सर्वबलनिवेशा युद्धानि च व्याख्यातानि भवन्ति।**

**भूमिवासवनविचयो विषमतोयतीर्थवातरश्मिग्रहणं, वीवधासारयोर्घातो रक्षा वा, विशुद्धिः स्थापना च बलस्य, प्रसारवृद्धिर्बाहूत्सारः,**

---

व्युत्पत्त्या मूलशङ्कव इति नयचन्द्रिका। तैर्युक्ता, श्वदंष्ट्राहीना श्वदंष्ट्रा गोकण्टकस्तद्धीना, महावृक्षशाखाघातवियुक्ता महतां वृक्षाणां विटपाभिघातहीना इत्येवम्प्रकारा भूमिः, हस्तिनाम्, अतिशयः।

**तोयाशयाश्रयवती**ति। तोयाशयैः स्नपनयोग्यजलयुक्तैर्जलाधारैः आश्रयैर्विश्रमस्थानैश्चोपेता, निरुत्खातिनी उत्पाटनरहिता, केदारहीना बीजवापहीना, व्यावर्तनसमर्था प्रतिनिवर्तनयोग्यविस्तारयुक्ता, इतीदृशी भूमिः, रथानाम् अतिशयः। भूप्रकरणमुपसंहरति — **उक्ते**त्यादि।

**एतये**ति। यथोक्तप्रकारया भूम्या, एतामाश्रित्यैवेत्यर्थः। सर्वबलनिवेशाः सर्वेषां बलानां निवेशाः निवेशनकर्माणि, युद्धानि च युद्धकर्माणि च, व्याख्यातानि कर्तव्यतया निरूपितानि भवन्ति।

युद्धभूमिमाश्रितानां बलानां कर्मनिरूपणार्थं सूत्रं — **पत्त्यश्वरथहस्तिकर्माणी**ति। पत्त्यादिचतुष्टयस्य कर्माणि अभिधीयन्त इति सूत्रार्थः।

तत्र प्रथममश्वकर्माण्याह — **भूमिवासवनविचय** इति। भूम्यादीनां त्रयाणां विचयः शोधनं तदश्वैः कर्तव्यमित्यर्थः। तत्र भूमेर्गूढपरबलनिरासो भूमिविचयः, यत्र बलं स्वैरविमुक्तं वसति तत्रोपद्रवपरिहारो वासविचयः, मार्गमध्यगेषु वनेषु चोरोत्सारणं वनविचयः। **विषमे**त्यादि। विषमादिपञ्चकग्रहणं परानाक्रमणीयस्य निवेशयोग्यस्य प्रदेशस्य पूर्वमेव ग्रहणं विषमग्रहणं, तोयवतो जलपूर्णतटाकादियुक्तस्य प्रदेशस्य पूर्वमेव ग्रहणं तोयग्रहणं, नद्याद्युत्तरणानुकूलस्थानस्य ग्रहणं तीर्थग्रहणं, स्वानुकूलवातानुभावकदेशग्रहणं वातग्रहणं, स्वाप्रतिमुखसूर्यरश्मिपातानुगुणदेशग्रहणं रश्मिग्रहणम्। **वीवधे**त्यादि। स्वदेशादविच्छिन्न आजीवद्रव्यागमो वीवधः सुहृद्बलागमनम् आसारः तयोः घातः प्रतिहतिः परस्य, रक्षा वा आत्मीययोस्तु तयोः रक्षणं च, बलस्य सैन्यस्य विशुद्धिर्गूढपरसैनिकप्रवेशदोषपरिहारः, स्थापना च परबलनिमित्तक्षोभा-

**पूर्वप्रहारो, व्यावेशनं, व्यावेधनमाश्वासो, ग्रहणं, मोक्षणं, मार्गानुसारविनिमयः, कोशकुमाराभिहरणं, जघनकोट्यभिघातो, हीनानुसारणमनुयानं, समाजकर्मेत्यश्वकर्माणि ।**

**पुरोयानमकृतमार्गवासतीर्थकर्म बाहूत्सारस्तोयतरणावतरणे स्थानगमनावतरणं विषमसम्बाधप्रवेशोऽग्निदानशमनमेकाङ्गविजयः भिन्नसन्धानमभिन्नभेदनं व्यसने त्राणमभिघातो विभीषिका त्रासन-**

---

वसरे स्थैर्यापादनं च, प्रसारवृद्धिः सर्वतो वनाजीवः प्रसारस्तस्य वृद्धिरुपचयः, बाहूत्सारः परबलस्य बाहुभ्यामिवोत्सारणं तेन तद्धेतुभूतं स्वबलोभयपार्श्वयोरश्वानां प्रसरणं लक्ष्यते । पूर्वप्रहारः पूर्वं शत्रुबले प्रहारार्पणं, तदश्वैरेव क्षिप्रकारिभिः क्रियत इत्यर्थः । व्यावेशनं परबलस्यान्तः प्रविश्य विक्षोभणं, व्यावेधनं परबलस्य विविधव्यधोत्पादनम्, आश्वासः आश्वासनं स्वबलस्यात्यायासावसन्नस्यानुबलदानं, ग्रहणं परयोधानामनुगम्यादानं, मोक्षणं परगृहीतस्वीयभटमोचनं, मार्गानुसारविनिमयः मार्गानुसारपरिवृत्तिः स्वबलस्य मार्गमनुगच्छति परे परबलमार्गस्य स्वयमश्वद्वारेणानुगमनमित्यर्थः, कोशकुमाराभिहरणं परकीयस्य कोशस्य कुमारस्य च पररक्ष्यसर्वस्वभूतस्य अभिहरणं परसमक्षं हरणं, जघनकोट्यभिघातः जघने पश्चाद्भागे कोटौ पुरस्तात् पक्षे च अभिघातः, हीनानुसारणं भग्नाश्वयोधानुसारकरणम्, अनुयानं पलायमानपरसैन्यानुगमनं, समाजकर्म विप्रकीर्णस्य सैन्यस्य सङ्घत्वकरणम्, इत्यश्वकर्माणि उक्तप्रकाराण्यश्वसुकराणि कर्माणि ।

हस्तिनां कर्माण्याह — **पुरोयानमिति** । स्वसैन्यस्याग्रे गमनम्, अकृतमार्गवासतीर्थकर्म अकृतानां पूर्वमकल्पितानां मार्गाणां वासस्थानानां नद्यवतरणघट्टानां च कल्पनं, बाहूत्सारः बाहुभ्यामिव परसैन्यस्य स्वसैन्यपार्श्वे स्थित्वोत्सारणं, तोयतरणावतरणे नद्यादिजले तत्परिमाणज्ञानार्थं तरणमवतरणं च, स्थानगमनावतरणं स्थानं शत्रुबलाक्रमणे पङ्क्तिशोऽवस्थितिः गमनं तथैवाध्वयानम् अवतरणं तथैवोच्चदेशादेरवरोहणं च, विषमसम्बाधप्रवेशः तृणगुल्मादिदुस्सञ्चरे देशे शत्रुसैन्यसमवायसङ्कटे च प्रवेशः, अग्निदानशमनम् अग्नेः परशिबिरे प्रक्षेपः तस्य स्वशिबिरे परदत्तस्य निर्वापणं च, एकाङ्गविजयः एकेनैव सेनाङ्गेन हस्तिलक्षणेनाश्वादिराहितेनापि शत्रुजयसिद्धिः, भिन्नसन्धानं विशीर्णसैन्यैकीकरणम्, अभिन्नभेदनं सङ्घीभूतस्य परसैन्यस्य विशरणं,

**मौदार्यं ग्रहणं मोक्षणं सालद्वाराट्टालकभञ्जनं कोशवाहनापवाहनमिति हस्तिकर्माणि ।**

**स्वबलरक्षा चतुरङ्गबलप्रतिषेधः सङ्ग्रामे ग्रहणं मोक्षणं भिन्नसन्धानमभिन्नभेदनं त्रासनमौदार्यं भीमघोषश्चेति रथकर्माणि ।**

**सर्वदेशकालशस्त्रवहनं व्यायामश्चेति पदातिकर्माणि ।**

**शिबिरमार्गसेतुकूपतीर्थशोधनकर्म यन्त्रायुधावरणोपकरणग्रासवहनमायोधनाच्च प्रहरणावरणप्रतिविद्धापनयनमिति विष्टिकर्माणि ॥**

---

व्यसने त्राणं शत्र्वाक्रमणकृतायां रात्र्यादिसत्रोत्पादितायां वा विपदि हस्तिभिः रक्षणम्, अभिघातः परसैन्यमर्दनं, विभीषिका केवलदर्शनेनापि भयजननं, त्रासनं मदाद्यवस्थाभवैर्दुष्टचेष्टितैः साध्वसोत्पादनम्, औदार्यं सैन्यमहत्त्वं, ग्रहणं शत्रुभटादिहरणं, मोक्षणं परहृतस्वीयभटादिमोचनं, सालद्वाराट्टालकभञ्जनं सालः प्राकारः द्वारं गोपुरम् अट्टालकः प्राकाराग्रगृहम् एषां भञ्जनं, कोशवाहनापवाहनं कोशस्य राजकीयस्य धनस्य वाहनं सञ्चारणम् अपवाहनं भङ्गावसरेऽपनयनं च, इति एवम्प्रकाराणि हस्तिकर्माणि ।

**स्वबलरक्षेति** । 'प्राकारतुल्यसंस्थानतया रथानां स्वबलरक्षकत्वमि'ति माधवः । चतुरङ्गबलप्रतिषेधः सङ्ग्रामे युद्धे चतुरङ्गस्य परबलस्य वारणं, ग्रहणम् इत्यादिकं षट्कं प्राग् व्याख्यातं, भीमघोषश्च भयङ्करध्वनिकरणं च, इति रथकर्माणि ।

**सर्वदेशकालशस्त्रवहनमिति** । सर्वस्मिन् देशे समविषमादौ काले प्रावृडादौ च शस्त्राणां धारणं, व्यायामश्च युद्धव्यायोगश्च, इति पदातिकर्माणि ।

अथ विष्टीनां कर्माण्याह — **शिबिरेत्यादि** । शिबिरं सेनानिवेशः मार्गः पन्थाः सेतुर्नद्यादौ जलविधारणकरणं कूपः तत्खननं तीर्थं नद्याद्यवतरणस्थानम् एषां शोधनकर्म तृणाद्युन्मूलनादिना शुचीकरणं, यन्त्रादिपञ्चकवहनम्, आयोधनाच्च प्रहरणावरणप्रतिविद्धापनयनं युद्धभूमेरायुधानां कञ्चुकादीनां बाणविद्धभटादीनां चान्यतोऽपनयनम्, इति विष्टिकर्माणि अनायुधीयाः कर्मकराः विष्टयस्तेषां कर्माणि ॥

कुर्याद् गवाश्वव्यायोगं रथेष्वल्पहयो नृपः ।
खरोष्ट्रशकटानां वा गर्भमल्पगजस्तथा ॥

इति कौटलीयार्थशास्त्रे सांग्रामिके दशमाधिकरणे चतुर्थोऽध्यायः
युद्धभूमयः पत्त्यश्वरथहस्तिकर्माणि,
आदितो द्वात्रिंशच्छततमः ॥

---

**कुर्यादिति** । अल्पहयोऽल्पाश्वः, नृपः, रथेषु गवाश्वव्यायोगम् अश्वैः सह बलीवर्दानां योजनं, कुर्यात् । तथा अल्पगजः नृपः, खरोष्ट्रशकटानां गर्भं कुर्यात् खरोष्ट्रयुक्तशकटसम्बद्धं सैन्यगर्भं कुर्याद् गजव्याप्यं सैन्यगर्भं गजाभावात् खरोष्ट्रयुक्तशकटव्याप्तं कुर्यादित्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां साङ्ग्रामिके दशमेऽधिकरणे
चतुर्थोऽध्यायः युद्धभूमयः पत्त्यश्वरथहस्तिकर्माणि,
आदितो द्वात्रिंशच्छततमः ॥

**१५५—१५७. प्रक. पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः, सारफल्गुबलविभागः, पत्त्यश्वरथहस्तियुद्धानि च।**

**पञ्चधनुश्शतावकृष्टदुर्गमवस्थाप्य युद्धमुपेयाद्, भूमिवशेन वा। विभक्तमुख्यामचक्षुर्विषये मोक्षयित्वा सेनां सेनापतिनायकौ व्यूहेयाताम्।**

**शमान्तरं पत्तिं स्थापयेत्। त्रिशमान्तरमश्वम्। पञ्चशमान्तरं रथं, हस्तिनं वा। द्विगुणान्तरं त्रिगुणान्तरं वा व्यूहेत। एवं यथासुखमसम्बाधं युध्येत।**

---

**पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभाग** इति सूत्रम्। पक्षौ पञ्चव्यूहात्मना स्थाप्यमानस्य बलस्य बहिः पुरस्तात्कोट्यौ कक्षौ पश्चादन्तःपार्श्वे उरस्यं मध्यम् एषां पञ्चानां समूहविशेषाणां बलाग्रतः बलस्य सैन्यस्य अग्रं परिमाणं तदानुगुण्येन, व्यूहविभागः व्यूहस्य विन्यासस्य विभजनम्, अभिधीयत इति सूत्रार्थः। व्यूहविभागपूर्वं युध्यमानस्यैव सैन्यस्य जयलाभो भवतीति व्यूहविभागस्येह कथनम्।

**पञ्चधनुश्शतावकृष्टदुर्ग**मिति। पञ्चभिर्धनुश्शतैर्विप्रकृष्टं दुर्गं स्कन्धावारः यस्मात् तत् तथाभूतम्, अवस्थाप्य कृत्वा, युद्धं युद्धस्थलम्, उपेयात् स्वीकुर्यात्। युद्धभूमिं स्कन्धावारात् पञ्चधनुश्शतविप्रकृष्टां कुर्यादित्यर्थः। **भूमिवशेन** वेति। लभ्यमानभूमिपरिमाणानुरोधेन पञ्चधनुश्शतदूरविप्रकृष्टां तदधिकदूरविप्रकृष्टां तन्न्यूनदूरविप्रकृष्टां वा युद्धभूमिं कुर्यादित्यर्थः। **विभक्तमुख्या**मिति। प्रतिग्रहदेशपक्षकक्षोरस्येषु विभज्य निवेशितप्रधानां, सेनाम्, अचक्षुर्विषये मोक्षयित्वा प्रतिव्यूहरचनशङ्कया परदृष्ट्यगोचरे स्थापयित्वा, सेनापतिनायकौ सेनापतिः पादिकदशकपतिः नायकस्तद्दशकाधिपतिः एतौ, व्यूहेयातां विभज्य विन्यस्येताम्।

पदात्यादीनां व्यूहनप्रकारानाह—**शमान्तर**मिति। शमान्तरं शमश्चतुर्दशाङ्गुलः तत्परिमितम् अन्तरं पत्त्योर्मिथोऽन्तरालं यस्मिन् कर्मणि तत् तथा, पत्तिं स्थापयेत्। पत्तित्रिगुणान्तरालमश्वं, पत्तिपञ्चगुणान्तरालं रथं हस्तिनं च स्थापयेदित्याह—**त्रिशमान्तर**मित्यादि। पदात्यादीनां चतुर्णां बहुत्वेऽन्तरालमानमवरकल्पेनोक्त्वा तेषां बहुत्वे मध्यमोत्तमकल्पाभ्यामन्तरालमानं विधत्ते—**द्विगुणान्तर**मित्यादि। तत्तदुक्तमानद्विगुणान्तरालं तत्त्रिगुणान्तरालं वा पत्त्यादिचतुष्टयं स्थापयेदित्यर्थः। अन्तरालमानवर्धनस्य फलमाह—**एव**मित्यादि। असम्बाधं संमर्दरहितम्।

**पञ्चारत्नि धनुः, तस्मिन् धन्विनं स्थापयेत् । त्रिधनुष्यश्वम् । पञ्चधनुषि रथं हस्तिनं वा । पञ्चधनुरनीकसन्धिः पक्षकक्षोरस्यानाम् ।**

**अश्वस्य त्रयः पुरुषाः प्रतियोद्धारः । पञ्चदश रथस्य, हस्तिनो वा, पञ्च चाश्वाः । तावन्तः पादगोपाः वाजिरथद्विपानां विधेयाः ।**

**त्रीणि त्रिकाण्यनीकं रथानामुरस्यं स्थापयेत् । तावत् कक्षं पक्षं चोभयतः । पञ्चचत्वारिंशद् एवं रथा व्यूहे भवन्ति ।**

---

अथ धन्विविषयमुत्तमोत्तमाश्वादिविषयं चान्तरालविधिमाह — **पञ्चे-**त्यादि । पञ्चारत्नि पञ्चहस्तं, धनुः तत्संज्ञम् । तस्मिन् धनुर्मितेऽन्तराले, धन्विनं धानुष्कं, स्थापयेत् । त्रिधनुषि पञ्चदशहस्तान्तराले, अश्वं स्थापयेत् । पञ्चधनुषि पञ्चविंशतिहस्तान्तराले, रथं, हस्तिनं वा गजं च, स्थापयेत् । पक्षादीनां पञ्चानामनीकानां परस्परान्तरालं कियत् कर्तव्यमित्याह— **पञ्चधनुरि**ति । पक्षकक्षोरस्यानां पक्षौ बलस्य बहिः पुरस्तात्कोट्यौ कक्षौ पश्चादन्तःपार्श्वे उरस्यं मध्यम् इत्येषां पञ्चानामनीकानाम्, अनीकसन्धिः अनीकमिथोन्तरालं, पञ्चधनुः पञ्चविंशतिहस्तमानम् ।

अश्वादीनामग्रगा भूत्वा शत्रुं ये प्रतियुध्यन्ते, तेषां संख्यामाह— **अश्वस्य त्रय** इत्यादि । **पञ्चदशे**ति । तावन्तः प्रतियोद्धारः, रथस्य, हस्तिनो वा गजस्य च । **पञ्च चाश्वा इ**ति । एकैकस्य रथस्य गजस्य च त्रयः पुरुषा न केवलमग्रयायिनः किन्तु पञ्च पञ्चाश्वा अप्यग्रयायिन इत्यर्थः । **तावन्त** इति । पञ्च, पादगोपाः पादरक्षकाः, वाजिरथद्विपानां, विधेयाः कर्तव्याः । तदेवं रथस्यैकस्य पुरोगाः पुरुषाः पञ्चदश पञ्चाश्वाः पादगोपाश्च पञ्चेति सिद्धम् ।

यथोक्तपुरुषादियुक्ता रथा उरस्यस्यानीकस्य कति स्थापनीया इत्याह—**त्रीणी**ति । रथानां त्रीणि त्रिकाणि पृथक् पृथगेकपङ्क्तिरूपतया मिलितस्थितानि त्रीणि त्रितयानि, उरस्यम् अनीकं स्थापयेत् मध्यानीकात्मना कल्पयेत् । एवं नव रथा मध्यानीके भवन्ति । **तावदि**ति । उरस्यानीकतुल्यरथपरिमाणं, कक्षं कक्षानीकं, पक्षं च पक्षानीकं च, उभयतः उभयोः पार्श्वयोः कोटचोश्च भवतीत्यर्थः । अनेन प्रकारेण उरस्यादिपञ्चानीकात्मके व्यूहे प्रत्येकं नवरथयोगात् सङ्कलनया पञ्चचत्वारिंशद् रथा भवन्तीत्याह — **पञ्चेत्यादि** ।

**द्वे शते पञ्चविंशतिश्चाश्वाः, षट्शतानि पञ्चसप्ततिश्च पुरुषाः प्रतियोद्धारः । तावन्तः पादगोपा वाजिरथद्विपानाम् ।**

**एष समव्यूहः । तस्य द्विरथोत्तरा वृद्धिरा एकविंशतिरथादित्येवमोजा दश समव्यूहप्रकृतयो भवन्ति ।**

**पक्षकक्षोरस्यानामतो विषमसंख्याने विषमव्यूहः । तस्यापि द्विरथोत्तरा वृद्धिरा एकविंशतिरथादित्येवमोजा दश विषमव्यूहप्रकृतयो भवन्ति ।**

**अतः सैन्यानां व्यूहशेषमावापः कार्यः । रथानां द्वौ त्रिभागा-**

---

रथानां पञ्चचत्वारिंशत्त्वेऽश्वादीनां सिध्यन्तीमियत्तामाह — **द्वे शते** इत्यादि । एकैकस्य रथस्य पञ्चाश्वत्वात् पञ्चचत्वारिंशतो रथानाम् अश्वाः पञ्चविंशत्यधिकद्विशतसंख्या भवन्ति, एकैकस्याश्वस्य पुरोयायिपुरुषत्रितययोगात् तावतामश्वानां पुरोयायिपुरुषाः पञ्चसप्तत्यधिकषट्छतसंख्या भवन्तीत्यर्थः । **तावन्त** इत्यादि । अश्वानां यावन्तः पुरोयायिपुरुषाः तावन्तः पादगोपाः, तथा रथानां द्विपानां च यावन्तः पुरोयायिनोऽश्वाः पुरुषाश्च तावन्तः पादगोपा भवन्तीत्यर्थः ।

**एष समव्यूह** इति । यथोक्तः समव्यूह इत्युच्यते त्रिकतुल्यत्वादित्यर्थः । **तस्येति** । व्यूहावयवस्य त्रिकस्य, द्विरथोत्तरा द्वौ द्वौ रथावुत्तरौ पूर्वां पूर्वां प्रकृतिं कृत्वा वर्धमानौ यस्याः सा तथाभूता, आ एकविंशतिरथात् यावदेकविंशतिरथा वर्धिता भवन्ति तावत्पर्यन्तेत्यर्थः, वृद्धिः, इत्येवम् अनेन प्रकारेण, ओजाः अयुग्माः त्रिकप्रकृतौ द्वियोगेन पञ्च पञ्चके द्वियोगेन सप्त सप्तके द्वियोगेन नव नवके द्वियोगेनैकादश एकादशके द्वियोगेन त्रयोदश त्रयोदशके द्वियोगेन पञ्चदश पञ्चदशके द्वियोगेन सप्तदश सप्तदशके द्वियोगेन एकोनविंशतिः एकोनविंशतौ द्वियोगेनैकविंशतिरित्येवमयुग्मरूपा इत्यर्थः, दश समव्यूहप्रकृतयो भवन्ति समव्यूहनयोनयः प्रभेदा जायन्ते ।

विषमव्यूहमाह— **पक्षकक्षोरस्यानामिति** । तेषाम्, अतो व्यूहाङ्गतो, विषमसंख्याने व्यूहाङ्गसङ्ख्यासाम्यविरहे इत्यर्थः, विषमव्यूहः । विषमव्यूहस्यापि द्विरथोत्तरैकविंशतिरथपर्यन्तवृद्ध्या दशायुग्मरूपा विषमव्यूहयोनयो भेदा भवन्तीत्याह —**तस्यापीत्यादि** ।

अथावापविधिमाह — **अत** इति । एषु समविषमव्यूहेषु, सैन्यानां, व्यूहशेषं व्यूहनादवशिष्टं सैन्यम्, आवापः कार्यः आवापतां नेतव्यम् । आ

**वङ्गेष्वावापयेत् । शेषमुरस्यं स्थापयेत् । एवं त्रिभागोनो रथानामावापः कार्यः । तेन हस्तिनामश्वानाम् आवापो व्याख्यातः ।**

**यावदश्वरथद्विपानां युद्धसम्बाधं न कुर्यात्, तावदावापः कार्यः ।**

**दण्डबाहुल्यमावापः । पत्तिबाहुल्यं प्रत्यावापः । एकाङ्गबाहुल्यमन्वावापः । दूष्यबाहुल्यमत्यावापः ।**

**परावापात् प्रत्यावापादाचतुर्गुणादाष्टगुणादिति वा विभवतः सैन्यानामावापः कार्यः ।**

समन्तादुप्यत इति व्युत्पत्त्या आवापः प्रक्षेपः । व्यूहावशिष्टं सैन्यं व्यूहेषु प्रक्षेप्तव्यमित्यर्थः । प्रक्षेपणप्रकारमाह — **रथानामित्यादि** । व्यूहनशिष्टानां रथानां त्रिधा विभक्तानां, द्वौ त्रिभागौ, अङ्गेषु बहिःपुरस्तात्कोक्ष्योः पश्चादन्तःपार्श्वयोश्चेत्येतेषु, आवापयेत् । शेषम् अवशिष्टं त्रिभागम्, उरस्यं स्थापयेत् मध्यगं कुर्यात् । आवाप्यत्वेनावशिष्टस्य सैन्यस्य व्यूढसैन्यापेक्षया परिमाणतोऽधिकत्वे न्यूनत्वे समत्वे वा कथमावापः कर्तव्य इत्यत्राह—**एवं त्रिभागोन** इत्यादि । व्यूढं रथानीकमपेक्ष्य त्रिभागन्यून एव रथावापः कर्तव्यः, न तु ततोऽधिकस्तेन समो वेत्यभिप्रायः । रथन्यायं हस्तिष्वश्वेषु चातिदिशति—**तेनेत्यादि** । हस्तिनोऽश्वांश्च त्रेधा विभज्य द्वौ त्रिभागौ पक्षकक्षयोः शेषमुरस्ये च प्रक्षिपेदित्यर्थः ।

**यावदिति** । यत्परिमाणं बलशेषं व्यूहेषु प्रक्षिप्यमाणम्, अश्वरथद्विपानां, युद्धसम्बाधं युद्धसंमर्दं, न कुर्यात्, तावत् आवापः कार्यः । त्रिभागोन इत्यादयस्तु विधयः प्रदर्शनार्था इति भावः ।

प्रत्यावापादीन् आवापविशेषान् वक्तुमावापपदार्थमाह — **दण्डबाहुल्यमिति** । दण्डस्य बलस्य व्यूहरचनविनियुक्तस्य बाहुल्यं व्यूहरचनातिरिक्तबलप्रक्षेपेण वर्धनम्, आवापः आवापपदार्थः । पत्तिबाहुल्यं पदातिमात्रेण वर्धनं, प्रत्यावापः । **एकाङ्गबाहुल्यमिति** । एकेनाङ्गेनाश्वगजरथान्यतमबलेन वर्धनम्, अन्वावापः । **दूष्यबाहुल्यमिति** । दूष्या राजावग्रहचारिणो मुख्यास्तद्बाहुल्यम्, अत्यावापः ।

व्यूढे परकीयबले यावान् आवापः तदपेक्षया चतुर्गुणाद्यष्टगुणपर्यन्तप्रमाणः स्वविभवानुगुण्येन वा सैन्यानामावापः कार्य इत्याह — **परावापादिति** । इह वाशब्दः 'एवं त्रिभागोन' इति व्यूढस्वबलापेक्षया पूर्वमुक्ता-

**रथव्यूहेन हस्तिव्यूहो व्याख्यातः। व्यामिश्रो वा हस्तिरथाश्वानाम्। चक्रान्तयोर्हस्तिनः, पार्श्वयोरश्वमुख्या, रथा उरस्ये। हस्तिनामुरस्यं रथानां कक्षावश्वानां पक्षाविति मध्यभेदी। विपरीतोऽन्तर्भेदी।**

**हस्तिनामेव तु शुद्धः। सान्नाह्यानामुरस्यम्, औपवाह्यानां जघनं, व्यालानां कोट्याविति।**

दावापप्रमाणादस्यावापप्रमाणस्य पक्षान्तरत्वद्योतनार्थः। इह परावापादित्येतदनन्तरं 'प्रत्यावापाद्' इत्यधिकं पठ्यते। तच्च नातिप्रयोजनकम्। तदित्थं 'त्रीणि त्रिकाण्यनीकं रथानामुरस्यं स्थापयेद्' इत्यादिना रथव्यूहोऽभिहितः।

रथव्यूहविधानं हस्तिव्यूहेऽतिदिशति — **रथव्यूहेने**त्यादि। हस्तिप्रधानो व्यूहो हस्तिव्यूहः। तत्र हस्तिनां संख्या रथव्यूहोक्तया रथसंख्यया समाना, न तु ततोऽधिकेत्यभिप्रायः। हस्तिरथाश्वमिश्रणरूपो वा हस्तिव्यूहः कर्तव्य इत्याह — **व्यामिश्रो** वेत्यादि। करणप्रकारमाह — **चक्रान्तयो**रिति। चक्रस्य सैन्यस्य अन्तयोः बहिःपुरस्तात्कोट्योः पक्षशब्दवाच्ययोः, हस्तिनः, स्थाप्या इति शेषः। पार्श्वयोः पश्चादन्तःकक्षयोर्जघनापरपर्याययोः, अश्वमुख्याः स्थाप्याः। अश्वा मुख्या इति व्यस्तमपि पठ्यते। रथाः, उरस्ये मध्ये, स्थाप्याः। एवंविधहस्त्यादिस्थापनयुक्तो हस्तिव्यूहस्यैकः प्रकार इत्यभिप्रायः। द्वितीयं प्रकारमाह — **हस्तिना**मित्यादि। इति मध्यभेदी अयं प्रकारो मध्यभेदीत्युच्यते मध्ये हस्तिस्थापनरूपविशेषवत्त्वादित्यर्थः। तृतीयं प्रकारमाह — **विपरीत** इति। उक्तप्रकारद्वयविपरीतः — पार्श्वापरपर्याययोः कक्षयोर्गजाः रथाः पक्षयोः उरस्येऽश्वा इत्येवंविधहस्त्यादिविन्यासवानित्यर्थः, अन्तर्भेदी पश्चादन्तःपार्श्वयोर्हस्तिस्थापनरूपविशेषवत्त्वादन्तर्भेदीत्युच्यते। अनेन न्यायेन प्रथमः प्रकारः पक्षभेदीति व्यपदेष्टुमर्हः पक्षयोर्हस्तिविन्यासरूपविशेषवत्त्वादिति बोद्धव्यम्।

अथ शुद्धं व्यूहमाह—**हस्तिनामेव तु शुद्ध** इति। केवलानां गजानाम्, अश्वादिमिश्रणरहितः शुद्धो व्यूहो भवति। तत्र सान्नाह्यादीनां त्रिविधानां गजानां विन्यासस्थानान्याह — **सान्नाह्याना**मिति। युद्धयोग्यानाम्, उरस्यं मध्यं, स्थानमिति शेषः। औपवाह्यानां राजवाहनानां, जघनं पश्चादन्तःपार्श्वे, स्थानम्। व्यालानां दुष्टगजानां, कोट्यौ पक्षौ, स्थानम्। इतिशब्दः शुद्धहस्तिव्यूहकथनसमाप्तौ।

**अश्वव्यूहे वर्मिणामुरस्यं शुद्धानां कक्षपक्षाविति ।**

**पत्तिव्यूहः पुरस्तादावरणिनः पृष्ठतो धन्विन इति । शुद्धाः ।**

**पत्तयः पक्षयोरश्वाः पार्श्वयोः, हस्तिनः पृष्ठतो रथाः पुरस्तात्, परव्यूहवशेन वा विपर्यास इति । द्व्यङ्गबलविभागः । तेन त्र्यङ्गबलविभागो व्याख्यातः ।**

**दण्डसम्पत् सारबलं पुंसाम् । हस्त्यश्वयोर्विशेषः—कुलं जातिः सत्त्वं वयःस्थता प्राणो वर्ष्म जवस्तेजः शिल्पं स्थैर्यमुदग्रता विधेयत्वं सुव्यञ्जनाचारतेति ।**

---

शुद्धेऽश्वव्यूहेऽश्वानां स्थापनप्रकारमाह — **अश्वव्यूह** इत्यादि । वर्मिणां वर्म कवचं तद्वतामश्वानाम् । शुद्धानां वर्मरहितानामित्यर्थः ।

शुद्धे पत्तिव्यूहे पत्तीनां स्थापनप्रकारमाह — **पत्तिव्यूह** इत्यादि । पुरस्तात् कोट्योः । आवरणिनः कवचिनः पत्तयः । पृष्ठतः पश्चादन्तःपार्श्वयोः । **शुद्धा** इति । अव्यामिश्रा गजादिव्यूहा दर्शिता इत्यर्थः ।

अथ मिश्रव्यूहे दर्शयितव्ये प्रथमं द्विसेनाङ्गमिश्रमाह—**पत्तय** इत्यादि । इह पार्श्वयोरित्यन्तेनैको द्व्यङ्गबलविभाग उक्तः, पुरस्तादित्यन्तेनापरः, परव्यूहेत्यादिना चान्यः । तत्र परव्यूहवशेन वेत्यादेरयमर्थः —उक्तव्यवस्थाद्वयव्यत्ययोऽपि शत्रुव्यूहभञ्जनानुगुण्यमवेक्ष्य कर्तव्य इति । त्र्यङ्गबलविभागेऽप्ययं न्यायोऽनुसर्तव्य इत्याह — **तेने**त्यादि । इत्थं पक्षादीनां बलाग्रतो व्यूहविभागः प्रपञ्चितः ।

अथ बलानां सारफल्गुभाववशादपि विभागं वक्तुं सूत्रयति—**सारफल्गुबलविभाग** इति । साराणां पितृपैतामहत्वनित्यत्वादिदण्डसम्पद्युक्तानां फल्गूनां तदतिरिक्तानां च बलानां पत्त्यादीनां विभागः विभज्य पक्षादिषु निवेशनम् अभिधीयत इति सूत्रार्थः ।

तत्र पदात्यादीनां सारबलत्वं व्यवस्थापयति — **दण्डसम्पदि**ति । या 'पितृपैतामहो नित्यो वश्य' इत्यादिना प्रकृतिसम्पत्प्रकरणेऽभिहिता सा, सारबलं पुंसां पदातीनां सारबलत्वमित्यर्थः । हस्त्यश्वयोः कुलजातिसत्त्वादिरूपा गुणविशेषा एव सारबलत्वमित्याह — **हस्त्यश्वयोर्विशेष** इत्यादि । तत्र कुलम् एकप्रभवत्वं, जातिर्भद्रमन्द्रत्वादिः, सत्त्वं धैर्यं, वयःस्थता कर्मक्षमवयःप्राप्तिः, प्राणः कायबलं, वर्ष्म समुचितोत्सेधायामपरिणाहयोगित्वं, जवो वेगः, तेजः पराक्रमणशीलत्वं परिभवासहिष्णुता वा, शिल्पं सुशिक्षितत्वं,

**पत्त्यश्वरथद्विपानां सारत्रिभागमुरस्यं स्थापयेद्, द्वौ त्रिभागौ कक्षं पक्षं चोभयतः। अनुलोममनुसारम्। प्रतिलोमं तृतीयसारम्। फल्गु प्रतिलोमम्। एवं सर्वमुपयोगं गमयेत्।**

**फल्गुबलमन्तेष्ववधाय वेगोऽभिहुतो भवति। सारबलमग्रतः कृत्वा कोटीष्वनुसारं कुर्यात्। जघने तृतीयसारं, मध्ये फल्गुबलमेतत् सहिष्णु भवति।**

---

स्थैर्यं प्रहारेऽप्यारब्धकर्मापरित्यागित्वम्, उदग्रता उच्छ्रितमुखत्व, विधेयत्वं नियन्तृवश्यता, सुव्यञ्जनाचारता शोभनलक्षणत्वं शोभनचेष्टितत्वं च। नन्विह रथानां सारबलत्वं कस्मान्नोक्तम्। उच्यते। तेषां हि सारबलत्वं नेतृपुरुषाश्वद्वारकं वक्तव्यं, तच्च पुरुषाश्वयोः सारबलत्ववचनेनैवोक्तप्रायमित्यदोषः।

यथोक्तरूपं पत्त्यादिसारं व्यूहे कथमुपयुञ्जीतेत्यपेक्षायामाह—**पत्त्यश्वरथद्विपानामिति**। तेषां, सारत्रिभागं सारस्य त्रिधा विभक्तस्यैकं त्रिभागम्, उरस्यं स्थापयेत् उरस्यात्मना निवेशयेत् मध्यगतं कुर्यादित्यर्थः। द्वौ त्रिभागौ, कक्षं पक्षं चोभयतः कक्षात्मना पक्षात्मना चेत्युभयात्मना, स्थापयेत् — तयोस्त्रिभागयोरेकं पश्चादन्तःपार्श्वयोरपरं पुरस्तात्कोट्योश्चार्धशो निवेशयेदित्यर्थः। एष उत्तमसारस्य विनियोगप्रकारः। तदपेक्षया किञ्चिदवरस्यानुसाराख्यस्य सारभेदस्य विनियोगमाह — **अनुलोममनुसारमिति**। स्थापयेदिति वर्तते। अनुसारं बलम्, अनुलोमं स्थापयेत् उत्तमसारस्य पृष्ठतो निवेशयेत्। अनुलोमं ह्यनुसारमुच्यते यत् पृष्ठगं भवति। प्रतिलोमं तु तद्विपरीतं पुरोगतम्। अनुसारात् किञ्चिदवरस्य सारभेदस्य विनियोगमाह — **प्रतिलोममिति**। तृतीयसारं द्वितीयभूतानुसारापेक्षया तृतीयं सारं, प्रतिलोमं स्थापयेत् उत्तमसारस्याग्रगतं कुर्यात्। अथ फल्गुनो बलस्य विनियोगमाह — **फल्ग्विति**। तत्, प्रतिलोमं स्थापयेत् तृतीयसारस्यापि पुरस्स्थितं कुर्यादित्यर्थः। **एवमिति**। अनेन प्रकारेण, सर्वं सर्वप्रकारं बलम्, उपयोगं, गमयेत् नयेत्।

किमर्थं सारे विद्यमाने फल्गुबलस्याग्रतो निवेशनमित्यत्राह—**फल्गुबलमिति**। तत्, अन्तेषु पक्षादीनामग्रेषु, अवधाय निवेश्य, युध्यमानेनेति शेषः, वेगः आपततां प्रतिबलानामग्रिमो जवः, अभिहुतः कृतहोमः पुरःस्थितफल्गुबलरूपाग्निसात्कारप्रशमित इत्यर्थः, भवति। क्षयोऽपि तद्वशात् फल्गु-

**व्यूहं तु स्थापयित्वा पक्षकक्षोरस्यानामेकेन द्वाभ्यां वा प्रहरेत् । शेषैः प्रतिगृह्णीयात् ।**

**यत् परस्य दुर्बलं वीतहस्त्यश्वं दूष्यामात्यकं कृतोपजापं वा, तत् प्रभूतसारेणाभिहन्यात् । यद् वा परस्य सारिष्ठं, तद् द्विगुणसारेणाभिहन्यात् । यदङ्गमल्पसारमात्मनः, तद् बहुनोपचिनुयात् । यतः परस्यापचयस्ततोऽभ्याशे व्यूहेत, यतो वा भयं स्यात् ।**

---

बलस्य मनाग् भवन् सारबलस्यैव नातिदोषावह इत्यभिप्रायः । अभिहत इत्यपि माधवपाठः । फल्गुबलविषयत्वापादनेन क्षपितसामर्थ्य इति तदार्थः । अभिहूलित इति त्वपपाठः । व्यूहान्तरं तत्फलं चाह — **सारेत्यादि** । अग्रतः सारबलस्य कोटिष्वनुसारबलस्य कक्षयोस्तृतीयसारस्य मध्ये फल्गुबलस्य च निवेशनतोऽपि व्यूहो जायते; तथा व्यूढं सैन्यं परबलवेगेन नाभिभूयते चेत्यर्थः ।

अथ व्यूढे सैन्ये योधनप्रकारमाह—**व्यूहं त्विति** । तं, स्थापयित्वा, पक्षकक्षोरस्यानां पक्षयोः पुरस्तात्कोटयोः कक्षयोः पश्चादन्तःपार्श्वयोः उरस्यस्य मध्यस्य चेत्येतेषां पञ्चधा विभक्तानां मध्ये, एकेन अङ्गेन, द्वाभ्यामङ्गाभ्यां वा, प्रहरेत् अर्थाद् विजिगीषुः परबलम् । शेषैः त्रिभिरङ्गैः, प्रतिगृह्णीयात् प्रतीच्छेद्, अर्थात् स्वयं प्रहारप्रवृत्तं परबलम् ।

परबले प्रहारस्थानमाह—**यदिति** । परस्य यत् सैन्यं, दुर्बलम् अल्पबलं, वीतहस्त्यश्वं सारमपि हस्त्यश्वरहितं, दूष्यामात्यकं दूष्याः क्रुद्धभीतादिरूपा अमात्या यस्मिंस्तत् तथाभूतं, कृतोपजापं वा कृतभेदनं वा, तत् सैन्यं, प्रभूतसारेण प्रचुरेण सारबलेन, अभिहन्यात् । **यद्वेति** । यत् परस्य सारिष्ठं सारतमं बलं, तत्, द्विगुणसारेण तदपेक्षया द्विगुणसारेण बलेन, अभिहन्यात् । **यदिति** । यद् आत्मनः, अङ्गं पत्त्याद्यन्यतमम्, अल्पसारं, तद् बहुना प्रभूतेनाङ्गेन, उपचिनुयाद् वर्धयेत् । पराभिघातानुगुणमात्माभयानुगुणं च व्यूहनविशेषमाह — **यत इत्यादि** । परव्यूहस्य सम्बन्धिनि यस्मिन् पक्षकक्षाद्यन्यतमे सेनाङ्गापचयो दृश्यते तस्यान्तिके वा, यतः पक्षकक्षाद्यन्यतमाद् भयं सम्भाव्यते तस्यान्तिके वा स्वबलं व्यूहेतेत्यर्थः । तदित्थमुभयथा व्यूहविभागविधिः प्रतिपादितः । अथ युद्धकर्माभिधातव्यम् । तत्र

**पत्त्यश्वरथहस्तियुद्धानि इति सूत्रम्** । पत्त्यादीनां चतुर्णां युद्धान्युच्यन्त इति सूत्रार्थः ।

**अभिसृतं परिसृतमतिसृतमपसृतमुन्मथ्यावधानं वलयो गोमूत्रिका मण्डलं प्रकीर्णिका व्यावृत्तपृष्ठमनुवंशमग्रतः पार्श्वाभ्यां पृष्ठतो भग्नरक्षा भग्नानुपातः इत्यश्वयुद्धानि ।**

**प्रकीर्णिकावर्जान्येतान्येव, चतुर्णामङ्गानां व्यस्तसमस्तानां वा घातः, पक्षकक्षोरस्यानां च प्रभञ्जनमवस्कन्दः सौप्तिकं चेति हस्तियुद्धानि ।**

**उन्मथ्यावधानवर्जान्येतान्येव स्वभूमावभियानापयानस्थितयुद्धानीति रथयुद्धानि ।**

---

तत्रादावश्वकर्माणि त्रयोदशरूपाण्याह—**अभिसृतमित्यादि** । इदमित्थं व्याचक्षते—स्वबलात् परबलं प्रति पूर्वमभिसरणम् अभिसृतं, परबलस्य पुरः पृष्ठतः पार्श्वे चाभिहत्य परितो भ्रमणं परिसृतं, परबलं मध्यतो भित्त्वा सूचीवदभिगमनम् अतिसृतं, तेनैव मार्गेण पुनर्निर्गमनम् अपसृतं, बहुभिरश्वैरितस्ततश्चोन्मथ्यावभज्यावधानं पुनरेकत्रावस्थानम् उन्मथ्यावधानं, द्विधा सूचिमार्गेणाभिगमनं वलयः, गोमूत्रवद् वक्रगत्या प्रवृत्तिर्गोमूत्रिका, परबलस्यैकदेशमवच्छिद्य तत्परिवेष्टनं मण्डलं, सर्वगतीनां साङ्कर्येण प्रयोगः प्रकीर्णिका, अपसारं कृत्वा पुनरतिसरणं व्यावृत्तपृष्ठं, परबलाभिमुखस्य स्वबलस्यानुवर्तनम् अनुवंशं, प्रहरतामेव युद्धान्निवृत्य स्वबलप्रवेश इत्यन्ये, भग्नानां स्वबलानाम् अग्रतः पार्श्वाभ्यां पृष्ठतो भ्रमणं भग्नरक्षा, भग्नस्य परबलस्यानुवर्तनं भग्नानुपातः इति ।

हस्तियुद्धान्याह—**प्रकीर्णिकावर्जानीति** । अलघुवपुरशक्यप्रकीर्णिकातिरिक्तानि, एतान्येव अभिसृतादीनि, चतुर्णाम् अङ्गानां पत्त्यादीनां व्यस्तसमस्तानां वा घातः, पक्षकक्षोरस्यानां च प्रभञ्जनम् अवमर्दनम्, अवस्कन्दः छिद्रमुपलभ्य प्रहारः, सौप्तिकं सुप्तघातः, इति हस्तियुद्धानि ।

रथकर्माण्याह—**उन्मथ्यावधानवर्जानीति** । उन्मथ्यावधानव्यतिरिक्तानि, एतान्येव हस्तिकर्माण्येव, स्वभूमौ अभियानापयानस्थितयुद्धानि 'समा स्थिराभिकाशे'त्यादिना लक्षितायां स्वयोग्यायां भूमौ स्थित्वा अभियानं परबलाभिक्रमणम् अपयानं परबलमभिभूयापसरणं स्थितयुद्धं च कृतपरिरक्षस्य शत्रोः प्राकारं परिवृत्य चिरमवस्थाय तेन सह योधनं च, इत्येतानि च, रथयुद्धानि ।

**सर्वदेशकालप्रहरणमुपांशुदण्डश्चेति पत्तियुद्धानि ॥**

**एतेन विधिना व्यूहानोजान् युग्मांश्च कारयेत् ।**
**विभवो यावदङ्गानां चतुर्णां सदृशो भवेत् ॥**
**द्वे शते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहे ।**
**भिन्नसङ्घातनं तस्मान्न युध्येताप्रतिग्रहः ॥**

इति कौटलीयार्थशास्त्रे सांग्रामिके दशमाधिकरणे पञ्चमोऽध्यायः.
पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभाग, सारफल्गुबल-
विभागः, पत्त्यश्वरथहस्तियुद्धानि च।
आदितस्त्रयस्त्रिंशच्छततमः ॥

---

पत्तियुद्धान्याह — **सर्वदेशकाले**त्यादि । स्पष्टार्थम् ॥

**एतेन विधिने**ति । उक्तेन कल्पेन, ओजान् अयुग्मान्, युग्मांश्च समांश्च, व्यूहान्, कारयेत् । कथं, यावद् यथा, चतुर्णाम् अङ्गानां द्विपहयरथपत्तीनां, विभवः समृद्धिः, सदृशो भवेद् व्यूहानामनुरूपः स्यात् । अङ्गविभवानुरूप्येण व्यूहान् निवेशयेदित्यभिप्रायः ॥

युद्धे प्रवृत्ते क राजा तिष्ठेदित्यत्राह— **द्वे शते धनुषां गत्वे**ति । व्यूहाद् धनुर्द्विशतमानमन्तरालं विहाय, राजा, प्रतिग्रहे सैन्यपृष्ठे, तिष्ठेत् । प्रतिग्रह इति प्रथमान्तपाठे तात्स्थ्यात् ताच्छब्द्यं बोद्धव्यम् । किमर्थं, तस्माद् भिन्नसंघातनं परबलकृताभिघातभिन्नानां स्वबलानाम् एकीकरणलक्षणं प्रयोजनं राज्ञः सैन्यपृष्ठावस्थानात् सिध्यतीत्यर्थः । अत एवाह— **न युध्येताप्रतिग्रह** इति । अनाश्रितसैन्यपृष्ठो न युद्धं कुर्यादित्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां साङ्ग्रामिके दशमेऽधिकरणे
पञ्चमोऽध्यायः, पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः
सारफल्गुबलविभागः पत्त्यश्वरथहस्तियुद्धानि ।
आदितस्त्रयस्त्रिंशच्छततमः ॥

---

## १५८, १५९. प्रक. दण्डभोगमण्डलासंहतव्यूहव्यूहनं तस्य प्रतिव्यूहस्थापनं च।

**पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभागः। पक्षौ कक्षावुरस्यं प्रतिग्रहः इति बार्हस्पत्यः।**

**प्रपक्षकक्षोरस्या उभयोः दण्डभोगमण्डलासंहताः प्रकृतिव्यूहाः। तत्र तिर्यग्वृत्तिर्दण्डः। समस्तानामन्वावृत्तिर्भोगः। सरतां सर्वतोवृत्तिः मण्डलः। स्थितानां पृथगनीकवृत्तिरसंहतः।**

---

**दण्डभोगमण्डलासंहतव्यूहव्यूहनमिति** सूत्रम्। दण्डव्यूहव्यूहनं भोगव्यूहव्यूहनं मण्डलव्यूहव्यूहनम् असंहतव्यूहव्यूहनमिति चतुर्विधं व्यूहनमुच्यत इति सूत्रार्थः।

तत्र शुक्रबृहस्पत्योर्मतभेदमाह — **पक्षाविति**। पक्षौ बहिःपुरस्तात्कोट्यौ, उरस्यं मध्यं, प्रतिग्रहः सैन्यपृष्ठदेशः, इति, चतुरवयव इति शेषः, औशनसः उशनसोक्तः, व्यूहविभागः। पक्षौ बहिःपुरस्तात्कोट्यौ, कक्षौ पश्चादन्तःपार्श्वे, उरस्यं मध्यं, प्रतिग्रहः सैन्यपृष्ठम्, इति, षडवयव इति शेषः, बार्हस्पत्यः बृहस्पत्युक्तः, व्यूहविभाग इति संबध्यते।

**प्रपक्षकक्षोरस्या** इति। वक्ष्यमाणरीत्या प्रविभक्तानि पक्षकक्षोरस्यानि बहिःकोट्यन्तःपार्श्वमध्यसैन्यानि येषां ते तथाभूताः, उभयोर्दण्डभोगमण्डलासंहताः शुक्रबृहस्पतिमतयोर्द्वयोरपि दण्डाद्यात्मना चतुर्भेदा इत्यर्थः, प्रकृतिव्यूहाः, भवन्तीति शेषः। तेषां लक्षणमाह— **तत्रेति**। चतुर्षु दण्डादिव्यूहेषु मध्ये, तिर्यग्वृत्तिर्दण्डः तिरश्चीनावस्थानो दण्डसंज्ञो व्यूहः। **समस्तानामिति**। औशनसमते कक्षवर्जितानां चतुर्णां बार्हस्पत्यमते कक्षाभ्यसह षण्णामित्यर्थः, अन्वावृत्तिः अनुबन्धेनावृत्तिः वृत्तबहुलतया स्थितिः, भोगः तत्संज्ञः। **सरतामिति**। शत्रुसैन्याभिमुखं गच्छतां, सर्वानीकानां, सर्वतोवृत्तिः एकीभावेन सर्वतो व्यापारवत्त्वं, मण्डलः तत्संज्ञः। **स्थितानामिति**। शत्रुबलाभिमुख्येन चलनात् पूर्वं 'पञ्चधनुरनीकसन्धिरि'ति नियमानुसारितयावस्थितानां चतुर्णां षण्णां वानीकानां, पृथगनीकवृत्तिः शत्रुबलाभिमुख्येन चलनेऽप्यसंहतानीकतया वृत्तिर्वर्तनं पूर्वस्थितामसंहतिमपरित्यज्यैव चेष्टमानतेत्यर्थः, असंहतः तदाख्यो व्यूहः। इत्थं शुक्रबृहस्पतिमतानुगुणं लक्षणमभिहितम्।

**पक्षकक्षोरस्यैः समं वर्तमानो दण्डः । स कक्षाभिक्रान्तः प्रदरः; स एव पक्षाभ्यां प्रतिक्रान्तो दृढकः; स एवातिक्रान्तः पक्षाभ्यामसह्यः; पक्षाववस्थाप्योरस्याभिक्रान्तः श्येनः; विपर्यये चापं चापकुक्षिः प्रतिष्ठः सुप्रतिष्ठश्च । चापपक्षः सञ्जयः; स एवोरस्यातिक्रान्तो विजयः; स्थूलकर्णपक्षः स्थूलकर्णः; द्विगुणपक्षस्थूलो विशालविजयः; त्र्यभि-**

---

अथ स्वमतेन दण्डादीनामन्यलक्षणं कक्षानङ्गीकर्तृशुक्रमताविरुद्धं बृहस्पतिमताविरुद्धमाह — **पक्षकक्षोरस्यैरिति** । पक्षादिभिः पञ्चभिरनीकैः, समम् अवैषम्येण, वर्तमानः स्थानगमनादि कुर्वन्, दण्डः दण्डव्यूहः । एष च प्रकृतिव्यूहः । एतद्विकारान् प्रदरादीन् लक्षयति — **स** इति । स दण्डः, कक्षाभिक्रान्तः पश्चादन्तःपार्श्वाभ्यां परबलाभिमुखं क्रममाणः, प्रदरः तदाख्यो दण्डविकारः । **स एवेति** । उक्त एव दण्डः, पक्षाभ्यां बहिःपुरस्तात्कोटिभ्यां, प्रतिक्रान्तः प्रतिलोमं क्रममाणः, अर्थात् कक्षाभिमुखमागच्छतः प्रतिबलस्य पीडनार्थं, दृढकः तदाख्यो दण्डविकारः । **स एवेति** । दृढक एव, अतिक्रान्तः पक्षाभ्यां बहिःकोटिभ्यामतिशयेन क्रान्तः परबलस्यान्तर्गाढं प्रविष्ट इत्यर्थः, असह्यः तदाख्यः । **पक्षाविति** । द्वौ पक्षौ, अवस्थाप्य स्वस्थाने स्थापयित्वा, उरस्याभिक्रान्तः उरस्येन परबलाभिमुखं क्रममाणः, श्येनः तदाख्यः । **विपर्यय** इत्यादि । उक्तप्रदरादिचतुष्टयवैपरीत्ये चापं चापकुक्षिः प्रतिष्ठः सुप्रतिष्ठश्च इति क्रमाच्चत्वारो व्यूहा भवन्तीत्यर्थः । तत्र कक्षाभ्यामभिक्रान्तः यः प्रदर उक्तस्तद्विपरीतः कक्षाभ्यां प्रतिक्रान्तश्चापव्यूहः । यः पक्षाभ्यां प्रतिक्रान्तो दृढक उक्तस्तस्य विपरीतः पक्षाभ्यामभिक्रान्तश्चापकुक्ष्याख्यो व्यूहः । यः पक्षाभ्यामतिक्रान्तोऽसह्य उक्तस्तस्य विपरीतः पक्षाभ्यां प्रतिक्रान्तः प्रतिष्ठाख्यो व्यूहः । यः पक्षाववस्थाप्योरस्याभिक्रान्तः श्येन उक्तस्तस्य विपरीत उरस्येन पक्षाभ्यां चाभिक्रान्तो यद्वातिक्रान्तः सुप्रतिष्ठनामा व्यूहः । एवमष्टौ दण्डव्यूहस्य विकारान् दर्शयित्वा भूयो विकारमाह—**चापपक्ष** इति । चापाकारौ पक्षौ यस्य स तथाभूतः, सञ्जयः तदाख्यो दण्डविकारः । **स एवेति** । दण्ड एव, उरस्यातिक्रान्तः उरस्येन परबलस्यान्तःप्रविष्टः, विजयः तदाख्यः । **स्थूलकर्णपक्ष** इति । स्थूलकर्णौ पक्षौ यस्य स तथाभूतः, स्थूलकर्णः तदाख्यः । स्थूणाकर्णः इत्यादर्शेषु पाठः । **द्विगुणपक्षस्थूल** इति । द्विगुणः विजयापेक्षया पक्षयोः स्थूलः, विशालविजयः तदाख्यः । **द्विगुणपक्षस्थूण**

**क्रान्तपक्षश्चमूमुखः; विपर्यये झषास्यः। ऊर्ध्वराजिर्दण्डः सूची; द्वौ दण्डौ वलयः; चत्वारो दुर्जयः। इति दण्डव्यूहाः।**

**पक्षकक्षोरस्यैर्विषमं वर्तमानो भोगः। स सर्पसारी गोमूत्रिका वा। स युग्मोरस्यो दण्डपक्षः शकटः; विपर्यये मकरः; हस्त्यश्वरथैर्व्यतिकीर्णः शकटः पारिपतन्तकः। इति भोगव्यूहाः।**

**पक्षकक्षोरस्यानाम् एकीभावे मण्डलः। स सर्वतोमुखः सर्वतोभद्रः, अष्टानीको दुर्जयः। इति मण्डलव्यूहाः।**

---

इति तु त्रिष्वादर्शेषु पठ्यते। **व्यभिक्रान्तपक्ष** इति। कक्षादित्रिकाभिक्रान्तौ पक्षौ यस्य स तथाभूतः, चमूमुख तदाख्यः। **विपर्यय** इति। व्यभिक्रान्तोरस्यत्वे, व्यभिक्रान्तकक्षत्वे वा, झषास्यः तदाख्यः। **ऊर्ध्वराजिरिति**। उपरि परबलाभिमुखा राजिर्बलश्रेणी यस्य स तथाभूतः, दण्डः सूची तदाख्यः। **द्वौ दण्डौ वलय** इति। 'पक्षकक्षोरस्येषु तिर्यक्स्थितौ द्वौ दण्डौ यस्य स वलयाख्य' इति माधवः। **चत्वारो दुर्जय** इति। दण्डावित्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। पक्षकक्षोरस्येषु प्रत्येकं चत्वारो दण्डाः तिर्यग्दण्डाकारा बलश्रेण्यो यत्र भवेयुः स दुर्जयाख्य इत्यर्थः। **इति दण्डव्यूहा** इति। एवं दण्डप्रदरदृढकादयोऽष्टादशप्रकारा दण्डव्यूहा उक्ताः।

भोगव्यूहानाह — **पक्षकक्षोरस्यैरिति**। पक्षादिभिः, विषमं वर्तमान इति समं वर्तमानो हि उक्तः एवं तद्विपरीत इत्यर्थः, भोगः तदाख्यो व्यूहः सर्पकायकुटिलावस्थानत्वादित्यर्थः। **स** इति। भोगव्यूहः, सर्पसारी सर्पवदेकाकारः, गोमूत्रिका वा गोमूत्रवद् बहुधा विभिन्नाकारो वा, इति द्विधेति शेषः। **स** इति। भोगः, युग्मोरस्यः द्विधाविभक्तदण्डाकारमध्यः, दण्डपक्षः दण्डौ एकैकदण्डाकारौ पक्षौ यस्य स तथाभूतः, शकटः तदाख्यः। **विपर्यये मकर** इति। द्विधाविभक्तदण्डाकारपक्षः एकदण्डाकारोरस्यो मकराख्य इत्यर्थः। **हस्त्यश्वरथैरित्यादि**। शकटव्यूह एव हस्त्यश्वरथैः संकीर्णः पारिपतन्तकसंज्ञ इत्यर्थः। **इति भोगव्यूहा** इति। अनेन प्रकारेण सर्पसार्यादयः पञ्च व्यूहा उक्ताः।

मण्डलव्यूहं लक्षयति — **पक्षकक्षोरस्यानामिति**। तेषाम्, एकीभावे पूर्वोक्तानीकसन्धिरूपमन्तरालं विनान्योन्यमेलने, मण्डलः तदाख्यो व्यूहः। 'सरतां सर्वतो वृत्तिर्मण्डलः' इति पूर्वं लक्षितस्येदं स्वाभिमतं लक्षणम्। **स**

**पक्षकक्षोरस्यानाम् असंहतादसंहतः । स पञ्चानीकानामाकृतिस्थापनाद् वज्रो गोधा वा । चतुर्णामुद्यानकः काकपदी वा । त्रयाणामर्धचन्द्रिकः कर्कटकशृङ्गी वा । इत्यसंहतव्यूहाः ।**

**रथोरस्यो हस्तिकक्षोऽश्वपृष्ठोऽरिष्टः ।**

**पत्तयोऽश्वा रथा हस्तिनश्चानुपृष्ठमचलः ।**

**हस्तिनोऽश्वा रथाः पत्तयश्चानुपृष्ठमप्रतिहतः ।**

---

इति । मण्डलः, सर्वतोमुखः चतुर्दिक्षु प्रतिबलाभिमुखः, सर्वतोभद्रः सर्वतोभद्राख्यः । **अष्टानीको दुर्जय** इति । युग्मोरस्यश्चतुष्पक्षो द्विकक्षो मण्डलः दुर्जयसंज्ञः । **इति मण्डलव्यूहा** इति । बहुत्वाविवक्षया मण्डलव्यूहावित्यर्थः । अनुक्तोह्यत्वाभिप्रायं वा बहुत्वम् ।

'स्थितानां पृथगनीकवृत्तिरसंहत' इति पूर्वं लक्षितस्य स्वीयं लक्षणमाह — **पक्षकक्षोरस्यानामित्यादि** । पक्षादीनां पञ्चानां स्थाने परबलाभिमुखगमने चासंहतत्वादसंहताख्यो व्यूहः इत्यर्थः । असंहतः पक्षकक्षोरस्यानां पञ्चानामनीकानां वज्राद्याकारेण स्थापनाद् वज्राख्यो गोधाख्य इति द्विरूपो भवतीत्याह — **स पञ्चानीकानामित्यादि** । **चतुर्णामिति** । आकृतिस्थापनादिति वर्तते । चतुर्णां पक्षयोरुरस्यस्य प्रतिग्रहस्येत्येषाम्, आकृतिस्थापनाद्, उद्यानकः काकपदी वा । **त्रयाणामिति** । पक्षयोः प्रतिग्रहोरस्यान्यतरस्येत्येवं त्रयाणाम्, आकृतिस्थापनाद् , अर्धचन्द्रिकः, कर्कटकशृङ्गी वा । **इत्यसंहतव्यूहा** इति । एवं षट्प्रकाराः असंहतव्यूहाः ।

एवं दण्डभोगमण्डलासंहताख्यान् भेदानभिधाय व्यूहस्यान्यांस्त्रीन् भेदानाह — **रथोरस्य** इति । रथमध्यः, हस्तिकक्षः द्विपा अन्तःपार्श्वयोर्यस्य स तथा, अश्वपृष्ठः, अर्थात् पत्तिपक्षश्च, अरिष्टः रिष्टमशुभं न विद्यतेऽस्मिन्निति कृत्वा तदाख्यः ।

**पत्तय** इति । ते अर्थात् पक्षयोः, अश्वाः अर्थादुरस्ये, रथाः कक्षयोः, अनुपृष्ठं हस्तिनश्च, यस्मिन् भवन्ति स इति शेषः, अचलः तदाख्यः ।

**हस्तिन** इत्यादि । ते पक्षयोः, अश्वाः उरस्ये, रथाः कक्षयोः, पत्तयश्चानुपृष्ठं पृष्ठे पदातयश्च, यत्र भवन्ति स इति शेषः, अप्रतिहतः तदाख्यो व्यूहः । **इति दण्डभोगमण्डलासंहतव्यूहव्यूहनमुक्त्वा** प्रतिव्यूहस्थापनमभिधातुं सूत्रं —

**तेषां प्रदरं दृढकेन घातयेत्; दृढकमसह्येन; श्येनं चापेन; प्रतिष्ठं सुप्रतिष्ठेन; सञ्जयं विजयेन; स्थूलकर्णं विशालविजयेन; पारिपतन्तकं सर्वतोभद्रेण। दुर्जयेन सर्वान् प्रतिव्यूहेत।**

**पत्त्यश्वरथद्विपानां पूर्वं पूर्वमुत्तरेण घातयेत्। हीनाङ्गमधिकाङ्गेन चेति।**

**अङ्गदशकस्यैकः पतिः पदिकः; पदिकदशकस्यैकः सेनापतिः;**

---

**तस्य प्रतिव्यूहस्थापनमिति।** तस्य उक्तस्य बलव्यूहस्य प्रतिबलव्यूहस्थापनमभिधीयत इति सूत्रार्थः।

उक्तानां प्रदरादीनां व्यूहानां मध्ये कतमं कतमेन प्रतिव्यूहेन घातयेदित्याकाङ्क्षायामाह — **तेषां प्रदरमित्यादि।** दण्डव्यूहभेदतया मण्डलव्यूहभेदतया चोक्तो यो दुर्जयव्यूहः, स सर्वेषामपि व्यूहानां प्रतिघातक्षमः प्रतिव्यूहो भवतीत्याह — **दुर्जयेन सर्वान् प्रतिव्यूहेतेति।**

व्यूहानां प्रत्येकं प्रतिव्यूहनियममुक्त्वा सेनाङ्गानां पत्त्यादीनां प्रतिबलनियममाह — **पत्त्यश्वरथद्विपानामित्यादि।** पत्तिमश्वेन अश्वं रथेन रथं द्विपेन च घातयेदित्यर्थः। **हीनाङ्गमिति।** अवरसारपरिमाणम् अङ्गम्, अधिकाङ्गेन अधिकसारपरिमाणेनाङ्गेन, घातयेदित्यनुषज्यते। चकारो वाक्यार्थसमुच्चये। इतिशब्दः प्रतिबलनियमविधिसमाप्त्यर्थः।

सेनाङ्गानां विभागसंघातादिकर्मकर्तव्यत्वसूचकास्तदधिपतिना संकेताः कल्पनीया इति वक्ष्यति। तमेवाधिपतिं लक्षयंस्त्रिधा विभज्य दर्शयति — **अङ्गदशकस्येति।** इहाङ्गशब्देन प्रधानभूते रथहस्तिरूपे व्यूढे सेनाङ्गे गृह्येते, तेन रथदशकहस्तिदशकयोरित्यर्थः, एकः पतिः भर्ता, पदिकः तत्संज्ञः। ननु अस्मिन् प्रधानाङ्गदशकारब्धे व्यूहेऽन्ययोरप्यङ्गयोरश्वपत्तिरूपयोरवश्यम्भावात् तत्संख्याप्यभिधानीया। सत्यं, किन्तु अर्थसिद्धा सेति कृत्वा नोक्ता। अर्थसिद्धिश्चेत्थम् — एकैकस्य रथस्य हस्तिनो वा पुरोयायिनः पञ्च पादगोपाः पञ्चेत्याहत्य दशानामश्वानां योगाद् रथदशकेनाश्वशतकमाक्षिप्तं भवति। तथा एकैकस्याश्वस्य त्रयः पुरोयायिनः पुरुषास्त्रयः पादगोपा इत्याहत्य षण्णां पत्तीनां योगादश्वशतकेन पत्तीनां षट्शतमाक्षिप्तं भवतीति। एवञ्च रथानां हस्तिनां वा दशकस्याश्वशतकपत्तिषट्शताभ्यां युक्तस्य नेता पदिकसंज्ञ इत्युक्तं भवति। **पदिकदशकस्येति।** पदिकानां दशकस्य स्वस्वनेय-

तद्दशकस्यैको नायक इति । स तूर्यघोषध्वजपताकाभिः व्यूहाङ्गानां संज्ञाः स्थापयेद् अङ्गविभागे सङ्घाते स्थाने गमने व्यावर्तने प्रहरणे च ।

समे व्यूहे देशकालसारयोगात् सिद्धिः ॥

यन्त्रैरुपनिषद्योगैस्तीक्ष्णैर्व्यासक्तघातिभिः ।
मायाभिर्दैवसंयोगैः शकटैर्हस्तिभूषणैः ॥
दूष्यप्रकोपैर्गोयूथैः स्कन्धावारप्रदीपनैः ।
कोटीजघनघातैर्वा दूतव्यञ्जनभेदनैः ॥
दुर्गं दग्धं हृतं वा ते कोपः कुल्यः समुत्थितः ।
शत्रुराटविको वेति परस्योद्वेगमाचरेत् ॥

---

बलसहितस्य, एकः पतिः, सेनापतिः तत्संज्ञः । तद्दशकस्येति । सेनापतिदशकस्य, एकः पतिः, नायकः इति आख्यायत इति शेषः । स इत्यादि । नायकः, व्यूहाङ्गानां व्यूढहस्त्यादीनाम्, अङ्गविभागे संहतानामङ्गानां विभजने, संघाते विभक्तानां पिण्डीभावे, स्थाने गतिनिवृत्तौ, गमने गतिकरणे, व्यावर्तने अभियोधनात् प्रत्यावर्तने, प्रहरणे च अभियोधने च करणीये इति शेषः । तूर्यघोषध्वजपताकाभिः संज्ञाः स्थापयेत् तूर्यघोषविशेषैः ध्वजपताकाविशेषैश्च संकेतान् स्थापयेत् । ईदृशे तूर्यघोषे श्राविते विभागसंघातादिष्विदमिदं कर्तव्यम् ईदृशेषु ध्वजपताकासु प्रदर्शितास्विदमिदं कर्तव्यमिति संकेतान् कल्पयित्वानुतिष्ठेदित्यर्थः ।

समे व्यूह इति । दण्डादिव्यूहेषु स्वबलपरबलयोः समानेषु सत्सु, देशकालसारयोगात् देशः समविषमादिः कालः रात्र्यादियोधिनां रात्र्यादिः सारः शौर्यादिः एषां योगात्, सिद्धिः जयः, भवतीति शेषः ॥

श्लोकत्रयमेकान्वयमाह—यन्त्रैरित्यादि । यन्त्रैः जामदग्न्यादिभिः, उपनिषद्योगैः औपनिषदिके वक्ष्यमाणैर्विषधूमाम्बुदूषणादिभिरुपायैः, व्यासक्तघातिभिस्तीक्ष्णैः अन्यासक्तचित्तपुरुषहननशीलैस्तीक्ष्णसंज्ञितैर्गूढपुरुषैः, मायाभिः असदर्थप्रदर्शनीभिरिन्द्रजालविद्याभिः, दैवसंयोगैः राज्ञो दैवसाक्षात्कारख्यापनैः, हस्तिभूषणैः शकटैः हस्त्युचितवेषाच्छादनादिच्छन्नस्वरूपैरनोभिः, दूष्यप्रकोपैः शत्रुदूष्याणां कोपोत्पादनैः, गोयूथैः अग्रे गोवृन्दनिवेशनैः, स्कन्धावारप्रदीपनैः शिबिरसन्दीपनैः, कोटीजघनघातैर्वा कोट्योः पक्षयोः जघनयोः कक्षयोश्च घातैरकाण्डप्रहारदानैर्वा, दूतव्यञ्जनभेदनैः दूतवेषाणां चाराणामुपजापकरणैश्च, परस्योद्वेगमाचरेदित्यग्रिमेणान्वयः । शत्रोर्भयोत्पादनेनैव स्वार्थमन्विच्छेत् न स्वग-

**एकं हन्यान्न वा हन्यादिषुः क्षिप्ता धनुष्मता ।**
**प्राज्ञेन तु मतिः क्षिप्ता हन्याद् गर्भगतानपि ॥**

इति कौटलीयार्थशास्त्रे साङ्ग्रामिके दशमाधिकरणे षष्ठोऽध्यायः,
दण्डभोगमण्डलासंहतव्यूहव्यूहनं तस्य प्रतिव्यूहस्थापनं च ।
आदितश्चतुस्त्रिंशच्छततमः ॥

---

एतावता कौटलीयार्थशास्त्रस्य सांग्रामिकं
दशममधिकरणं समाप्तम् ॥

---

तिकगतिभूतेन सन्दिग्धजयेन युद्धेनेत्यर्थः । भूयोऽप्युद्वेगहेतूनाह—**दुर्गमिति** । दग्धं हृतमित्यादौ इतिशब्दः प्रत्येकं सम्बध्यते । दुर्गं दग्धमिति तव दुर्गदाहो जात इत्यनेन हेतुना वा, हृतमिति वा तव दुर्गं स्वायत्तीकृतमित्यनेन वा, ते कुल्यः कोप इति वा त्वत्कुलभवपुरुषनिमित्तो जनपददाहाद्यनर्थरूपः कोप उत्पन्न इत्यनेन वा, ते शत्रुः सामन्तः, समुत्थित इत्यनेन वा, ते आटविकः समुत्थित इत्यनेन वा, परस्योद्वेगम् आचरेत् ॥

युद्धान्मन्त्रो बलवत्तरः कार्यसिद्धावित्याह—**एकमित्यादि** । धानुष्केण बाणः प्रयुक्तः परं हन्यान्न वेति संशयः, हत्वापि वा एकमेव हन्यान्न ततोऽधिकम् । प्रज्ञावता तु केवला मतिरात्मनः प्रयुक्ता परं हन्यादेव, हती च नैकं परं किन्तु तदीयान् गर्भस्थानपि जनान् हन्तीत्यहो मतेरिष्वपेक्षया शक्त्यतिशयवत्त्वेत्यर्थः । अत एवाहुः—

"युद्धं सर्वात्मना त्याज्यं राज्यकामेन धीमता ।
उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ॥" इति ॥

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
**साङ्ग्रामिकाधिकरणं** दशमं समपूर्यत ॥

इति श्री**वञ्चिमण्डल**महाराजाश्रितस्य **ताम्रपर्णी**तीरवर्ति**तरुवाग्रहारा**भिजनस्य श्री**सीताम्बा**श्री**रामसुब्रह्मण्या**र्यसूनोर्महामहोपाध्याय**गणपतिशास्त्रिणः** कृतिषु **कौटलीयार्थशास्त्रव्याख्यायां** सांग्रामिके दशमेऽधिकरणे षष्ठोऽध्यायः, दण्डभोगमण्डलासंहतव्यूहव्यूहनं तस्य प्रतिव्यूहस्थापनम्, आदितश्चतुस्त्रिंशच्छततमः ॥

**सांग्रामिकं दशममधिकरणं समाप्तम्**

---

# संघवृत्तम् — एकादशमधिकरणम् ।

१६०,१६१. प्रक. भेदोपादानानि, उपांशुदण्डश्च ।

**सङ्घलाभो दण्डमित्रलाभानामुत्तमः । सङ्घा हि संहतत्वादधृष्याः परेषाम् ।ताननुगुणान् भुञ्जीत सामदानाभ्याम् । विगुणान् भेददण्डाभ्याम् ।**

**काम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः । लिच्छिविकव्रजिकमल्लकमद्रककुकुरकुरुपाञ्चालादयो राजशब्दोपजीविनः ।**

---

अथ सङ्घवृत्तं नामैकादशमधिकरणमारभ्यते । विजिगीषुभूमौ तदनन्तरभूमौ वा वास्तव्यानां प्रत्येकक्षुद्रत्वेऽपि संघीभावासादितशक्तीनां वार्ताशस्त्रोपजीविनामभटानामेव स्वायत्तीकरणोपाया अस्मिन्नधिकरणे सूत्रद्वयेनाभिधीयन्ते । तत्र प्रथमं

भेदोपादानानीति सूत्रम् । भेदानां संघविश्लेषोपायानाम् उपादानानि प्रयोगा उच्यन्त इति सूत्रार्थः ।

**संघलाभ इत्यादि** । संघस्य यथोक्तरूपस्य मुख्याधिष्ठितस्य लाभः सहायत्वेन प्राप्तिः, दण्डमित्रलाभानाम् उत्तमः दण्डमित्रोभयलाभा ये बहुरूपास्तेषां मध्ये प्रशस्तः, सैन्यत्वेन मित्रत्वेन चोपयोक्तुं योग्यत्वादित्यभिप्रायः । अस्त्वेवं संघलाभो दण्डमित्रोभयलाभप्रकारः कश्चित्, तस्य कथं तदुत्तमत्वं तत्राह—**संघा हीति** । ते हि, संहतत्वात् संघातासादितशक्तित्वात्, अधृष्याः परेषां शत्रूणामजय्याः । यद्यपि भृतादिभटानामपि संहतत्वमस्ति, तथापि तद् अन्यकारितं, संघस्य तु तत् स्वोत्साहकारितमित्यन्यापेक्षया शक्तिमत्तरमिति भावः । **तानिति** । संघान्, अनुगुणान् अविरुद्धान्, सामदानाभ्यां भुञ्जीत स्वायत्तीकुर्यात् । विगुणान् प्रतिकूलान्, भेददण्डाभ्यां, भुञ्जीतेति संबध्यते ।

के ते संघिन इत्याह—**काम्बोजेत्यादि** । काम्बोजेषु सुराष्ट्रेषु च जनपदविशेषयोर्याः क्षत्रियश्रेण्यस्तदादयः आदिग्रहणाद् वैश्यादिश्रेण्योऽपि गृह्यन्ते, तदन्तर्गता जना इत्यर्थः, वार्ताशस्त्रोपजीविनः । **लिच्छिविकेत्यादि** । लिच्छिविकादिदेशसप्तकवास्तव्या आदिपदादन्धकवृष्ण्यादयश्च, राजशब्दोपजीविनः राजनाममात्रं वहन्तः संघमुपजीवन्तीत्यर्थः ।

सर्वेषामासन्नाः सत्रिणः सङ्घानां परस्परन्यङ्गद्वेषवैरकलहस्थानान्युपलभ्य क्रमाभिनीतं भेदमुपचारयेयुः—'असौ त्वा विजल्पति' इति । एवमुभयतः । बद्धरोषाणां विद्याशिल्पद्यूतवैहारिकेष्वाचार्यव्यञ्जना बालकलहानुत्पादयेयुः । वेशशौण्डिकेषु वा प्रतिलोमप्रशंसाभिः सङ्घमुख्यमनुष्याणां तीक्ष्णाः कलहानुत्पादयेयुः; कृत्यपक्षोपग्रहेण वा ।

कुमारकान् विशिष्टच्छन्दिकया हीनच्छन्दिकानुत्साहयेयुः ।

---

सर्वेषामिति । उक्तानां वार्ताशस्त्रोपजीविनां राजशब्दोपजीविनां चेत्युभयविधानां, सङ्घानाम्, आसन्नाः केनापि निमित्तेनान्तिकं प्राप्ता भूत्वा, सत्रिणः, परस्परन्यङ्गद्वेषवैरकलहस्थानानि परस्परस्य न्यङ्गं दोषवचनं द्वेषो वाक्पारुष्यादिकृतो रोषः वैरम् अपकारादिनिमित्तं द्रोहचिन्तनं कलहस्थानं परप्रार्थितैकामिषप्रार्थित्वादि एतानि, उपलभ्य छिद्रभूतान्याश्रित्य, क्रमाभिनीतं क्रमेणाभिमुखतां नीतं सञ्जिनं, भेदं विश्लेषम्, उपचारयेयुः प्रापयेयुः । कथमिति, असौ त्वा त्वां, विजल्पति अपवदति, इति उक्त्वेति शेषः । एवमुभयत इति । अनेन प्रकारेण भेद्यावुभावपि भेदमुपचारयेयुरित्यर्थः । बद्धरोषाणामिति । अन्योन्यरूढामर्षाणां सङ्घिनां, विद्याशिल्पद्यूतवैहारिकेषु विद्या आन्वीक्षिक्यादिः शिल्पम् अस्त्रशिक्षादि द्यूतं प्रसिद्धं वैहारिकं प्रक्रीडनादि एतेषु विषये, आचार्यव्यञ्जनाः आचार्यवेषाः सत्रिणः, बालकलहान् बालानां पुत्राणामध्याप्यमानानां कलहान्, उत्पादयेयुः 'असौ त्वामज्ञमाचष्ट' इत्यादिभिर्भेदवचनैरित्यभिप्रायः । वेशशौण्डिकेषु वेति । वेशशब्द इह वेश्यावृत्तिः, वेश्यासु सुराविक्रयिषु च प्रसक्तानामिति शेषः, सङ्घमुख्यमनुष्याणां संघेषु ये मुख्यपुरुषास्तेषां, प्रतिलोमप्रशंसाभिः प्रतीपश्लाघाभिः अर्थात् स्वप्रेरितवेश्याशौण्डिककृताभिः, तीक्ष्णाः, कलहान् परस्परयाकलहान्, उत्पादयेयुः । कृत्यपक्षोपग्रहेण वेति । संघमुख्यमनुष्याणां ये कृत्याः क्रुद्धलुब्धभीतावमानिताः तेषामुपग्रहेण स्वानुकूलीकरणेन वा, कलहान् उत्पादयेयुः ।

कुमारकानिति । हीनच्छन्दिकान् इष्टभोग्यवृत्तिश्छन्दिका सा हीना अल्पा प्रभूतवृत्त्यपेक्षया येषां तांस्तथाभूतान्, कुमारकान् संघेषु मुख्येभ्यः किञ्चिदवरा राजपुत्रकल्पाः कुमारकाः तान्, विशिष्टच्छन्दिकया विशिष्टया उत्कृष्टया छन्दिकया तत्तुल्येन कुमारान्तरेणानुभूयमानया, उत्साहयेयुः अमर्ष-

**विशिष्टानां चैकपात्रं विवाहं हीनेभ्यो वारयेयुः । हीनान् वा विशिष्टैरेकपात्रे विवाहे वा योजयेयुः । अवहीनान् वा तुल्यभावोपगमने कुलतः पौरुषतः स्थानविपर्यासतो वा । व्यवहारमवस्थितं वा प्रतिलोमस्थापनेन निशामयेयुः । विवादपदेषु वा द्रव्यपशुमनुष्याभिघातेन रात्रौ तीक्ष्णाः कलहानुत्पादयेयुः । सर्वेषु च कलहस्थानेषु हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य प्रतिपक्षवधे योजयेत्, भिन्नानपवाहयेद् वा । एकदेशे समस्तान् वा निवेश्य भूमौ चैषां पञ्चकुलीं दशकुलीं वा कृष्यां निवेशयेत् । एकस्था हि शस्त्रग्रहणसमर्थाः स्युः । समवाये चैषामत्ययं स्थापयेत् ।**

---

वतः कुर्युः, 'समाने कुमारत्वे त्वं हीनवृत्तिरन्यो विशिष्टवृत्तिरि'त्याद्युक्त्वेति भावः ।

**विशिष्टानां** चेति । उत्कृष्टानाम्, एकपात्रम् एकपङ्क्तिभोजनं, विवाहं कन्यादानादानसंबन्धं, हीनेभ्यः वारयेयुः । वारणे ह्युभयेषां विरोधः स्यादिति भावः । भेदप्रकारान्तरमाह— **हीनान्** वेति । निकृष्टान्, विशिष्टैः सह, एकपात्रे विवाहे वा, योजयेयुः निर्बन्धवतः कुर्युरित्यर्थः । तथाकरणे हि विशिष्टास्तन्मतमननुवर्तमानास्तेभ्यो भिन्नाः स्युरित्यभिप्रायः । कुलेन पौरुषेण स्थानभेदेन वा हीनान् विशिष्टतुल्यत्वाङ्गीकारणायां निर्बन्धवतः कुर्युरित्याह— **अवहीनान्** वेत्यादि । **व्यवहारमवस्थितमि**त्यादि । सङ्घेषु यं कमपि व्यवहारमुत्पन्नं तन्मुख्यकृतनिर्णयमित्यर्थः, प्रतिलोमस्थापनेन निर्णयविपरीतन्यायसमर्थनेन, निशामयेयुः बोधयेयुः अर्थाद् व्यवहर्तारम् । **विवादपदेषु** वेति । तीक्ष्णाः, रात्रौ, द्रव्यपशुमनुष्याभिघातेन संघिसंबन्धिनां द्रव्यादीनामभिघातेन स्वयंकृतेन सङ्घिपरस्परकृततया मिथ्याख्यापितेनेत्यर्थः, विवादपदेषु, कलहान् साहसादिविवादपदप्रयोजकान् परस्परकलहान्, उत्पादयेयुः । ईदृशेषु सर्वप्रकारेषु कलहस्थानेषु राजा हीनपक्षं हिरण्यादिदानेन दण्डेन च स्वपक्षे प्रवेश्य प्रतिपक्षवधे प्रेरयेद्, भिन्नान् संघादन्यत्र नयेद् वेत्याह — **सर्वेषु** चेत्यादि । ये भिन्नास्तान् सर्वान् वा एकस्मिन् देशे निवेश्य एषां भूमौ कुलपञ्चकं कुलदशकं वा कृषिकर्मणि नियोजयेदित्याह — **एकदेश** इत्यादि । समस्तानामेकस्थानस्थितेः फलमाह — **एकस्था** हीत्यादि । अविप्रकीर्णा हि शस्त्रग्रहणकाले लघुसमुत्थाः स्युरिति भावः । **समवाये चैषामि**ति । अपवाहितनिवेशितानां सङ्घिनां संघीभावे, अत्ययं दण्डं, स्थापयेत् ।

**राजशब्दिभिरवरुद्धमवक्षिप्तं वा कुल्यमभिजातं राजपुत्रत्वे स्थापयेत् । कार्तान्तिकादिश्चास्य वर्गो राजलक्षण्यतां सङ्घेषु प्रकाशयेत् । सङ्घमुख्यांश्च धर्मिष्ठानुपजपेत्—'स्वधर्मममुष्य राज्ञः पुत्रे भ्रातरि वा प्रतिपद्यध्वम्' इति । प्रतिपन्नेषु कृत्यपक्षोपग्रहार्थमर्थं दण्डं च प्रेषयेत् । विक्रमकाले शौण्डिकव्यञ्जनाः पुत्रदारप्रेतापदेशेन 'नैषेचनिकम्' इति मदनरसयुक्तान् मद्यकुम्भान् शतशः प्रयच्छेयुः ।**

**चैत्यदैवतद्वाररक्षास्थानेषु च सत्रिणः समयकर्मनिक्षेपं सहिरण्याभिज्ञानमुद्राणि हिरण्यभाजनानि च प्ररूपयेयुः; दृश्यमानेषु च सङ्घेषु 'राजकीयाः' इत्यावेदयेयुः । अथावस्कन्दं दद्यात् ।**

राजशब्दोपजीविनां सङ्घविश्लेषणोपायमाह—**राजशब्दिभिरिति** । राजनामधारकैर्लिच्छिविकादिभिः, अवरुद्धम्, अवक्षिप्तं वा परिभूतं वा, कुल्यं कुलोत्पन्नम्, अभिजातं गुणवन्तं, राजपुत्रत्वे स्थापयेत् 'असौ राजपुत्र' इति कल्पयेत् । कार्तान्तिकादिश्च दैवज्ञसामुद्रिकादिश्च, वर्गः, अस्य राजपुत्रत्वे स्थापितस्य, राजलक्षण्यतां राजलक्षणयुक्तत्वं, सङ्घेषु राजशब्दाद्यधिष्ठितेषु, प्रकाशयेत् । सङ्घमुख्यांश्च धर्मिष्ठान्, उपजपेत्, कथमिति, अमुष्य राज्ञः पुत्रे भ्रातरि वा राजशब्दाद्यवरुद्धे विषये, स्वधर्मम् अवरोधादिक्लेशनिवारणलक्षणं, प्रतिपद्यध्वं स्वीकुरुध्वम्, इति अनेन प्रकारेण । प्रतिपन्नेषु अभ्युपेतोपजापेषु सङ्घमुख्येषु, कृत्यपक्षोपग्रहार्थं कृत्यानां क्रुद्धलुब्धभीतादीनां स्वपक्षेऽनुप्रवेशनार्थम्, अर्थं द्रव्यं, दण्डं च सैन्यं च, प्रेषयेत् । अनेनोपायेन राजशब्दिनः सङ्घेभ्यो भिन्ना भवेयुरित्यभिप्रायः । **विक्रमकाल** इति । विक्रमावसरे प्राप्ते, शौण्डिकव्यञ्जनाः सौरिकवेषाः सत्रिणः, पुत्रदारप्रेतापदेशेन पुत्राणां दाराणां च स्वीयानां मरणं निमित्तं कल्पयित्वेत्यर्थः, नैषेचनिकमिति मृतोद्देशेन देयमिदं मद्यं नैषेचनिकाख्यमिति, वदन्त इति शेषः, मदनरसयुक्तान् मदकरविषयुक्तान्, मद्यकुम्भान्, शतशः, प्रयच्छेयुर्दद्युः, अर्थात् सङ्घेभ्यः ।

उपायान्तरमाह—**चैत्यदैवतद्वाररक्षास्थानेषु** चेति । देवालयदैवतद्वारेषु रक्षास्थानेषु च, सत्रिणः, समयकर्मनिक्षेपं सङ्घपतिना सह संवित्करणार्थं निक्षेपद्रव्यं, सहिरण्याभिज्ञानमुद्राणि हिरण्यैरभिज्ञानमुद्रया च सहितानि, हिरण्यभाजनानि च, प्ररूपयेयुः सङ्घा यथा जानीयुस्तथा प्रकाशयेयुः । दृश्यमानेषु, सङ्घेषु, कस्यैते हिरण्यभारा इति साक्षात् पृच्छत्स्विति

**सङ्घानां वा वाहनहिरण्ये कालिके गृहीत्वा सङ्घमुख्याय प्रख्यातं द्रव्यं प्रयच्छेत् । तदेषां याचिते 'दत्तममुष्मै मुख्याय' इति ब्रूयात् ।**

**एतेन स्कन्धावाराटवीभेदो व्याख्यातः ।**

**सङ्घमुख्यपुत्रमात्मसम्भावितं वा सत्री ग्राहयेत् — 'अमुष्य राज्ञः पुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसि' इति; प्रतिपन्नं राजा कोशदण्डाभ्याम् उपगृह्य सङ्घेषु विक्रमयेत्; अवाप्तार्थस्तमपि प्रवासयेत् ।**

**वन्धकीपोषकाः प्लवकनटनर्तकसौभिका वा प्रणिहिताः स्त्रीभिः**

---

शेषः, राजकीया इति आवेदयेयुः कथयेयुः तत्त्वगोपनाभिनयार्थमिति भावः । इह 'राजकीया' इत्यस्य स्थाने 'विक्रीताः' इति पाठो दृश्यते । स तु न हृद्यः । अथ एवं भेदसंविधानानन्तरम्, अवस्कन्दं दद्यात् सङ्घस्य बलाक्रमणं कुर्यात् ।

अन्यं भेदोपायमाह — **संघानां वेति** । तेषां, वाहनहिरण्ये वाहनं हिरण्यं च, कालिके गृहीत्वा नियतकालप्रतिदेयमृणं कालिकं तत्त्वेनादाय, सङ्घमुख्याय, द्रव्यं कालप्रत्यर्पणीयं हिरण्यादि, प्रख्यातं प्रयच्छेत् बहुजनसमक्षं प्रत्यर्पयेत् । तदिति । तद् द्रव्यम्, एषां सङ्घानां, याचिते प्रत्यर्पयेति सङ्घैर्याच्ञायां कृतायामित्यर्थः, 'दत्तममुष्मै मुख्याय' इति ब्रूयात् । तेन हि मुख्यसङ्घयोर्भेदो भवेदिति भावः ।

य एष राजशब्दद्याविभेदने उपायविधिरुक्तः, तमेव स्कन्धावारप्रविष्टाटविकभेदनेऽप्यतिदिशति — **एतेनेत्यादि** ।

**उपांशुदण्ड** इति सूत्रम् । रहोवध उच्यत इति सूत्रार्थः ।

**सङ्घमुख्यपुत्रमिति** । तम्, आत्मसम्भावितम् 'अहं महानि'त्यहङ्कारवन्तं, सत्री, ग्राहयेत् बोधयेत् । कथमिति, अमुष्य राज्ञः विजिगीषोः, पुत्रः त्वं, शत्रुभयाद्, इह सङ्घे, न्यस्तः असि इति । **प्रतिपन्नमिति** । अभ्युपगतोपजापं तं, राजा कोशदण्डाभ्याम् आत्मदत्ताभ्याम्, उपगृह्य ससहायं कृत्वा, सङ्घेषु विक्रमयेत् । **अवाप्तार्थ** इत्यादि । सङ्घमुख्यपुत्रविक्रमणेन सङ्घनिग्रहरूपे स्वार्थे सिद्धे तमपि हन्यादित्यर्थः ।

प्रकारान्तरमाह — **बन्धकीपोषका इति** । कुलटापोषकाः, प्लवका-

परमरूपयौवनाभिः संघमुख्यानुन्मादयेयुः । जातकामानामन्यतमस्य प्रत्ययं कृत्वान्यत्र गमनेन प्रसभहरणेन वा कलहानुत्पादयेयुः । कलहे तीक्ष्णाः कर्म कुर्युः—'हतोऽयमित्थं कामुकः' इति ।

विसंवादितं वा मर्षयमाणमभिसृत्य स्त्री ब्रूयात्—'असौ मां मुख्यस्त्वयि जातकामां बाधते; तस्मिन् जीवति नेह स्थास्यामि' इति घातमस्य प्रयोजयेत् ।

प्रसह्यापहृता वा वनान्ते क्रीडागृहे वापहर्तारं रात्रौ तीक्ष्णेन घातयेत् । स्वयं वा रसेन । ततः प्रकाशयेद्—'अमुना मे प्रियो हतः' इति ।

जातकामं वा सिद्धव्यञ्जनः सांवननिकीभिरोषधीभिः संवास्य

---

दयो वा व्याख्यातचराः, प्रणिहिता गूढपुरुषकर्मणि व्यापारिताः, स्त्रीभिः, परमरूपयौवनाभिः, सङ्घमुख्यान्, उन्मादयेयुः मोहयेयुः । जातकामानामिति । तथाभूतानां सङ्घमुख्यानाम्, अन्यतमस्य, प्रत्ययं कृत्वा तत्कामितस्त्रीसमागमसङ्केतविश्वासं जनयित्वा, अन्यत्र ततोऽपरस्मिन् सङ्घमुख्ये, गमनेन, प्रसभहरणेन वा अर्थात् 'त्वदभिसरणप्रस्थितामसावन्यः सङ्घमुख्यो बलादपहृतवानि'ति मिथ्याकल्पितेन, कलहान् उत्पादयेयुः । कलह इत्यादि । सङ्घमुख्यमिथःकलहे प्रवृत्ते, तीक्ष्णाः, कर्म सङ्घमुख्यरहोवधलक्षणं, कुर्युः, स्वयं हत्वा च 'कामुकोऽयं प्रतिकामुकेनैवं हत' इति ख्यापयेयुरित्यर्थः ।

विसंवादमसहमाने सङ्घमुख्ये विधिरेष उक्तः । सहमाने विधिमाह—विसंवादितं वा मर्षयमाणमित्यादि । अभिसृत्य स्वयमुपगम्य । मुख्यः सङ्घमुख्यः । बाधते वारयति । इह त्वदन्तिके । इति, उक्त्वेति शेषः ।

प्रकारान्तरमाह—प्रसह्यापहृता वेति । एकेन कृतसङ्केता तदन्येन बलादपहृता वा, वनान्ते वनसमीपे, क्रीडागृहे वा सङ्केतस्थानभूते, अपहर्तारं, रात्रौ गूढमित्यर्थः, तीक्ष्णेन घातयेत् । स्वयं वा रसेन पानादौ विषमिश्रणेन घातयेत् । ततः घातानन्तरं, प्रकाशयेत् प्रख्यापयेत्, कथमिति, अमुना प्रतिकामुकेन, मे प्रियो हत इति ।

जातकामं वेति । स्त्रियामुत्पन्नोत्कण्ठं, सिद्धव्यञ्जनः सिद्धवेषः सत्री,

**रसेनातिसन्धायापगच्छेत् । तस्मिन्नपक्रान्ते सत्रिणः परप्रयोगमभिशंसेयुः ।**

**आढ्यविधवा गूढाजीवा योगास्त्रियो वा दायनिक्षेपार्थं विवदमानाः सङ्घमुख्यानुन्मादयेयुः इति । अदितिकौशिकस्त्रियो नर्तकीगायना वा । प्रतिपन्नान् गूढवेश्मसु रात्रिसमागमप्रविष्टांस्तीक्ष्णा हन्युर्बद्ध्वा हरेयुर्वा ।**

**सत्री वा स्त्रीलोलुपं सङ्घमुख्यं प्ररूपयेत्—'अमुष्मिन् ग्रामे दरिद्रकुलमपसृतं; तस्य स्त्री राजार्हा, गृहाणैनाम्' इति । गृहीतायामर्धमासान्तरं सिद्धव्यञ्जनो दूष्यः सङ्घमुख्यमध्ये प्रक्रोशत्—'असौ**

---

सांवननिकीभिः वशीकरणप्रयोजनाभिः, ओषधीभिः, संवास्य, रसेन विषेण मिश्रिताभिरोषधीभिरित्यर्थः, अतिसन्धाय हत्वा, अपगच्छेत् । तस्मिन् सिद्धव्यञ्जने, अपक्रान्ते हत्वापगते सति, सत्रिणः, परप्रयोगम् अभिशंसेयुः प्रतिकामुकप्रेरितः स सिद्ध इति प्रख्यापयेयुः ।

प्रकारान्तरमाह— **आढ्यविधवा** इति । ताः, गूढाजीवाः सधवा अपि दारिद्र्यवशाद् व्यभिचारेण या जीवन्ति ताः, योगास्त्रियो वा कपटस्त्रियो वा स्त्रीवेषा. पुरुषा वेत्यर्थः, दायनिक्षेपार्थं दायार्थं निक्षेपार्थं च, विवदमानाः, सङ्घमुख्यान् उन्मादयेयुः विवादनिर्णयापदेशेन सङ्घमुख्यानुपगम्य व्यामोहयेयुरित्यर्थः । **अदितिकौशिकास्त्रिय** इति । अदितयो नानादेवालेख्यप्रदर्शनवृत्तयः स्त्रियः कौशिकास्त्रियः व्यालग्राहिस्त्रियश्च, नर्तकीगायना वा, सङ्घमुख्यान् उन्मादयेयुः । **प्रतिपन्नानिति** । अभ्युपेतसमागमसङ्केतान् सङ्घमुख्यान्, गूढवेश्मसु, रात्रिसमागमप्रविष्टान् रात्रौ स्त्रीसमागमार्थं प्रविष्टान्, प्रविष्टा इति पाठे तीक्ष्णविशेषणं व्याख्येयम् । तीक्ष्णाः, हन्युः, बद्ध्वा हरेयुर्वा ।

प्रकारान्तरमाह—**सत्री वेति** । सः, स्त्रीलोलुपं स्त्रीचपलं, संघमुख्यं, प्ररूपयेत् आवेदयेत्, कथमिति, अमुष्मिन् ग्रामे, दरिद्रकुलम्, अपसृतं वृत्त्यर्थमन्यदेशं गतम् । तस्य कुलप्रधानस्य, स्त्री, राजार्हा रूपादिना राजोपभोगयोग्या, एनां गृहाण भार्यात्वेन स्वीकुरुष्व इति । **गृहीतायामिति** । तथा तस्यां स्वीकृतायाम्, अर्धमासान्तरम् अर्धमासः अन्तरं व्यवधानकालो यस्मिन् कर्मणि तद् यथा भवति तथा, सिद्धव्यञ्जनः, दूष्यः राजावग्रहचारी, संघमुख्यमध्ये संघमुख्यानां मध्ये, प्रक्रोशेत् आक्रन्देत्, कथमुक्त्वा, असौ संघ-

मे मुख्यां भार्यां स्नुषां भगिनीं दुहितरं वाधिचरति' इति। तं चेत् सङ्घो निगृह्णीयात्, राजैनमुपगृह्य विगुणेषु विक्रमयेत्। अनिगृहीते सिद्धव्यञ्जनं हि रात्रौ तीक्ष्णाः प्रवासयेयुः। ततस्तद्व्यञ्जनाः प्रक्रोशेयुः—'असौ ब्रह्महा ब्राह्मणीजारश्च' इति।

कार्तान्तिकव्यञ्जनो वा कन्यामन्येन वृतामन्यस्य प्ररूपयेत्—'अमुष्य कन्या राजपत्नी राजप्रसविनी च भविष्यति; सर्वस्वेन प्रसह्य वैनां लभस्व' इति। अलभ्यमानायां परपक्षमुद्धर्षयेत्। लब्धायां सिद्धः कलहः।

भिक्षुकी वा प्रियभार्यं मुख्यं ब्रूयात्—'असौ ते मुख्यो यौवनोत्सिक्तो भार्यायां मां प्राहिणोत्; तस्याहं भयाल्लेख्यमाभरणं

मुख्यविशेषः, मे मुख्यां भार्यां, स्नुषा पुत्रभार्यां, भगिनीं, दुहितरं वा, अधिचरति बलात् स्वीकृत्योपभुङ्क्ते इत्युक्त्वा। तमिति। तमधिचरन्तं निवेदितं मुख्यं, संघः, निगृह्णीयाच्चेद्, राजा, एनं निगृह्यमाणं संघमुख्यम्, उपगृह्य स्वपक्षेऽनुप्रवेश्य, विगुणेषु स्वप्रतिकूलेषु, विक्रमयेद् उद्योजयेद्। अनिगृहीत इति। तस्मिन् संघमुख्ये संघेनाकृतनिग्रहे सति, सिद्धव्यञ्जनं सिद्धवेषं प्रक्रोष्टारं तं दूष्यं, रात्रौ तीक्ष्णाः, प्रवासयेयुः हन्युः। तत इति। अनन्तरं, तद्व्यञ्जनाः सिद्धव्यञ्जनाः प्रक्रोशेयुः, कथमिति, असौ, अनिगृहीतः संघमुख्यः, ब्रह्महा सिद्धब्राह्मणस्य हन्ता, ब्राह्मणीजारश्च सिद्धब्राह्मणभार्याजारश्च, इति।

पक्षान्तरमाह—कार्तान्तिकव्यञ्जनो वेति। दैवज्ञवेषो वा, कन्याम्, अन्येन संघमुख्येष्वन्यतमेन, वृताम्, अन्यस्य, प्ररूपयेद् बोधयेत्, कथमिति, अमुष्य कन्या अन्येन वृता, राजपत्नी राजप्रसविनी च भविष्यति यमियं पतित्वेन वरयति यं च प्रसूते तावुभौ राजभावं प्राप्स्यतः। सर्वस्वेन सर्वस्वदानेन, प्रसह्य वा बलात्कारेण वा, एनां लभस्व स्वायत्तीकुरुष्व, इति। अलभ्यमानायामिति। एवं बोधितेन संघमुख्येन कृतयत्नेन तस्यामनासाद्यमानायां सत्यां, परपक्ष परस्य पूर्ववरयितुः पक्षम्, उद्धर्षयेत् उत्साहयेद् उत्तरकालकन्यायाचित्रा भग्नाशेन सह विरोधयेत्। लब्धायां सत्यां, सिद्धः कलहः, अर्थात् तत्पूर्ववरयितुः सङ्घमुख्यस्य पश्चात् तत्सकाशात् तां लब्धवतश्च।

प्रकारान्तरमाह—भिक्षुकी वेति। सा वा, प्रियभार्यं, मुख्यं संघ-

**गृहीत्वागतास्मि; निर्दोषा ते भार्या; गूढमस्मिन् प्रतिकर्तव्यम् । अहमपि तावत् प्रतिपत्स्यामि' इति । एवमादिषु कलहस्थानेषु स्वयमुत्पन्ने वा कलहे तीक्ष्णैरुत्पादिते वा हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य विगुणेषु विक्रमयेदपवाहयेद् वा ।**

**सङ्घेष्वेवमेकराजो वर्तेत । सङ्घाश्चाप्येवमेकराजादेतेभ्योऽतिसन्धानेभ्यो रक्षयेयुः ॥**

**सङ्घमुख्यश्च सङ्घेषु न्याय्यवृत्तिहितः प्रियः ।**
**दान्तो युक्तजनस्तिष्ठेत् सर्वचित्तानुवर्तकः ॥**

इति कौटलीयार्थशास्त्रे सङ्घवृत्ते एकादशाधिकरणे
प्रथमोऽध्यायः भेदोपादानानि उपांशुदण्डश्च,
आदितः पञ्चत्रिंशच्छततमः ।
एतावता कौटलीयस्यार्थशास्त्रस्य सङ्घवृत्तमेकादशमधिकरणं समाप्तम् ॥

---

मुख्यं, ब्रूयात्, कथमिति, असौ मुख्यः, यौवनोत्सिक्तः यौवनदृप्तः, ते भार्यायां मां प्राहिणोत् त्वद्भार्यासमागमघटनार्थं मां दूतीं प्रेषितवान् । अहं भयात् तस्य लेख्यं कामलेखम्, आभरणं कामप्राभृतरूपं भूषणं च, गृहीत्वा, आगता, अस्मि । निर्दोषा ते भार्या । गूढम्, अस्मिन् प्रतिकर्तव्यम् अयं हन्तव्यः । अहमपि, तावत् एतद्धननावधिकं कालं, प्रतिपत्स्यामि त्वदन्तिकावस्थानलक्षणां प्रतिपत्तिमास्थास्ये, इति । तद्भोऽकरणमनित्यत्वात् । **एवमादिष्विति** । एवञ्जातीयेषु कलहस्थानेषु कलहकारणेषु, स्वयं गूढपुरुषोपजापं विनैव, उत्पन्ने वा, तीक्ष्णैरुत्पादिते वा, कलहे, हीनपक्षं, राजा, कोशदण्डाभ्यां धनेन सैन्येन च, उपगृह्य स्वीकृत्य, विगुणेषु स्वप्रतिकूलेषु, विक्रमयेद् उद्योजयेत् । अपवाहयेद् वा विक्रमणाशक्तौ स्वविषयान्निर्वासयेद् वा ।

**संघेष्विति** । तेषु विषये, एवम् उक्तेन प्रकारेण, एकराजः एको राजा, वर्तेत चेष्टेत । एवं वर्तमाने राज्ञि सङ्घानां वृत्तिमाह— **संघाश्चापी**त्यादि । तेऽपि एवं चेष्टमानान्नृपालात् तदुत्पादितेभ्यो वञ्चनेभ्य आत्मानं रक्षेयुरित्यर्थः । तदेवं संघेषु राज्ञो राज्ञि च संघानां वृत्तिरुक्ता ॥

अथ संघमुख्यस्य संघेषु वृत्तिमाह— **संघमुख्यश्चेति** । स च, **संघेषु विषये,** न्यायवृत्तिहितः न्याययुक्तया वृत्त्या हितकारी, प्रियः इष्टानुष्ठायी,

दान्तः अनुद्धतः, युक्तजनः युक्ता आत्मना समवेताः स्वचित्तानुवर्तिनो जना यस्य स तथाभूतः, सर्वचित्तानुवर्तकः सर्वसंधिमतानुवर्ती, तिष्ठेत् ॥

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
सङ्घवृत्ताधिकरणमेकादशमपूर्यत ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहाराभिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्यायगणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां श्रीमूलाख्यायां सङ्घवृत्ते एकादशेऽधिकरणे प्रथमोऽध्यायः, भेदोपादानानि उपांशुदण्डश्च । आदितः पञ्चत्रिंशच्छततमः ।

सङ्घवृत्तमेकादशमधिकरणं समाप्तम् ॥

---

# आबलीयसं—द्वादशमधिकरणम् ।

१६२. प्रक. दूतकर्माणि ।

'बलीयसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्मा तिष्ठेत् । इन्द्रस्य हि स प्रणमति, यो बलीयसो नमति' इति भारद्वाजः ।

'सर्वसन्दोहेन बलानां युध्येत, पराक्रमो हि व्यसनमपहन्ति; स्वधर्मश्चैष क्षत्रियस्य; युद्धे जयः पराजयो वा' इति विशालाक्षः ।

नेति कौटिल्यः । सर्वत्रानुप्रणतः कुलैडक इव निराशो जीविते वसति । युध्यमानश्चाल्पसैन्यः समुद्रमिवाप्लवोऽवगाहमानः सीदति । तद् विशिष्टं तु राजानमाश्रितो दुर्गमविषह्यं वा चेष्टेत ।

अथ द्वादशम् आबलीयसं नामाधिकरणमारभ्यते । प्रबलं कञ्चिदपेक्ष्य हीनबलोऽबलः, तदपेक्षयातिशयेन हीनबलोऽबलीयान्, तमधिकृत्य प्रवृत्तं तत्कृत्यप्रतिपादकत्वाद् आबलीयसमुच्यते । अथवा कञ्चिदपेक्ष्यातिशयेन बलयुक्तो बलीयान्, तद्भिन्नोऽबलीयान् अर्थादतिशयप्रतियोगी दुर्बलः, तमधिकृत्य प्रवृत्तम् आबलीयसम् । प्रबलेऽभियोक्तरि दुर्बलेन यत् कर्तव्यं तदस्मिन्नधिकरणे प्रतिपाद्यते । तत्र

**दूतकर्मेति** प्रथमं सूत्रम् । दूतव्यापारोऽभिधीयत इति सूत्रार्थः । प्रबलस्य सन्धेयत्वात् सन्धेश्च दूतमुखत्वात् सन्धियाचनलक्षणानां दूतकर्मणामिहाभिधानम् ।

तत्र मतभेदान् दिदर्शयिषुरादौ भारद्वाजमतमाह — **बलीयसेति** । तेन, अभियुक्तः, दुर्बलः, सर्वत्र सर्वस्मिन्नपि परिभवे, अनुप्रणतः तदनुवर्तनपरः, वेतसधर्मा तिष्ठन् यथा सर्वावस्थोऽपि जले नम्रीभूय स्रोतसोऽनुवर्तनं कुर्वन् वञ्जुलस्तिष्ठति तथा स्थितिं कुर्यादित्यर्थः । न च बलीयांसं प्रति प्रणामो दुर्बलस्य लाघवाय, प्रत्युत गौरवावहोऽस्तीत्यभिप्रायेणाह — **इन्द्रस्य** हीत्यादि ।

विशालाक्षमतमाह — **सर्वसन्दोहेनेत्यादि** । सर्वबलसमूहसाहित्येन युद्ध्वा जयमरणान्यतरप्राप्तिरेव क्षत्रियस्य स्वधर्मो न तु शत्रुपादपतनमित्यर्थः ।

मतद्वयमपि प्रतिषेधति — **नेतीति** । प्रणामवृत्तौ दोषमाह — **सर्वत्रानुप्रणत** इत्यादि । तथाभूतो हि, कुलैडक इव स्वयूथभ्रष्टस्त्रासाज्जीवितनिराशः कथञ्चिद् वसतीत्यर्थः । योधने दोषमाह — **युध्यमानश्चेत्यादि** । अप्लवः तरणसाधनरहितः । सीदति नश्यति । अतः किं कर्तव्यमित्याह — तदिति । तस्मात्, विशिष्टं तु राजानं शत्रुपक्षयाधिकबलमन्यं भूपतिं, **दुर्ग**

**त्रयोऽभियोक्तारो धर्मलोभासुरविजयिन इति । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति; तमभ्यवपद्येत परेषामपि भयात् । भूमिद्रव्यहरणेन लोभविजयी तुष्यति; तमर्थेनाभ्यवपद्येत । भूमिद्रव्यपुत्रदारप्राणहरणेन असुरविजयी; तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत ।**

**तेषामुत्तिष्ठमानं सन्धिना मन्त्रयुद्धेन कूटयुद्धेन वा प्रतिव्यूहेत । शत्रुपक्षमस्य सामदानाभ्यां स्वपक्षं भेददण्डाभ्याम् । दुर्गं राष्ट्रं स्कन्धावारं वास्य गूढाः शस्त्ररसाग्निभिः साधयेयुः ।**

**सर्वतः पार्ष्णिमस्य ग्राहयेत्; अटवीभिर्वा राज्यं घातयेत्; तत्कुलीनावरुद्धाभ्यां वा हारयेत् ।**

**अविषह्यं** वा धर्षयितुमशक्यं दुर्गं वा, आश्रित्य, चेष्टेत व्याप्रियेत, अर्थादभियोक्तरि विषये ।

चेष्टाभेदान् वक्तुं त्रिविधमभियोक्तारं विभजते—**त्रय** इत्यादि । **तेषामिति** । त्रयाणां मध्ये, धर्मविजयी, अभ्यवपत्त्या तवाहमित्यात्मार्पणेन, तुष्यति । तं धर्मविजयिनम्, अभ्यवपद्येत, परेषामपि भयात् न केवलं धर्मविजयिभयात् किन्तु शत्र्वन्तरभयादपि । न केवलं स्वयं न बाधतेऽभ्यवपत्तारं धर्मविजयी, किन्तु शत्र्वन्तरभयादपि स रक्षतीत्यभिप्रायः । **भूमिद्रव्यहरणेने**त्यादि । अर्थेन अभ्यवपद्येत धनादिदानेनावर्जयेत् । असुरविजयी भूमिद्रव्यपुत्रदारप्राणानां सर्वेषामप्यपहरणेन तुष्यति, अतस्तं भूमिद्रव्ययोर्दानेनावर्ज्य तद्धस्तगोचरमप्राप्त एव सन् सन्ध्यादिना प्रतिकुर्यादित्याह—**भूमिद्रव्यपुत्रे**त्यादि ।

**तेषामिति** । धर्मविजयिलोभविजय्यसुरविजयिनाम्, अन्यतमम्, उत्तिष्ठमानम् अभियुञ्जानं, सन्धिना मन्त्रयुद्धेन कूटयुद्धेन वा वक्ष्यमाणप्रकारेण, प्रतिव्यूहेत अपकुर्वीत । तत्र मन्त्रयुद्धस्य प्रकारमाह —**शत्रुपक्षमिति** । अस्य प्रबलस्याभियोक्तुः, शत्रुपक्षं, सामदानाभ्यां, प्रतिव्यूहेत । स्वपक्षम् अमात्यादिप्रकृतिवर्गं, भेददण्डाभ्यां, प्रतिव्यूहेत । कूटयुद्धप्रकारमाह — **दुर्गमिति** । दुर्गं स्थानीयं, राष्ट्रं जनपदं, स्कन्धावारं वा सेनानिवेशं वा, अस्य, गूढाः गूढपुरुषाः, शस्त्ररसाग्निभिः आयुधप्रहारविषप्रदाहैः, साधयेयुः ।

**सर्वत** इति । पृष्ठतः पार्श्वतश्च, पार्ष्णिम्, अस्य अभियोक्तुः, ग्राहयेत् । **अटवीभिर्वेति** । आटविकैर्वा, राज्यं दुर्गजनपदादिकं, घातयेत् ।

**अपकारान्तेषु चास्य दूतं प्रेषयेत् । अनपकृत्य वा सन्धानम् ।**

**तथाप्यभिप्रयान्तं कोशदण्डयोः पादोत्तरमहोरात्रोत्तरं वा सन्धिं याचेत ।**

**स चेद् दण्डसन्धिं याचेत, कुण्ठमस्मै हस्त्यश्वं दद्याद्, उत्साहितं वा गरयुक्तम् ।**

**पुरुषसन्धिं याचेत, दूष्यामित्राटवीबलमस्मै दद्याद् योगपुरुषाधिष्ठितम् । तथा कुर्याद् यथोभयविनाशः स्यात् । तीक्ष्णबलं वास्मै दद्यात्, यदवमानितं विकुर्वीत । मौलमनुरक्तं वा, यदस्य व्यसनेऽपकुर्यात् ।**

**तत्कुलीनावरुद्धाभ्यामिति** । अभियोक्तुः कुलीनो ज्ञातिः अवरुद्धः पुत्रादिः ताभ्यां वा, हारयेत्, राज्यम् ।

इत्थमपकारान् कृत्वा तदनन्तरं सन्धानार्थं दूतं प्रेषयेदित्याह — **अपकारान्तेषु चेत्यादि** । अपकारव्यथिते हि शत्रौ सन्धिः प्रयुज्यमानः तत्सौहार्देनावश्यं फलतीत्यभिप्रायः । सर्वथैवापकारकरणाशक्तौ त्वाह — **अनपकृत्य वा सन्धानमिति** । याचनीयमिति शेषः ।

**तथाप्यभिप्रयान्तमिति** । सुवर्णादिपणनेन दण्डपणनेन वा याचितेऽपि सन्धौ अभियानादनिवर्तमानं प्रबलं, कोशदण्डयोः पूर्वपणितसंख्यस्य धनस्य सैन्यस्य च, पादोत्तरं चतुर्थांशाधिकं, सन्धिं याचेत पूर्वपणितं सुवर्णलक्षसन्धिम् अश्वादिशतसन्धिं वानभ्युपगच्छति सन्धेये सुवर्णलक्षं पञ्चविंशतिसहस्राधिकं कृत्वा अश्वादिशतं पञ्चविंशत्यधिकं कृत्वा च भूयः सन्धिं याचेतेत्यभिप्रायः । अहोरात्रोत्तरं सन्धिं याचेतेत्यस्यायमर्थः — इयतो मासानिदं कर्तव्यमिति पूर्वपणितं मासमर्यादमनुपगच्छति सन्धेये पुनस्तमधिकदिवसयुक्तं कृत्वा याचेतेति ।

पणितयोः कोशदण्डयोर्दानविधिमाह — **स इति** । अबलीयान्, दण्डसन्धिं सैन्यसन्धिं, याचेत चेत्, अस्मै सन्धेयाय, कुण्ठं कर्माशक्तं, हस्त्यश्वं, दद्यात् । वा अथवा, उत्साहितं शूरं, गरयुक्तं मासार्धमासाद्यभ्यन्तरकालमारकविषयुक्तं कृत्वा, दद्यात् ।

**पुरुषसन्धिं याचेतेति** । पदातिदानसन्धिं चेत् प्रार्थयेत, दूष्यामित्राटवीबलं दूष्यबलम् अमित्रबलम् आटविकबलं च, अस्मै सन्धेयाय, दद्यात्, कथम्भूतं, योगपुरुषाधिष्ठितं योगपुरुषैः विषधूमाम्बुदानादिना दूष्यादिबलमा-

**कोशसन्धिं याचेत, सारमस्मै दद्यात्, यस्य क्रेतारं नाधिगच्छेत्; कुप्यमयुद्धयोग्यं वा ।**

**भूमिसन्धिं याचेत, प्रत्यादेयां नित्यामित्रामनपाश्रयां महाक्षयव्ययनिवेशां वाऽस्मै भूमिं दद्यात् ।**

**सर्वस्वेन वा राजधानीवर्जेन सन्धिं याचेत बलीयसः ॥**

**यत् प्रसह्य हरेदन्यस्तत् प्रयच्छेदुपायतः ।**
**रक्षेत् स्वदेहं न धनं का ह्यनित्ये धने दया ॥**

इति कौटलीयार्थशास्त्रे आबलीयसे द्वादशेऽधिकरणे
प्रथमोऽध्यायः, दूतकर्माणि सन्धियाचनम् ।
आदितः षट्त्रिंशच्छततमः ॥

---

रणक्षमैर्गूढपुरुषैरधिष्ठितम् । **तथा कुर्यादिति** । तेन प्रकारेण सन्धानं कुर्यात्, यथा येन प्रकारेण, उभयविनाशः दूष्यामित्रबलशत्रुबलयोरुभयोर्विनाशः, स्यात् । **तीक्ष्णबलं वेत्यादि** । विकुर्वीत कुपितः सन् अपकुर्यात् । यतेत अपकुर्यात् अपकारस्थानं प्रतीक्ष्यापकारं कुर्यात् ।

**कोशसन्धिं याचेतेति** । तं चेत् प्रार्थयेत, सारं महार्घं रत्नादि, अस्मै सन्धेयाय, दद्यात् । सारं विशिनष्टि यस्य सारस्य दत्तस्य, क्रेतारं तदनुरूपमूल्यदानशक्तं, नाधिगच्छेत् । **कुप्यमिति** । अयुद्धयोग्यं कुप्यं वा वस्त्रास्तरणादि वा, दद्यात् ।

**भूमिसन्धिमित्यादि** । नित्यामित्रां नित्यसन्निहितशत्रुकाम् । अनपाश्रयां दुर्गरहिताम् । महाक्षयव्ययनिवेशां महान्तौ क्षयव्ययौ पुरुषपुरुषधान्यापचयौ यस्य स तथाभूतो निवेशो यस्यां तां तथाभूताम् ।

**सर्वस्वेन वेत्यादि** । राजधानीवर्जेन स्ववासार्थं राजधानीं वर्जयित्वा । बलीयसः बलवत्तरस्य सकाशादित्यर्थः ॥

**यदित्यादि** । प्रसह्य बलात्कारेण । अन्यः बलीयान् । उपायतः सन्धिव्याजेन । **का ह्यनित्ये धने दयेति** । सति देहे नष्टधनप्रत्यार्जनमपि सुकरमिति कृत्वा तस्मिन् दयावश्यं कर्तव्येत्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् आबलीयसे द्वादशेऽधिकरणे
प्रथमोऽध्यायः, दूतकर्माणि सन्धियाचनम् ।
आदितः षट्त्रिंशच्छततमः ॥

---

## १६३. प्रक. मन्त्रयुद्धम्।

स चेत् सन्धौ नावतिष्ठेत, ब्रूयादेनम् — "इमे षड्वर्गवशगा राजानो विनष्टाः; तेषामनात्मवतां नार्हसि मार्गमनुगन्तुम्; धर्ममर्थं चावेक्षस्व; मित्रमुखा ह्यमित्रास्ते ये त्वां साहसमधर्ममर्थातिक्रमं च ग्राहयन्ति; शूरैस्त्यक्तात्मभिः सह योद्धुं साहसम्; जनक्षयमुभयतः कर्तुमधर्मः; दृष्टमर्थं मित्रमदुष्टं च त्यक्तुमर्थातिक्रमः; मित्रवांश्च स राजा भूयश्चैतेन अर्थेन मित्राण्युद्योजयिष्यति यानि त्वा सर्वतोऽभियास्यन्ति; न च मध्यमोदासीनयोर्मण्डलस्य वा परित्यक्तः; भवांस्तु परित्यक्तो ये त्वां समुद्युक्तमुपेक्षन्ते — भूयः क्षयव्ययाभ्यां युज्यतां; मित्राच्च भिद्यतां; अथैनं परित्यक्तमूलं सुखेनोच्छेत्स्याम इति। स भवान् नार्हति मित्रमुखानाममित्राणां श्रोतुं, मित्राण्युद्वेजयितुम्, अमित्रांश्च श्रेयसा योक्तुं, प्राणसंशयमनर्थं चोपगन्तुम्" इति। यच्छेत्।

तथापि प्रतिष्ठमानस्य प्रकृतिकोपमस्य कारयेद् यथा सङ्घवृत्ते

मन्त्रयुद्धमिति सूत्रम्। मन्त्रः प्रज्ञाप्रकर्षः तेन युद्धं शत्रोर्मत्युत्पादनादिना वञ्चनं मन्त्रयुद्धं, तदभिधीयत इति सूत्रार्थः। सन्धिं याचितः शत्रुर्यदि नोपगच्छेत्, तदा किं कर्तव्यमित्येतदिहोपदिश्यते।

स चेत् सन्धौ नावतिष्ठेतेत्यादि। 'इमे' इत्यादिः 'प्राणसंशयमनर्थं चोपगन्तुम्' इत्यन्तो वचनप्रकारः। इमे नामग्रहणपूर्वं निर्दिशिताः। मित्रमुखा अमित्राः मित्रभावं वाचा बहिर्नाटयन्तः परमार्थतः शत्रव इत्यर्थः। त्यक्तात्मभिः उपेक्षितदेहैः। योद्धुं साहसं योधनमविचारितानुष्ठानमित्यर्थः। दृष्टमर्थं करगतं पणितमर्थं कोशादिम्। एतेनार्थेन त्वदुपाकृतेन सन्धिद्रव्येण। त्वा सर्वतोऽभियास्यन्ति त्वां परिवार्याभियोक्ष्यन्ते। न च परित्यक्तः अर्थात् सन्धियाचकोऽभियोज्यः। मध्यमोदासीनमण्डलानि तव सुखोच्छेदाय शक्तिक्षयं बहुभिः प्रकारैः प्रतीक्षमाणाः सन्तस्त्वामिदानीं कृताभियोगमुपेक्षन्ते इत्याह — ये त्वामित्यादिना। यत् त्वामिति पाठे उपेक्षणकर्तारो गम्याः। 'उच्छेत्स्यामहे' इति पाठे आत्मनेपदमार्षम्। श्रोतुम् अर्थादुपदेशान्। अनर्थम् अर्थहानिम्। यच्छेदिति। गृहीतयथोक्तोपदेशाय सन्ध्यर्थं दद्यादित्यर्थः।

तमप्युपदेशमनभ्युपगच्छति सन्धेये कर्तव्यमाह — तथापीत्यादि। एवमुपदेशे कृतेऽपि, प्रतिष्ठमानस्य अभियुञ्जानस्य, अस्य, प्रकृतिकोपम्

ख्यातं, योगवामने च। तीक्ष्णरसदप्रयोगं च। यदुक्तमात्मरक्षितके रक्ष्यं, तत्र तीक्ष्णान् रसदांश्च प्रयुञ्जीत।

बन्धकीपोषकाः परमरूपयौवनाभिः स्त्रीभिः सेनामुख्यानुन्मादयेयुः। बहूनामेकस्यां द्वयोर्वा मुख्ययोः कामे जाते तीक्ष्णाः कलहानुत्पादयेयुः। कलहे पराजितपक्षं परत्रापगमने यात्रासाहाय्यदाने वा भर्तुर्योजयेयुः।

कामवशान् वा सिद्धव्यञ्जनाः सांवननिकीभिरोषधीभिर्गतिसन्धानाय मुख्येषु रसं दापयेयुः।

वैदेहकव्यञ्जनो वा राजमहिष्याः सुभगायाः प्रेष्यामासन्नां कामनिमित्तमर्थेन अभिवृष्य परित्यजेत्। तस्यैव परिचारकव्यञ्जनोपदिष्टः सिद्धव्यञ्जनः सांवननिकीमोषधीं दद्यात्— वैदेहकशरीरेऽव-

अमात्यादिभेदनं, कारयेत। कथं, यथा येन प्रकारेण, सङ्घवृत्ते, व्याख्यातम् उपदिष्टम् अर्थाद् भेदनं, योगवामने च योगवामनप्रकरणे व्याख्यास्यते च। तथेति शेषः। घातनमाह तीक्ष्णरसदप्रयोगं चेति। कारयेदिति वर्तते। उक्तमेव विवृणोति — यदुक्तमित्यादि। स्पष्टार्थम्।

सेनामुख्यवध इति सूत्रम्। वधो भेदनस्याप्युपलक्षणम्। सेनामुख्यानां भेदनघातने उच्येते इति सूत्रार्थः। तयोः पूर्वोक्तयोः सेनामुख्या अपि विषया इति प्रकरणारम्भः।

भेदनोपायमाह — बन्धकीपोषका इत्यादि। बहूनामित्यादि। बहूनां त्रिप्रभृतीनां मुख्यानाम्। कलहे इत्यादि। परत्रापगमने पूर्वाश्रितपक्षापहानेन विजिगीषुपक्षाश्रयणे। भर्तुः स्वामिनो विजिगीषोः। यात्रासाहाय्यदाने वा विजिगीषुयात्रासाह्यकरणे च

घातनोपायमाह — कामवशान् वेत्यादि। सेनामुख्येषु मध्ये ये कामवशगास्तान् सिद्धवेषाः स्त्रीसंवननप्रयोजनाभिरोषधीभिः सह विषम् अतिसन्धानार्थं तन्मित्रव्यञ्जनद्वारेण प्राशयेयुरित्यर्थः।

राज्ञो विषदानविधानमाह — वैदेहकव्यञ्जनो वेति। वणिग्व्यञ्जनः, राजमहिष्याः, सुभगायाः सुन्दर्याः, प्रेष्यामासन्नाम् अन्तरङ्गपरिचारिकां, कामनिमित्तं भोगार्थम्, अर्थेन अभिवृष्य प्रचुरधनवर्षणेन सम्भाव्य, परित्यजेत् पुनर्नोपगच्छेत्। तस्यैवेति। वैदेहकव्यञ्जनस्यैव, परिचारकव्यञ्जनोपदिष्टः परिचारकवेषेण पुरुषेण प्रेरितः, सिद्धव्यञ्जनः, सांवननिकीम् ओषधीं, दद्यात्,

**भातव्या । सिद्धे सुभगाया अप्येनं योगमुपदिशेद् — राजशरीरेऽव-भातव्या इति । ततो रसेनातिसन्दध्यात् ।**

**कार्तान्तिकव्यञ्जनो वा महामात्रं राजलक्षणसम्पन्नं क्रमाभिनीतं ब्रूयात् । भार्यामस्य भिक्षुकी —'राजपत्नी राजप्रसविनी वा भविष्यसि' इति ।**

**भार्याव्यञ्जना वा महामात्रं ब्रूयात् —'राजा किल मामवरोधयिष्यति, तवान्तिकाय पत्रलेख्यमाभरणं चेदं परिव्राजिकयाहृतम्' इति ।**

**सूदारालिकव्यञ्जनो वा रसप्रयोगार्थं राजवचनमर्थं चास्य**

किमित्युक्त्वा, वैदेहकशरीरे, अवभातव्या क्षेप्तव्या तद्वशीकरणार्थम्, इत्युक्त्वा । **सिद्धे** इति । तथाकरणेन वैदेहकवशीकरणे सिद्धे सति, वैदेहके तद्वश्यतामात्मनोऽभिनयति गणिकेति यावत्, सुभगाया अपि राजमहिष्या अपि, एनम् उक्तं, योगं सांवननिकौषधिप्रयोगम्, उपदिशेत्, किमित्युक्त्वा, राजशरीरे, अवभातव्या अर्थाद् औषधिः, इत्युक्त्वा । **ततो रसेनातिसन्दध्याद्**इति । तस्मिन् योगे विषयोजनेन राजानं घातयेदित्यर्थः ।

महामात्रभेदनमाह — **कार्तान्तिकव्यञ्जनो वे**ति । लक्षणादिना भविष्यदर्थादेष्टा कार्तान्तिकः तद्व्यञ्जनो गूढपुरुषो वा, महामात्रं, राजलक्षणसम्पन्नं ब्रूयात् 'त्वं राजा भविष्यसी'ति वदेत् । कथम्भूतं, क्रमाभिनीतं बहुकृत्वो निजादेशसंवादप्रदर्शनेनाभिमुखीकृतं विश्वासितमित्यर्थः । **भार्यामिति** । अस्य महामात्रस्य, भार्यां, भिक्षुकी, ब्रूयादिति सम्बध्यते, किमिति, 'राजपत्नी राजप्रसविनी वा भविष्यसी'ति । इत्थं वचनेन महामात्रस्य राजत्वलोभोदयाद् राज्ञा सह विरोधो जायेतेत्यभिप्रायः ।

प्रकारान्तरमाह — **भार्याव्यञ्जना वे**ति । निजरूपगुणाद् महामात्रस्य भार्यात्वं प्राप्य तदतिसन्धानावसरं प्रतीक्षमाणा बन्धकीत्यर्थः, महामात्रं ब्रूयात्, कथमिति, राजा किल माम् अवरोधयिष्यति स्वान्तःपुरं नेष्यति, तव अन्तिकाय इदं पत्रलेख्यम् आभरणं च, राजदत्तमिति शेषः, परिव्राजिकया दूतीभूतया, आहृतम् इति । अनेन निमित्तेन महामात्रस्य राज्ञि द्वेषो जायेतेत्यभिप्रायः ।

प्रकारान्तरमाह — **सूदारालिकव्यञ्जनो वे**ति । पाचकसूपकार-

**लोभनीयमभिनयेत् । तदस्य वैदेहकव्यञ्जनः प्रतिसन्दध्यात्; कार्यसिद्धिं च ब्रूयात् । एवमेकेन द्वाभ्यां त्रिभिरित्युपायैरेकैकमस्य महामात्रं विक्रमायापगमनाय वा योजयेदिति ।**

**दुर्गेषु चास्य शून्यपालासन्नाः सत्रिणः पौरजानपदेषु मैत्रीनिमित्तमावेदयेयुः "शून्यपालेनोक्ता योधाश्च अधिकरणस्थाश्च — 'कृच्छ्रगतो राजा जीवन्नागमिष्यति न वा; प्रसह्य वित्तमार्जयध्वममित्रांश्च हत" इति । बहुलीभूते तीक्ष्णाः पौरान् निशास्वाहारयेयुः, मुख्यांश्चाभिहन्युः — 'एवं क्रियन्ते, ये शून्यपालस्य न शुश्रूषन्ते' इति ।**

व्यञ्जनो वा, रसप्रयोगार्थं पानपानीयादिषु विषयोजनार्थं, राजवचनं, राजवचनादिति पाठो न समञ्जसः । अर्थं च धनं च, अस्य रसप्रयोगस्य, लोभनीयं प्रभूतत्वेन हेतुना कामयितव्यम्, अभिनयेत् स्वस्मै राज्ञा दत्तं व्यपदिशेत् । **तदस्येति** । अस्य राज्ञः, तत् उक्तं कर्म, वैदेहकव्यञ्जनः विषविक्रेतृवेषो गूढपुरुषः, प्रतिसन्दध्यात् संवादयेत्, 'राजवचनाद् मया त्वत्सूदारालिकहस्ते विषं दत्तं, तत् किमर्थमिति तु न वेद्मि' इत्यादिकथनेन सूदारालिकवचने महामात्रस्य विश्वासं जनयेदित्यभिप्रायः । **कार्यसिद्धिं च ब्रूयादिति** । तेन विषेण सद्योमरणलक्षणं कार्यं सिध्येदिति च वदेदित्यर्थः । अनेन प्रकारेण सामाद्युपायैर्व्यस्तैः समस्तैर्यथासम्भवं मिलितैर्वा राज्ञ एकैकं महामात्रं राज्ञा सह विरोधितं कृत्वा योधनायापसरणाय वा सन्नाहयेदित्याह — **एवमेकेने**त्यादि । इत्थं महामात्राणां राज्ञो भेदनमभिहितम् ।

अथ शून्यपालात् पौराणां भेदनमाह — **दुर्गेषु चे**ति । स्थानीयेषु च, अस्य परस्य राज्ञः, शून्यपालासन्नाः शत्र्वभियोगप्रयाणवशाद् राज्ञा विरहितं स्थानीयं शून्यं तत्पालस्तद्रक्षकः तस्य आसन्नाः आप्तत्वाभिनयिनः सत्रिणः, **पौरजानपदेषु, मैत्रीनिमित्तं** शून्यपालविषयानुरागोत्पादनार्थम्, **आवेदयेयुः** प्रज्ञापयेयुः । **शून्यपालेनोक्ता** इत्यादिनावेदनीयार्थोपन्यासः । **कृच्छ्रगत** इत्यादिना च शून्यपालवचनोपन्यासः । प्रसह्य बलात्कारेण । अमित्रांश्च हत स्वशत्रूंश्च व्यापादयत । **बहुलीभूत** इति । सर्वतः प्रसृते सति अर्थाच्छून्यपालाज्ञाप्रवादे, तीक्ष्णाः, पौरान्, निशासु रात्रिषु, आहारयेयुः बलादाहरतः प्रयोजयेयुः, मुख्यांश्च अभिहन्युः । **एवं क्रियन्त** इति । इत्थं बलादभिहन्यन्ते, के, ये शून्यपालस्य, न शुश्रूषन्ते आराधनं न कुर्वन्ति, इति अनेन प्रकारेण, अभिहननसमये वदन्त इति शेषः । एतच्च शून्यपाले परिवादसमा-

शून्यपालस्थानेषु च सशोणितानि शस्त्रवित्तबन्धनान्युत्सृजेयुः । ततः सत्रिणः—'शून्यपालो घातयति, विलोपयति च' इत्यावेदयेयुः ।

एवं जानपदान् समाहर्तुर्भेदयेयुः ।

समाहर्तृपुरुषांस्तु ग्राममध्येषु रात्रौ तीक्ष्णा हत्वा ब्रूयुः—'एवं क्रियन्ते, ये जनपदमधर्मेण बाधन्ते' इति ।

समुत्पन्ने दोषे शून्यपालं समाहर्तारं वा प्रकृतिकोपेन घातयेयुः । तत्कुलीनमवरुद्धं वा प्रतिपादयेयुः ॥

अन्तःपुरपुरद्वारद्रव्यधान्यपरिग्रहान् ।
दहेयुस्तांश्च हन्युर्वा ब्रूयुः स्यार्तवादिनः ॥

इति कौटलीयार्थशास्त्रे आबलीयसे द्वादशेऽधिकरणे तृतीयोऽध्यायः
दूतकर्मणि वाक्ययुद्धं [illegible] मन्त्रयुद्धम्,
आदितः [illegible] ॥

— —

रोपार्थम् । हननस्य शून्यपालकारितत्वप्रतीतिजननार्थं कर्तव्यमाह—**शून्यपालस्थानेषु** चेति । शून्यपालवासेषु, सशोणितानि रुधिराङ्कितानि, शस्त्रवित्तबन्धनानि आयुधानि धनबन्धनरज्जूश्च, उत्सृजेयुः । **तत** इति । इत्थं शून्यपालापराधसम्भावनानुकूलसंविधानकरणानन्तरं, सत्रिणः, आवेदयेयुः पौरान् बोधयेयुः, कथमिति, शून्यपालो घातयति, विलोपयति च धनमाहारयति च, इति ।

**एवमिति** । अनेन शून्यपालपौरभेदनन्यायेन, जानपदान्, समाहर्तुः समाहर्तृसकाशाद्, भेदयेयुः ।

अथ जानपदेभ्यः समाहर्तारं भेदयितुमुपायमाह— **समाहर्तृपुरुषांस्त्विति** । समाहर्तुरधिश्वरान् पुरुषान्, ग्राममध्येषु, रात्रौ, तीक्ष्णाः हत्वा ब्रूयुः । वक्तव्यप्रकारमाह—**एवं क्रियन्त** इत्यादि । एवं स्वीयपुरुषहननेन तदपख्यातिसृष्ट्या च जानपदेभ्यः समाहर्ता विरज्य भिद्येतेत्यभिप्रायः ।

इत्थं सत्र्यादिभिरारोपिते दोषे सर्वतः प्रथां प्राप्ते सति शून्यपालं समाहर्तारं वा प्रकृतिभिरकलोष्टवधेन सत्रिणो घातयेयुः; परस्य ज्ञातिं तत्पुत्रं वावरुद्धं राज्ये निवेशयेयुश्चेत्याह — **समुत्पन्न** इत्यादि ॥

अध्यायप्रान्ते श्लोकमाह — **अन्तःपुरेत्यादि** । अस्य शत्रोः, अन्तःपुरपुरद्वारद्रव्यधान्यपरिग्रहान् अन्तःपुरं गोपुरं काष्ठादिद्रव्याणां शाल्यादि-

धान्यानां च संग्रहागाराणि च, दहेयुः । तांश्च अन्तःपुरादीन् अर्थात् तत्पालकांश्च, हन्युर्वा । आर्तवादिनः दाहहननाभ्यामन्यकृताभ्यामिवात्मानमार्तिमन्तमभिनयन्तः, अस्य पौरस्य जानपदस्य च ब्रूयुः स्वकृतं दाहादिकमकृत्यं पौरजानपदकृतमिति वदेयुरित्यर्थः ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् आबलीयसे द्वादशेऽधिकरणे द्वितीयोऽध्यायः

दूतकर्मणि वाक्ययुद्धं दूतकर्म समाप्तं मन्त्रयुद्धम् ,

आदितः सप्तत्रिंशच्छततमः ॥

१६४,१६५. प्रक. सेनामुख्यवधः मण्डलप्रोत्साहनं च ।

**राज्ञो राजवल्लभानां चासन्नाः सत्रिणः पत्त्यश्वरथद्विपमुख्यानां 'राजा क्रुद्धः' इति सुहृद्विश्वासेन मित्रस्थानीयेषु कथयेयुः । बहुलीभूते तीक्ष्णाः कृतरात्रिचारप्रतीकाराः गृहेषु 'स्वामिवचनेन आगम्यताम्' इति ब्रूयुः; तान् निर्गच्छत एवाभिहन्युः । 'स्वामिसन्देशः' इति चासन्नान् ब्रूयुः । ये च प्रवासितास्तान् सत्रिणो ब्रूयुः— 'एतत्तद् यदस्माभिः कथितं, जीवितुकामेन अपक्रान्तव्यम्' इति ।**

**येभ्यश्च राजा याचितो न ददाति तान् सत्रिणो ब्रूयुः—"उक्तः शून्यपालो राज्ञा 'अयाच्यमर्थमसौ चासौ मा याचते; मया प्रत्याख्याताः शत्रुसंहिताः; तेषामुद्धरणे प्रयतस्व' इति" । ततः पूर्ववदाचरेत् ।**

---

सेनामुख्यवधप्रकरणस्यार्थशेषमाह — **राज्ञ** इति । तस्य, राजवल्लभानां च, आसन्नाः मित्रवेषाः, सत्रिणः, पत्त्यश्वरथद्विपमुख्यानां पत्त्यादिशब्दैस्तत्तदध्यक्षा गृह्यन्ते मुख्यशब्देन महामात्राः तेषां, मित्रस्थानीयेषु, सुहृद्विश्वासेन सौहार्दविस्रम्भेण, कथयेयुः, कथमिति, राजा क्रुद्ध इति पत्त्यध्यक्षादीन् प्रति राजा कुपित इति । **बहुलीभूत** इति । राजकोपप्रवादे सर्वतः प्रसृते सति, तीक्ष्णाः, कृतरात्रिचारप्रतीकाराः सज्जितरात्रिसंचारदोषप्रतिक्रियाः सन्तः, गृहेषु गत्वेति शेषः, स्वामिवचनेन आगम्यताम् अर्थात् स्वाम्यन्तिकम् , इति, ब्रूयुः । तान् पत्त्यध्यक्षादीन् , निर्गच्छत एव, अभिहन्युः, स्वामिसन्देश इति च स्वाम्याज्ञयेदमस्माभिः कृतमिति च, आसन्नान् मित्रवेषान् सत्रिणः, ब्रूयुः । तथोक्ताश्च सत्रिणः अनेन राजसकाशानपक्रान्तमुख्यादिगतिनिदर्शनेन तदपक्रान्तपूर्वान् प्रत्यात्मना पूर्वं कथितस्य राजदोषस्य प्रत्यक्षदृष्टतां बोधयेयुः शेषापक्रमणार्थमित्यभिप्रायकमाह — **ये च प्रवासिता** इत्यादि । इह अपक्रान्तव्यमित्यार्षम् , अपक्रमितव्यमिति हि भाव्यम् ।

उपजापस्य प्रकारान्तरमाह — **येभ्यश्च राजा याचितो न ददाती**त्यादि । मा मां । प्रत्याख्याताः याचितार्थदानेन न सम्भाविताः, अर्थादयाच्ययाचितारः पुरुषविशेषाः । शत्रुसंहिताः अदाननिमित्तात् कोपाच्छत्रुणा सङ्गताः । इतिशब्दानन्तरमन्य इतिशब्दोऽध्याहर्तव्यः । **ततः पूर्ववदाचरेदि**ति । पूर्ववदाचरणं तु तीक्ष्णैः कतिपयानां रात्रौ घातनम् अघातितानां तद्वधनिदर्शनेन राजसकाशादपक्रामणं च पूर्वोक्तं द्रष्टव्यम् ।

येभ्यश्च राजा याचितो ददाति, तान् सत्त्रिणो ब्रूयुः—"उक्तः शून्यपालो राज्ञा—अयाच्यमर्थमसौ चासौ च मा याचते; तेभ्यो मया सोऽर्थो विश्वासार्थं दत्तः; शत्रुसंहिताः। तेषामुद्धरणे प्रयतस्व इति"। ततः पूर्ववदाचरेत्।

ये चैनं याच्यमर्थं न याचन्ते, तान् सत्त्रिणो ब्रूयुः—"उक्तः शून्यपालो राज्ञा—याच्यमर्थमसौ चासौ च मा न याचते; किमन्यत् स्वदोषशङ्कितत्वात्; तेषामुद्धरणे प्रयतस्व इति"। ततः पूर्ववदाचरेत्।

एतेन सर्वः कृत्यपक्षो व्याख्यातः।

प्रत्यासन्नो वा राजानं सत्त्री ग्राहयेत्—'असौ चासौ च ते महामात्रः शत्रुपुरुषैः सम्भाषते' इति। प्रतिपन्ने दूष्यानस्य शासनहरान् दर्शयेत्—'एतत्तत्' इति।

सेनामुख्यप्रकृतिपुरुषान् वा भूम्या हिरण्येन वा लोभयित्वा स्वेषु विक्रमयेदपवाहयेद् वा। योऽस्य पुत्रः समीपे दुर्गे वा प्रतिवसति,

---

याचितार्थदानसम्भावितविषयेऽप्युपजापमाह—येभ्यश्च राजा याचितो ददातीत्यादि। शत्रुसंहिताः शत्रुणा सङ्गताः, अर्थात् ते याचितारः।

याच्यार्थायाचितृविषयेऽप्युपजापमाह—ये चैनं याच्यमर्थं न याचन्त इत्यादि। किमन्यदिति। अयाचने निमित्तं स्वदोषशङ्कितत्वातिरिक्तं न किञ्चिद् भवितुमर्हतीत्यर्थः।

उक्तं मुख्यभेदनप्रकारं क्रुद्धलुब्धभीतवर्गेऽतिदिशति—एतेनेत्यादि।

इत्थं महामात्रादीनां राजसकाशाद् भेदनमभिहितम्। इदानीं महामात्रादिसकाशाद् राज्ञो भेदनमाह—प्रत्यासन्नो वेति। आसन्नच्छन्ना, सत्त्री, राजानं, ग्राहयेद् बोधयेत्। कथमित्याह—असौ चासौ चेत्यादि। प्रतिपन्न इति। सत्त्रिवचनेऽङ्गीकृते सति, अस्य दूष्यान् विजिगीषोर्दूषणीयत्वेन बध्यान्, शासनहरान् महामात्रं प्रति शासननेतॄन् पथि गृहीतान्, दर्शयेद् अर्थाद् राज्ञे, एतत् तदिति यन्मयोक्तं पूर्वं तत् प्रत्यक्षं जातमिति, कथयन्निति शेषः।

सेनामुख्यप्रकृतिपुरुषान् वेति। सेनामुख्याः बलाध्यक्षाः प्रकृतयः अमात्यादयः पुरुषाः भृतकाः एतान् वा, भूम्या हिरण्येन वा लोभयित्वा 'भूमिहिरण्ये वो दास्यामी'त्युपप्रलोभ्य, स्वेषु, विक्रमयेत् अभियोजयेत्, अप-

तं सत्रिणोपजापयेत्—'आत्मसम्पन्नतरस्त्वं पुत्रः तथाप्यन्तर्हितः; तत् किमुपेक्षसे। विक्रम्य गृहाण; पुरा त्वा युवराजो विनाशयति' इति।

तत्कुलीनमवरुद्धं वा हिरण्येन प्रतिलोभ्य ब्रूयात्—'अन्तर्बलं प्रत्यन्तस्कन्धमन्यं वास्य प्रमृद्नीहि' इति।

आटविकानर्थमानाभ्यामुपगृह्य राज्यमस्य घातयेत्।

पार्ष्णिग्राहं वास्य ब्रूयाद्—'एष खलु राजा मामुच्छिद्य त्वामुच्छेत्स्यति; पार्ष्णिमस्य गृहाण; त्वयि निवृत्तस्याहं पार्ष्णिं ग्रहीष्यामि' इति। मित्राणि वास्य ब्रूयात्—'अहं वः सेतुः; मयि विभिन्ने सर्वानेष वो राजाप्लावयिष्यति' इति। 'सम्भूय वास्य यात्रां

---

वाहयेद् वा स्वेभ्योऽपसारयेद् वा। प्रकारान्तरमाह—य इति। यः, अस्य राज्ञः, पुत्रः, समीपे राजधान्यां, दुर्गे वा अन्तपालदुर्गस्थाने वा, प्रतिवसति, तं, सत्रिणा, उपजापयेत्, कथमुक्त्वा, त्वम् आत्मसम्पन्नतरः पुत्रः युवराजभूतपुत्रापेक्षया अतिशयेनात्मसम्पद्युक्तः पुत्रः, तथापि, अन्तर्हितः नियन्त्रितोऽसि। तत् तस्मात्, किमुपेक्षसे, विक्रम्य गृहाण, अर्थाद् राज्यभागम्। युवराजः, त्वा त्वां, विनाशयति पुरा विनाशयिष्यति, अर्थादात्मसम्पदतिशययोगनिमित्तादमर्षात्। इति।

प्रकारमन्यमाह—तत्कुलीनमित्यादि। अन्तर्बलं मौलबलम्। प्रत्यन्तस्कन्धं स्कन्धः सैन्यं विषयान्तस्थितं सैन्यमित्यर्थः। अन्यं वा प्रत्यन्तस्कन्धातिरिक्तं स्कन्धं वा। अन्तमिति पाठश्चेदन्त्यार्थः। प्रमृद्नीहि विध्वंसय।

प्रकारान्तरमाह—आटविकानित्यादि। अर्थमानाभ्यां धनेन पूजया च। उपगृह्य स्वायत्तीकृत्य। इत्थं सेनामुख्यवधशेषो व्याख्यातः।

मण्डलप्रोत्साहनमिति सूत्रम्। द्वादशराजकं मण्डलं तस्य प्रोत्साहनं बलवत्तरमभियोक्तारं प्रति समुद्योजनम् उच्यत इति सूत्रार्थः।

तत्र पार्ष्णिग्राहप्रोत्साहनमाह—पार्ष्णिग्राहं वेत्यादि। त्वयि निवृत्तस्य त्वामभियुञ्जानस्य। मित्रप्रोत्साहनमाह—मित्राणि वास्येत्यादि। सेतुः पराभियोगनिरोधकः। आप्लावयिष्यति नाशयिष्यति। सामवायिकप्रोत्साहनमाह—सम्भूय वेति। संघीभूय वा, अस्य परस्य, यात्रां विहनाम

विहनाम' इति। तत्संहतानामसंहतानां च प्रेषयेत्—'एष खलु राजा मामुत्पाट्य भवत्सु कर्म करिष्यति। बुध्यध्वम्, अहं वः श्रेयानभ्यवपत्तुम्' इति ॥

मध्यमस्य प्रहिणुयादुदासीनस्य वा पुनः।
यथासन्नस्य मोक्षार्थं सर्वस्वेन तदर्पणम् ॥

इति कौटलीयार्थशास्त्रे आबलीयसे द्वादशेऽधिकरणे तृतीयोऽध्यायः सेनामुख्यवधः मण्डलप्रोत्साहनं च, आदितोऽष्टात्रिंशच्छततमः ॥

---

विहतां करवाम। तत्संहतानामिति। तेन परेण सह संहतानां सामवायिकानाम्, असंहतानां तदन्येषां च, प्रेषयेत्, अर्थात् सन्देशहरम्। सन्देशप्रकारमाह—एष खल्वित्यादि। कर्म उच्छेदनम्। अभ्यवपत्तुं श्रेयान् विपदि परित्रातुं योग्यतरः ॥

मध्यमस्येति। मध्यमस्य, उदासीनस्य वा, यथासन्नस्य आसत्तिमनतिवर्तमानस्य स्वप्रत्यासन्नस्येत्यर्थः। त्वदर्पणं 'तवाहमस्मि रक्षणीयः सर्वथे'त्येवंरूपमात्मार्पणं, तदर्पणमिति पाठे तस्मिन् आत्मनोऽर्पणमित्यर्थः। सर्वस्वेन सर्वस्वपणनेन, प्रहिणुयात् प्रेषयेत् अर्थादबलीयान्। किमर्थं, मोक्षार्थं बलीयसोऽभियुञ्जानात् स्वस्य मोचनार्थम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् आबलीयसे द्वादशेऽधिकरणे तृतीयोऽध्यायः सेनामुख्यवधः मण्डलप्रोत्साहनं च, आदितोऽष्टात्रिंशच्छततमः ॥

**१६६, १६७ प्रक. शस्त्राग्निरसप्रणिधयः, वीवधासारप्रसारवधश्च ।**

**ये चास्य दुर्गेषु वैदेहकव्यञ्जनाः, ग्रामेषु गृहपतिकव्यञ्जनाः, जनपदसन्धिषु गोरक्षकतापसव्यञ्जनाः, ते सामन्ताटविकतत्कुलीनावरुद्धानां पण्यागारपूर्वं प्रेषयेयुः — 'अयं देशो हार्य' इति । आगतांश्चैषां दुर्गे गूढपुरुषानर्थमानाभ्याम् अभिसत्कृत्य प्रकृतिच्छिद्राणि प्रदर्शयेयुः । तेषु तैः सह प्रहरेयुः ।**

**स्कन्धावारे वाऽस्य शौण्डिकव्यञ्जनः पुत्रमभित्यक्तं स्थापयित्वा अवस्कन्दकाले रसेन प्रवासयित्वा 'नैषेचनिकम्' इति मदनरसयुक्तान मद्यकुम्भाञ्छतशः प्रयच्छेत् । शुद्धं वा मद्यं पाद्यं वा मद्यं**

शस्त्राग्निरसप्रणिधय इति सूत्रम् । शस्त्राग्निरसानां प्रणिधयः गूढप्रयोगा अभिधीयन्त इति सूत्रार्थः । प्रोत्साहितस्य मण्डलस्य परं प्रति अनुत्थाने उत्थानाविलम्बे वा दृष्टे यद् विजिगीषुणा कर्तव्यं, तदिहोच्यते ।

तत्र शस्त्रप्रणिधिमाह — ये चेत्यादि । अस्य परस्य । दुर्गेषु स्थानीयेषु । जनपदसन्धिषु जनपदपरस्पराभ्यन्तरेषु । सामन्ताटविकतत्कुलीनावरुद्धानां परनिर्गमविरोधिनां सामान्तादीनाम् । पण्यागारपूर्वं मार्गापेक्षितपण्यागारसंविधानपुरस्सरम् । प्रेषयेयुः पुरुषान् प्रहिणुयुः । प्रेष्यमाणपुरुषार्पणीयं सन्देशमाह — **अयं देशो हार्य इतीति** । 'परस्यैष देशो बहुच्छिद्रत्वाद् युष्माभिर्हर्तुं शक्यः, तत् सद्य एवागच्छते'ति सन्दिश्येत्यर्थः । **आगतांश्चेति** । आगतान्, एषां सामन्ताटविकादीनां, गूढपुरुषान्, अर्थमानाभ्यां धनेन पूजया च, अभिसत्कृत्य उपचर्य, प्रकृतिच्छिद्राणि प्रकृतीनामन्योन्यक्रोधभयादीनि रन्ध्राणि, प्रदर्शयेयुः, तेभ्यः । तेषु दर्शितेषुच्छिद्रेषु तैः सह प्रहरेयुः ।

रसप्रणिधिमाह — **स्कन्धावारे वेति** । अस्य परस्य, स्कन्धावारे, शौण्डिकव्यञ्जनः सौरिकवेषः सत्री, सौरिकेति क्वचित् पाठः । अभित्यक्तं वध्यं कञ्चित्, पुत्रं स्थापयित्वा स्वपुत्रत्वेन व्यपदिश्य, अवस्कन्दकाले रात्रिविलोपादिकाले, रसेन विषेण, प्रवासयित्वा मारयित्वा, नैषेचनिकमिति मृतसन्तर्पणार्थमित्यपदेशेन, मदनरसयुक्तान् मदकविषमिश्रान्, मद्यकुम्भान्, शतशः, प्रयच्छेद् दद्यात् । विश्वासार्थं पक्षान्तरमाह — **शुद्धं वा मद्यमित्यादि** । शुद्धं विषसम्बन्धरहितम् । पाद्यं मारणापेक्षिताया विषमात्रायाश्चतु-

**दद्यादेकमहः, उत्तरं रससिद्धं प्रयच्छेत । शुद्धं वा मद्यं दण्डमुख्येभ्यः प्रदाय मदकाले रससिद्धं प्रयच्छेत् ।**

**दण्डमुख्यव्यञ्जनो वा 'पुत्रमभित्यक्तम्' इति — समानम् ।**

**पक्वमांसिकौदनिकशौण्डिकापूपिकव्यञ्जना वा पण्यविशेषमवघोषयित्वा परस्परसङ्घर्षेण कालिकं समर्घतरमिति वा परानाहूय रसेन स्वपण्यान्यपचारयेयुः ।**

**सुराक्षीरदधिसर्पिस्तैलानि वा तद्व्यवहर्तृहस्तेषु गृहीत्वा स्त्रियो बालाश्च रसयुक्तेषु स्वभाजनेषु परिकिरेयुः 'अनेनार्घेण विशिष्टं वा भूयो दीयताम्' इति तत्रैवावकिरेयुः ।**

शौशः पादः तावन्मात्रयुक्तम् । एकम् अहः प्रथमं दिवसम्, अत्यन्तसंयोगे द्वितीया । उत्तरं द्वितीयादिकम् अहः । रससिद्धं पर्याप्तविषयोगनिष्पन्नम् । सेनामुख्याः प्रथममन्यं पाययित्वा पश्चात् स्वयं पिबन्तीति समुदाचारः, तस्मात् तेभ्यः शुद्धं मद्यं प्रथमं दत्त्वा तत्पानमत्तत्वदशायां विषयोगनिष्पन्नं दद्यादित्याह — **शुद्धं वा मद्यं दण्डमुख्येभ्य** इत्यादि ।

दण्डमुख्यव्यञ्जनो भूत्वा वा मन्त्री शौण्डिकव्यञ्जनवत् पुत्रमभित्यक्तं स्थापयित्वावस्कन्दकाले रसेन व्यापाद्य च नैषेचनिकापदेशेन मदनरसयुक्तान् मद्यकुम्भान् प्रयच्छेदित्याह — **दण्डमुख्ये**त्यादि ।

पक्वमांसान्नसुरापूपान्यतमविक्रयिव्यञ्जना वा भूत्वा स्वस्वपण्यगतं गुणविशेषं प्रख्याप्य परस्परस्पर्धया कालान्तरदेयमूल्यं लघुनरार्घं चेत्युक्त्वा परानाहूय विषेण स्वपण्यानि मिश्रयित्वा प्रयच्छेयुरित्याह — **पक्वमांसिकौदनिके**त्यादि । कालिकं कालान्तरदेयमूल्यम् । समर्घतरं सङ्गतमूल्यं समर्घं युक्ततरमूल्यं समर्घतरं लघुतरमूल्यमित्यर्थः ।

**सुरे**त्यादि । सुरादीनि पञ्च वा, तद्व्यवहर्तृहस्तेषु गृहीत्वा सुरादिविक्रयिहस्तेभ्य आदाय, स्त्रियो बालाश्च, रसायुक्तेषु विषयुक्तेषु, स्वभाजनेषु, परिकिरेयुः तदन्तर्गतविषसंमिश्रता यथा स्यात् तथा परिलुलितानि कुर्युः । अनेन अर्घेण पूर्वोक्तादन्येन मूल्येन, दीयतां, विशिष्टं वा भूयो दीयतां, पण्यम् इति वदन्त इति शेषः । तत्रैव विक्रेतृभाजनेष्वेव, अवकिरेयुः प्रत्यर्पयेयुः स्वापराधपरिहारार्थम् ।

**एतान्येव वैदेहकव्यञ्जनाः पण्यविक्रयेणाहर्तारो वा हस्त्यश्वानां विधायवसेषु रसमासन्ना दद्युः ।**

**कर्मकरव्यञ्जना वा रसाक्तं यवसमुदकं वा विक्रीणीरन् । चिरसंसृष्टा वा गोवाणिजका गवामजावीनां वा यूथान्यवस्कन्दकालेषु परेषां मोहस्थानेषु प्रमुञ्चेयुः । अश्वखरोष्ट्रमहिषादीनां दुष्टांश्च तद्व्यञ्जना वा चुचुन्दरीशोणिताक्ताक्षान्ः लुब्धकव्यञ्जना वा व्यालमृगान् पञ्जरेभ्यः प्रमुञ्चेयुः; सर्पग्राहा वा सर्पानुग्रविषान्ः हस्तिजीविनो वा हस्तिनः ।**

**अग्निजीविनो वा अग्निमवसृजेयुः ।**

**गूढपुरुषा वा विमुखान् पत्त्यश्वरथद्विपमुख्यानभिहन्युः; आदीपयेयुर्वा मुख्यावासान् । दूष्यामित्राटविकव्यञ्जनाः प्रणिहिताः पृष्ठाभिघातमवस्कन्दमतिग्रहं वा कुर्युः । वनगूढा वा प्रत्यन्तस्कन्धमुपनिष्कृष्याभिहन्युः ।**

---

**एतान्येवेति** । सुराक्षीरादीन्येव, वैदेहकव्यञ्जनाः, पण्यविक्रयेण सुरादिरूपपण्यविक्रयापदेशेन, आहर्तारो वा, हस्त्यश्वानां विधायवसेषु विधासु हस्त्यन्नेषु यवसेषु घासेषु च, रसं विषम् , आसन्नाः, दद्युः ।

**कर्मकरव्यञ्जना वेत्यादि** । रसाक्तं विषमिश्रम् । **चिरेत्यादि** । चिरसंसृष्टाः चिरकृतसख्याः । मोहस्थानेषु इतिकर्तव्यतामौढ्यावसरेषु । प्रमुञ्चेयुः विसृजेयुः व्याकुलतानिशयार्थम् । **अश्वखरेत्यादि** । तद्व्यञ्जनाः अश्वादिवाणिजकव्यञ्जनाः । चुचुन्दरीशोणिताक्ताक्षान् चुचुन्दरी उग्रविषो मूषिकजातिविशेषः तद्रुधिरयुक्तनयनान् । **लुब्धकेत्यादि** । लुब्धकव्यञ्जनाः व्याधवेषाः । हस्तिनः गजान्, प्रमुञ्चेयुरिति सम्बध्यते ।

अग्निप्रणिधानमाह — **अग्निजीविनो वेत्यादि** ।

**गूढपुरुषा वेत्यादि** । मुख्यावासान् मुख्यानां वासस्थानानि । **दूष्यामित्रेत्यादि** । प्रणिहिताः परेषु प्रयुक्ताः । पृष्ठाभिघातं पृष्ठतोऽनुगम्य हननम् । अवस्कन्दप्रतिग्रहम् अवस्कन्दं प्रतिग्रहं च, अवस्कन्दः सौप्तिकापहारः प्रतिग्रहः अभिगच्छत्परबलप्रत्यवस्थानम् । **वनगूढा वेत्यादि** । प्रत्यन्तस्कन्धं विषयान्ते रक्षार्थं निवेशितं सैन्यम् । उपनिष्कृष्य समीपे समाकृष्य ।

**वीवधासारप्रसारवध** इति सूत्रम् । **स्फुटार्थम्** ।

एकायने वीवधासारप्रसारान् वा।

ससङ्केतं वा रात्रियुद्धे भूरितूर्यमाहत्य ब्रूयुः—'अनुप्रविष्टाः स्मो लब्धं राज्यम्' इति। राजावासमनुप्रविष्टा वा सङ्कुलेषु राजानं हन्युः।

सर्वतो वा प्रयातमेनं म्लेच्छाटविकदण्डचारिणः सत्रापाश्रयाः स्तम्भवाटापाश्रया वा हन्युः।

लुब्धकव्यञ्जना वावस्कन्दसङ्कुलेषु गूढयुद्धहेतुभिरभिहन्युः।

एकायने वा शैलस्तम्भवाटखञ्जनान्तरुदके वा स्वभूमिबलेनाभिहन्युः। नदीसरस्तटाकसेतुबन्धभेदवेगेन वाप्लावयेयुः। धान्वनवननिम्नदुर्गस्थं वा योगाग्निधूमाभ्यां नाशयेयुः।

**एके**त्यादि। एकायने एकैकक्रमगम्ये सङ्कुचितसङ्कटे मार्गे। वीवधासारप्रसारान् वीवधो धान्यादिप्राप्तिः आसारः सुहृद्बलागमः प्रसारस्तृणकाष्ठादिप्रवेशः एतान्। अभिहन्युरिति वर्तते।

**ससङ्केतं** वेत्यादि। 'भूरितूर्याघातपूर्वं स्वपक्षजयोद्घोषण रात्रियुद्धे परबलभयोत्पादनार्थं कर्तव्यमि'त्येवंरूपः समयः सङ्केतः तद्युक्तं यथा भवति तथा। अनुप्रविष्टाः अर्थात् परस्य स्थानीयम्। संकुलेषु तुमुलेषु।

**सर्वतो** वेत्यादि। एनं राजानम्। सत्रापाश्रयाः सत्रं 'धान्वनवनसङ्कटे'त्यादिना साङ्ग्रामिकतृतीयाध्याये लक्षितं मरुदुर्गादिकं तदाश्रयाः। स्तम्भवाटापाश्रयाः स्तम्भवाटः स्तम्भयुक्ता वृतिः तदाश्रयाः, अथवा स्तम्भापाश्रया वाटापाश्रयाश्च। स्तम्भवनापाश्रया इति क्वचित् पाठः।

**लुब्धके**त्यादि। अवस्कन्दसङ्कुलेषु अवस्कन्दनिमित्तेषु तुमुलेषु। गूढयुद्धहेतुभिः कूटयुद्धविकल्पप्रकरणोक्तैः।

**एकायने** वेत्यादि। शैलस्तम्भवाटखञ्जनान्तरुदके शिलाप्राये स्तम्भवाटप्राये खञ्जनोदके अन्तरुदके च प्रदेशे। अभिहन्युः अर्थात् परबलम्। नद्यादिभेदनप्रवर्तितजलप्रवाहवेगेनाकृष्टं कृत्वा परं नाशयेयुरित्याह—**नदीसरस्तटाके**त्यादि। धान्वनदुर्गस्थं वनदुर्गस्थं निम्नदुर्गस्थं च परं कपटोपायप्रयुक्तेनाग्निना धूमेन च नाशयेयुरित्याह—**धान्वने**त्यादि।

**सङ्कटगतमग्निना, धान्वनगतं धूमेन, निधानगतं रसेन, तोयावगाढं दुष्टग्राहैरुदकचरणैर्वा तीक्ष्णाः साधयेयुः ।**

**आदीप्तावासात् निष्पतन्तं वा —**
**योगवामनयोगाभ्यां योगेनान्यतमेन वा ।**
**अमित्रमतिसन्दध्यात् सक्तमुक्तासु भूमिषु ॥**

इति कौटलीयार्थशास्त्रे द्वादशेऽधिकरणे चतुर्थोऽध्यायः
शस्त्राग्निरसप्रणिधयः, वीवधासारप्रसारवधश्च,
आदित एकोनचत्वारिंशच्छततमः ॥

---

**सङ्कटगतमिति ।** अशक्यप्रवेशनिर्गमो देशः सङ्कटः तद्गतम्, अग्निना, धान्वनगतं धन्वदुर्गस्थं, धूमेन, निधानगतं निधानं गूढकोशस्थानं तद्गतं, रसेन विषेण, तोयावगाढं जलमग्नं, दुष्टग्राहैः दुष्टनक्रैः, उदकचरणैर्वा दुर्गलम्भोपाये (१ अध्याये) वक्ष्यमाणैस्तोयसञ्चरणसाधनैर्वा, तीक्ष्णाः साधयेयुः निगृह्णीयुः ।

**आदीप्तावासादि**त्यादि श्लोकान्वयि । **योगवामनयोगाभ्यामिति ।** आदीप्तावासाद् निष्पतन्तम् अग्निदीपिताद् वासस्थानान्निष्क्रामन्तम्, उक्तासु भूमिषु धान्वनादिषु, सक्तं स्वरक्षार्थं कृतासङ्गम्, अमित्रं, योगवामनयोगाभ्यां योगवामनेन दुर्गलम्भोपाये वक्ष्यमाणेन योगेन च योगातिसन्धानाध्याये दर्शयिष्यमाणेन, अन्यतमेन योगेन वा परातिसन्धानोपायेषु पूर्वप्रदर्शितेष्वेकतमेन वा, अतिसन्दध्यात् ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् आबलीयसे द्वादशेऽधिकरणे चतुर्थोऽध्यायः
शस्त्राग्निरसप्रणिधयः वीवधासारप्रसारवधश्च,
आदित एकोनचत्वारिंशच्छततमः ॥

---

**१६८-१७०. प्रक. योगातिसन्धानं, दण्डातिसन्धानम्, एकविजयश्च ।**

**दैवतेज्यायां यात्रायाममित्रस्य बहूनि पूज्यागमस्थानानि भक्तितः । तत्रास्य योगमुञ्जयेत् ।**

**देवतागृहप्रविष्टस्योपरि यन्त्रमोक्षणेन गूढभित्तिं शिलां वा पातयेत् । शिलाशस्त्रवर्षमुत्तमागारात्, कवाटमवपातितं वा, भित्तिप्रणिहितमेकदेशबन्धं वा परिघं मोक्षयेत् । देवतादेहस्थप्रहरणानि वास्योपरिष्टात् पातयेत् । स्थानासनगमनभूमिषु वास्य गोमयप्रदेहेन गन्धोदकावसेकेन वा रसमतिचारयेत् पुष्पचूर्णोपहारेण वा । गन्धप्रतिच्छन्नं वास्य तीक्ष्णं धूममतिनयेत् । शूलकूपमवपातनं वा शयनासनस्याधस्ताद् यन्त्रबद्धतलमेनं कीलमोक्षणेन प्रवेशयेत् । प्रत्यासन्ने वामित्रे जनपदाज्जनमवरोधक्षममतिनयेत् । दुर्गाच्चानवरोधक्षममपनयेत् ।**

**योगातिसन्धान**मिति सूत्रम् । कपटोपायेन वञ्चनमुच्यत इति सूत्रार्थः ।

उपायप्रयोगावसरं वक्तुमाह ---- **दैवतेज्याया**मिति । दैवतपूजायां, यात्रायां दैवतोत्सवयात्रायाम्, अमित्रस्य शत्रोः, पूज्यागमस्थानानि पूजार्हागमनप्रसङ्गाः, भक्तितः दैवतभक्तिवशात्, सम्भवन्तीति शेषः । तत्र, अस्य अमित्रस्य अमित्रमुद्दिश्येत्यर्थः, योगम् उपायम्, उञ्जयेत् प्रसारयेत् प्रयुञ्जीतेत्यर्थः ।

योगप्रकारानाह—**देवतागृहप्रविष्टस्ये**त्यादि । यन्त्रमोक्षणेन यन्त्रस्य गूढभित्तिशिलयोर्धारकस्य बन्धमोचनेन । **शिले**त्यादि । उत्तमागारात् शिरोगृहात् । अवपातितम् अवस्थानाधाराद् विश्लेषितम् । भित्तिप्रणिहितं भित्तौ गूढनिवेशितम् । एकदेशबन्धम् असमग्रबन्धम् अत एव लघुमोक्षणीयमित्यर्थः । परिघं दण्डम् । **देवते**त्यादि । अस्य राज्ञः । **स्थानासने**त्यादि । गोमयप्रदेहेन गोपुरीषलेपेन । रसं विषम् । अतिचारयेत् सम्मिश्रयेत् । पुष्पचूर्णोपहारेण देवतानिर्माल्यकुसुमकुङ्कुमक्षोदोपदया । **गन्धे**त्यादि । गन्धप्रतिच्छन्नं सुरभिद्रव्यगन्धाभिभूतविषगन्धयोगम् । तीक्ष्णं विषदुष्टम् । अतिनयेत् अतिशयेन ग्राहयेत् । शयनासनयोरधस्ताद् यन्त्ररचिततलमेनं शूलयुक्तकूपरूपे पातनगर्ते यन्त्रकीलमोक्षणेन प्रवेशयेदित्याह — **शूले**त्यादि । अवपातनं पातनगर्तम् । शूलरूपमवपातनमिति क्वचित् पाठः । **प्रत्यासन्ने वामित्र**

**प्रत्यादेयमरिविषयं वा प्रेषयेत् । जनपदं एकस्थं शैलवननदीदुर्गेष्व- टवीव्यवहितेषु वा पुत्रभ्रातृपरिगृहीतं स्थापयेत् ।**

**उपरोधहेतवो दण्डोपनतवृत्ते व्याख्याताः ।**

**तृणकाष्ठम् आ योजनाद् दाहयेत् । उदकानि च दूषयेद् अ- वास्रावयेच्च । कूटकूपावपातकण्टकिनीश्च बहिरुज्जयेत् ।**

**सुरुङ्गाममित्रस्थाने बहुमुखीं कृत्वा निचयमुख्यानभिहारयेद्, अमित्रं वा । परप्रयुक्तायां वा सुरुङ्गायां परिखामुदकान्तिकीं खानयेत्, कूपशालामनुसालं वा । अतोयकुम्भान् कांस्यभाण्डानि वा शङ्कास्थानेषु**

इति । शत्रावन्तिकस्थे, जनपदात् तदीयाद्, जनम्, अवरोधक्षमम् अवरोध- योग्यम्, अतिनयेत् अतिशयेन नयेद् अवरोधार्थम् । दुर्गाच्च, अनवरोधक्षमम् अवरोधायोग्यं जनं, शत्रुणावरुद्धमित्यर्थः । अपनयेत् मोचयेदित्यर्थः । नीय- मानो जनश्चेत् प्रत्यादेयस्तदा तं तच्छत्रुविषयं प्रेषयेदप्रत्यादानायेत्याह — **प्र- त्यादेय**मित्यादि । **जनपद**मिति । तम्, एकस्थम् एकस्य राज्ञः शत्रुभूतस्य शासने स्थितं, शैलवननदीदुर्गेषु, अटवीव्यवहितेषु प्रदेशेषु वा, पुत्रभ्रातृपरि- गृहीतं शत्रोः पुत्रैर्भ्रातृभिश्च स्वस्वायत्तीकृतं, स्थापयेत् कारयेत् ।

उक्तजातीयान् प्रबलपरोपरोधहेतून् अन्यानपि अधिकरणान्तरोक्तान् स्मारयति — **उपरोधहेतव** इत्यादि । दण्डोपनतवृत्तं षाड्गुण्याधिकरणस्य पञ्चदशाध्याये ।

भूयोऽपि योगानाह — **तृणकाष्ठ**मिति । तृणानि काष्ठानि च, शत्रा- पेक्षितानि, आ योजनाद् योजनमितं प्रदेशमभिव्याप्य, दाहयेद् अमित्रस्य लभ्यानि मा भूवन्नित्येतदर्थम्, उदकानि च, दूषयेत् अर्थाद् विषेण । अवास्रावयेच्च कूलसेतुभेदनादिना निर्गालयेच्च । **कूटे**त्यादि । तत्र कूटकूपाः गूढा अन्धवः, अवपातास्तृणादिच्छन्ना गर्ताः, कण्टकिन्यः कण्टकयुक्ता आ- यसरज्जवः । बहिः प्राकारबाह्ये परबलागमनमार्गे । उज्जयेत् निर्मापयेत् ।

यत्रामित्रोऽवतिष्ठते तत्र भूविवरं बहुमुखं कारयित्वा तत्र निचयप्रधा- नान् अमित्रं च व्यासज्जयेदित्याह — **सुरुङ्गाममित्रस्थान** इत्यादि । अ- भिहारयेद् अभियोजयेत् । प्राकारान्तःप्रवेशार्थं परेण कृता चेत् सुरुङ्गा, तर्हि तत्प्रतिघातार्थमुदकदर्शनपर्यन्तावगाढं खेयं खानयेदित्याह — **परप्रयु- क्तायां वे**त्यादि । परिखाखननस्यासुकरतायां प्राकारायामानुसारिणीं कूप-

**स्थापयेत् खाताभिज्ञानार्थम् । ज्ञाते सुरुङ्गापथे प्रतिसुरुङ्गां कारयेत् । मध्ये भित्त्वा धूममुदकं वा प्रयच्छेत् ।**

**प्रतिविहितदुर्गो वा मूले दायादं कृत्वा प्रतिलोमामस्य दिशं गच्छेत् — यतो वा मित्रैर्बन्धुभिराटविकैर्वा संसृज्येत, परस्यामित्रैर्दूष्यैर्वा महद्भिः; यतो वा गतोऽस्य मित्रैर्वियोगं कुर्यात्, पार्ष्णिं वा गृह्णीयात्, राज्यं वास्य हारयेत्, वीवधासारप्रसारान् वा वारयेत्; यतो वा शक्नुयाद् आक्षिकवदपक्षेपेणास्य प्रहर्तुं; यतो वा स्वं राज्यं त्रायेत, मूलस्योपचयं वा कुर्यात् । यतः सन्धिमभिप्रेतं लभते, ततो वा गच्छेत् ।**

**सहप्रस्थायिनो वास्य प्रेषयेयुः — 'अयं ते शत्रुरस्माकं हस्त-**

शालां निर्मापयेदित्याह — कूपेत्यादि । अनुसालं सालः प्राकारः तद्दैर्घ्यानुसारेण । 'यस्य चायामः' इत्यव्ययीभावः । सुरुङ्गामार्गशङ्काविषयेषु स्थलेषु खाताभिज्ञापकचिह्नतया निर्जलघटान् कांस्यस्तूपान् वा स्थापयेदित्याह — **भतोयकुम्भानित्यादि** । सुरुङ्गामार्गे परकीये ज्ञाते प्रतिसुरुङ्गां कारयेत, सुरुङ्गापथमध्ये च रन्ध्रं कृत्वा तदन्तर्विषधूमं विषोदकं वा दद्यादित्याह — **ज्ञात** इत्यादि ।

यावच्छक्तिकृतदुर्गरक्षाविधानो वा दुर्बलः स्थानीये पुत्रं स्थापयित्वा स्वयम् आत्मानमभियुञ्जानस्य शत्रोरनिष्टोत्पादनानुकूलां दिशं गच्छेदित्येवं पक्षान्तरमाह — **प्रतिविहितदुर्गो वेत्यादि** । दायादं पुत्रम् । प्रातिलोमां शत्रुप्रतिकूलाम् । प्रातिलोम्यप्रकारान् दर्शयति — **यतो वा मित्रैरित्यादि** । यां दिशं गतः स्वमित्रबान्धवाटविकैः सह संसर्गं शत्र्वपकारार्थं लभेत, शत्रोरमित्रैस्तदपकरणशक्तैर्दूष्यैर्वा संसृष्टो भवेत्; यां गतः शत्रोस्तन्मित्रयोगं विघटयेत्, पृष्ठं वा गृह्णीयात्, राज्यं वा शत्रोरपहरेत्, शत्रोर्वीवधासारप्रसारान् वा निरुन्ध्यात्, यां गतः कपटाक्षपातनेनेवाक्षदेवी कपटप्रयोगेण शत्रुं प्रहर्तुं शक्तो भवेत्, यां गतः स्वं राज्यं वा रक्षेत्, मूलं वोपचिनुयादित्यर्थः । यां दिशं गतः स्वाभिमतप्रकारं सन्धिं लभेत, तां दिशं गच्छेदित्याह— **यतः सन्धिमित्यादि** ।

योगान्तरमाह — **सहप्रस्थायिनो वेति** । प्रातिलोमदिग्गतस्य सहयायिनो गूढपुरुषाः, अस्य शत्रोः, प्रेषयेयुः, अर्थात् सन्देशम् । सन्देशप्रकार-

गतः; पण्यं विप्रकारं वापदिश्य हिरण्यमन्तस्सारबलं प्रेषयस्व, एनमर्पयेम बद्धं प्रवासितं वा' इति । प्रतिपन्ने हिरण्यं सारबलं चाददीत ।

अन्तपालो वा दुर्गसम्प्रदानेन बलैकदेशमतिनीय विश्वस्तं घातयेत् ।

जनपदमेकस्थं वा घातयितुममित्रानीकमावाहयेत्ः तदवरुद्धदेशमतिनीय विश्वस्तं घातयेत् ।

मित्रव्यञ्जनो वा बाह्यस्य प्रेषयेत् — 'क्षीणमस्मिन् दुर्गे धान्यं स्नेहाः क्षारो लवणं वाः तदमुष्मिन् देशे काले च प्रवेक्ष्यतिः तदुपगृह्णाण' इति । ततः रसविद्धं धान्यं स्नेहं क्षीरं लवणं वा दूष्यामित्राटविकाः प्रवेशयेयुः; अन्ये वा अभित्यक्ताः ।

तेन सर्वभाण्डवीवधग्रहणं व्याख्यातम् ।

---

माह — अयं ते शत्रुरित्यादि । पण्यमपदिश्य हिरण्यं प्रेषयस्व, विप्रकारमपदिश्य अन्तस्सारबलं प्रेषयस्वेति सम्बन्धः । एनं त्वच्छत्रुम् । अर्पयेम अर्थात् तुभ्यम् । प्रवासितं मारितम् । सन्देशमभ्युपेत्य हिरण्ये सारबले च प्रेषिते तदुभयं स्वयं गृह्णीयादित्याह — प्रतिपन्न इत्यादि ।

पक्षान्तरमाह — अन्तपालो वेति । स वा, दुर्गसम्प्रदानेन स्वाधिष्ठितदुर्गप्रदानेन, बलैकदेशं शत्रुसैन्यस्यैकदेशम्, अतिनीय अतिशयेन नीत्वा अशक्यापयानं देशं प्रापय्येत्यर्थः, विश्वस्तं घातयेत् ।

प्रकारान्तरमाह — जनपदमिति । तम्, एकस्थम् एकीभूय स्वाविधेयतया स्थितं, घातयितुं निग्रहीतुम्, अमित्रानीकम्, आवाहयेत् आनाययेत् । तद्, अवरुद्धदेशं दुष्करनिर्गमनं देशम्, अतिनीय, विश्वस्तं, घातयेत् ।

अन्यं पक्षमाह — मित्रव्यञ्जनो वेति । स वा, बाह्यस्य शत्रोः, प्रेषयेत्, अर्थात् सन्देशम् । तत्स्वरूपमाह — क्षीणमस्मिन्नित्यादि । तद् धान्यादि । उपगृह्णाण त्वमपहृत्य स्वीकुरुष्व । एवं सन्देशप्रेषणानन्तरं विषयोगदूषितं धान्यादिकं दूष्यामित्राटविकाः विजिगीषुसम्बन्धिनः इतरे वा अभित्यक्ताः यथानिर्दिष्टे देशे काले च प्रवेशयेयुरित्याह — ततो रसविद्धमित्यादि ।

अनेनैव प्रकारेण सर्वान् भाण्डवीवधान् रसविद्धान् कृत्वा शत्रुणा ग्राहयेदित्याह — तेन सर्वेत्यादि ।

**सन्धिं वा कृत्वा हिरण्यैकदेशमस्मै दद्यात् । विलम्बमानः शेषम् । ततो रक्षाविधानान्यवस्रावयेत्; अग्निरसशस्त्रैर्वा प्रहरेत्; हिरण्यप्रतिग्राहिणो वाऽस्य वल्लभाननुगृह्णीयात् ।**

**परिक्षीणो वाऽस्मै दुर्गं दत्त्वा निर्गच्छेत् सुरुङ्गया । कुक्षिप्रदरेण वा प्राकारभेदेन निर्गच्छेत् ।**

**रात्राववस्कन्दं दत्त्वा सिद्धस्तिष्ठेत्; असिद्धः पार्श्वेनापगच्छेत्; पाषण्डच्छद्मना मन्दपरिवारो निर्गच्छेत्; प्रेतव्यञ्जनो वा गूढैर्निर्ह्रियेत; स्त्रीवेषधारी वा प्रेतमनुगच्छेत् ।**

**दैवतोपहारश्राद्धप्रहवणेषु वा रसविद्धमन्नपानमवसृज्य कृतोपजापो दूष्यव्यञ्जनैर्निष्पत्य गूढसैन्योऽभिहन्यात् ।**

---

प्रकारान्तरमाह — **सन्धिं** वेत्यादि । हिरण्यैकदेशं हिरण्यस्य पाणितस्य कमपि भागम् । शेषदानविलम्बसाध्यमाह — **तत** इति । ततः शेषदानविलम्बनवशादित्यर्थः, रक्षाविधानानि शत्रुकरणीयानि अवस्रावयेत् 'अभियोज्यः संहितः' इति विश्वासोत्पादद्वारेण उपेक्षयेदित्यर्थः । अग्निरसशस्त्रैर्वा प्रहरेत् अर्थादवस्रावितरक्षाविधानं शत्रुम् । हिरण्यप्रतिग्राहिणः उत्कोचग्रहणशीलान्, अस्य शत्रोः, वल्लभान् वा, अनुगृह्णीयात् उत्कोचदानेनावर्जयेत् तत्प्रहारार्थम् ।

**परिक्षीणो** वेति । सर्वथा शत्रुनिवारणाशक्तः, अस्मै शत्रवे, दुर्गं दत्त्वा, सुरुङ्गया भूविवरेण, निर्गच्छेत् । **कुक्षिप्रदरेण वा प्राकारभेदेन निर्गच्छेदि**ति । प्राकारस्य कुक्षौ यतः प्रदरोऽस्ति ततो भित्त्वा वा निस्सरेत् ।

प्रकारान्तरमाह — **रात्रावि**ति । तदा, अवस्कन्दं सौप्तिकापहारं, दत्त्वा उत्पाद्य, सिद्धस्तिष्ठेत् लब्धार्थश्चेत् तिष्ठेत् । असिद्धः, पार्श्वेन वक्रोपायेन, अपगच्छेत् न तु तिष्ठेत् प्राणापायभयात् । पार्श्वं प्रपञ्चयति — **पाषण्डच्छद्मने**ति । पाषण्डवेषेण, मन्दपरिवारः अल्पपरिजनः, निर्गच्छेत् । प्रेतव्यञ्जनो वा, गूढैः गूढपुरुषैः, निर्ह्रियेत आसन्दीबद्धो नगराद् बहिर्नीयेत, स्त्रीवेषधारी वा प्रेतभार्याच्छद्मा वा, प्रेतं निर्ह्रियमाणम्, अनुगच्छेत् ।

**दैवते**त्यादि । देवबलिषु श्राद्धेषु उद्यानभोजनेषु च, रसविद्धं विषमिश्रम्, अन्नपानम्, अवसृज्य दत्त्वा, दूष्यव्यञ्जनैः दूष्यवेषैः, निष्पत्य स्वपक्षात् परपक्षं प्रविश्य, कृतोपजापः, गूढसैन्यः गूढैः स्वसैन्यैरुपेतः, अभिहन्यात् ॥ अथ

**एवं गृहीतदुर्गो वा प्राश्यप्राशं चैत्यमुपस्थाप्य दैवतप्रतिमाच्छिद्रं प्रविश्यासीत ; गूढभित्तिं वा दैवतप्रतिमायुक्तं भूमिगृहम् । विस्मृते सुरुङ्गया रात्रौ राजावासमनुप्रविश्य सुप्तममित्रं हन्यात् । यन्त्रविश्लेषणं वा विश्लेष्याधस्तादवपातयेत् । रसाग्नियोगेनावलिप्तं गृहं जतुगृहं वाधिशयानममित्रमादीपयेत् ।**

**प्रमदवनविहाराणामन्यतमे वा विहारस्थाने प्रमत्तं भूमिगृहसुरुङ्गागूढभित्तिप्रविष्टास्तीक्ष्णा हन्युः, गूढप्रणिहिता वा रसेन । स्वपतो वा निरुद्धे देशे गूढाः स्त्रियः सर्परसाग्निधूमानुपरि मुञ्चेयुः ।**

**प्रत्युत्पन्ने वा कारणे यद्यदुपपद्येत तत्तदमित्रेऽन्तःपुरगते गूढसञ्चारः प्रयुञ्जीत, ततो गूढमेवापगच्छेत्, स्वजनसंज्ञां च प्ररूपयेत् ॥**

**एकविजय** इति सूत्रम् । एकेन सैन्यसाहाय्यरहितेन विजिगीषुणा शत्रोरभिभव इति सूत्रार्थः ।

परापहृतदुर्गस्य कर्तव्यमाह — **एवमिति** । अनेन प्रकारेण गृहीतदुर्गो वा, प्राश्यप्राशं प्राशनीयप्रभूताशनं, चैत्यं देवालयम्, उपस्थाप्य आत्मानं प्रापय्य, दैवतप्रतिमाच्छिद्रं प्रविश्य, आसीत । **गूढभित्तिं वा** गूढवासयोग्यरन्ध्रवतीं भित्तिं वा, दैवतप्रतिमायुक्तं भूमिगृहं वा, प्रविश्य, आसीत । **विस्मृते** इत्यादि । विस्मृते शत्रुणा विस्मृते स्ववृत्तान्ते शत्रौ परभयविस्मरणविस्रब्धावस्थिते सतीत्यर्थः । यन्त्रविश्लेषणं यन्त्रं विश्लेष्यते यस्मात् तद् यन्त्रविश्लेषणाधारमित्यर्थः । विश्लेष्य यन्त्राद् वियोज्य । रसाग्नियोगेन अग्निप्रज्वालनानुकूलेन योगेन औपनिषदिकप्रलम्भनप्रकरणे वक्ष्यमाणेन । अवलिप्तम् उपदिग्धम् ।

**प्रमदवनविहाराणामित्यादि** । विहारस्थाने क्रीडाविषये प्रसक्तमिति शेषः । प्रमत्तं क्रीडाव्यासङ्गात् कार्यान्तरानवहितम् । **गूढप्रणिहिता वा रसेनेति** । गूढपुरुषा वा सूदारालिकव्यञ्जना अन्नपानादौ विषयोजनेन हन्युरित्यर्थः । **स्वपतो वेत्यादि** । निरुद्धे निवारितजनप्रवेशे । सर्परसाग्निधूमान् सर्पविषाग्निधूमान् औपनिषदिके वक्ष्यमाणान् ।

प्रत्युत्पद्यमानं निमित्तमवेक्ष्य यद् यद् वधपरिक्लेशाद्यौपयिकं, तत्तद् अन्तःपुरगते शत्रौ गूढसञ्चारो भूत्वा विजिगीषुः प्रयुञ्जीत, प्रयुज्य चान्तःपुराद् गूढमेवापसरेत्, अपसृत्य च स्वजनेभ्यो गूढप्रणिहितचरेभ्य आह्वानसंकेतं दद्यादित्याह — **प्रत्युत्पन्ने वेत्यादि** ॥

द्वाःस्थान् वर्षवरांश्चान्यान् निगूढोपहितान् परे ।
तूर्यसंज्ञाभिराहूय द्विषच्छेषाणि घातयेत् ॥

इति कौटलीयार्थशास्त्रे आबलीयसे द्वादशाधिकरणे पञ्चमोऽध्यायः
योगातिसन्धानं दण्डातिसन्धानम् एकविजयश्च ।
आदितश्चत्वारिंशच्छततमः ॥
एतावता कौटलीयस्यार्थशास्त्रस्य आबलीयसं
द्वादशमधिकरणं समाप्तम् ॥

---

के ते स्वजनाः का तदाह्वानसंज्ञा किं चाहूतैः कर्तव्यमित्याकाङ्क्षायामाह— **द्वाःस्थानिति**। द्वारपालव्यञ्जनान्, वर्षवरान् षण्डान् अन्तःपुरचरान्, **अन्यांश्च** सैनिकादिव्यञ्जनानितरांश्च, **परे** शत्रौ, **निगूढोपहितान्** गूढप्रणिहितान्, **तूर्यसंज्ञाभिः** तूर्यघोषविशेषरूपाभिः संज्ञाभिः, **आहूय**, **द्विषच्छेषाणि** द्विषतः शत्रोरात्मना सैन्यनिरपेक्षेण गूढं निहतस्य शेषाणि परिवारान्, **घातयेद्**, विजिगीषुः । कारयेदिति पाठे हिंस्यादित्यर्थः ॥

**प्रकरणत्रयमित्थमस्मिन्नध्याये संकीर्णार्थं वर्णितम् ॥**

**व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।**
**अपूर्यताधिकरणमाबलीयससंज्ञितम् ॥**

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य नाञ्चिनाटिङ्कालतल्कवाग्रहारा-
भिजनस्य श्रीसीताम्बाशरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्याय-
गणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां
श्रीमूलाख्यायाम् आबलीयसे द्वादशेऽधिकरणे
पञ्चमोऽध्यायः योगातिसन्धानं, दण्डाति-
सन्धानम्, एकविजयश्च, आदित-
श्चत्वारिंशच्छततमः ॥
आबलीयसं द्वादशमधिकरणं समाप्तम् ॥

---

# दुर्गलम्भोपायः— त्रयोदशमधिकरणम् ।

१७१. प्रक. उपजापः ।

विजिगीषुः परग्राममवाप्तुकामः सर्वज्ञदैवतसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत्; परपक्षं चोद्वेजयेत् ।

सर्वज्ञख्यापनं तु— गृहगुह्यप्रवृत्तिज्ञानेन प्रत्यादेशो मुख्यानां; कण्टकशोधनापसर्पागमेन प्रकाशनं राजद्विष्टकारिणां; विज्ञाप्योपायनख्यापनमदृष्टसंसर्गविद्यासंज्ञादिभिः; विदेशप्रवृत्तिज्ञानं तदहरेव गृहकपोतेन मुद्रासंयुक्तेन ।

दैवतसंयोगख्यापनं तु— सुरुङ्गामुखेनाग्निचैत्यदैवतप्रतिमाच्छिद्रानुप्रविष्टैरग्निचैत्यदैवतव्यञ्जनैः सम्भाषणं पूजनं च; उदकादुत्थि-

अथ दुर्गलम्भोपायो नाम त्रयोदशमधिकरणं प्रस्तूयते । दुर्गस्य परकीयस्य प्राप्त्युपायोऽत्रोपदिश्यते । षट् चात्र सूत्राणि । तत्र प्रथमं सूत्रम्—

**उपजाप** इति । उपजापो भेद उच्यते इति सूत्रार्थः ।

**विजिगीषुरिति** । सः, परग्रामं शत्रोर्ग्रामनगरादिकं, अवाप्तुकामः, सर्वज्ञदैवतसंयोगख्यापनाभ्यां राज्ञः सर्वज्ञत्वख्यापनेन दैवतसाक्षात्कारख्यापनेन च, स्वपक्षम्, उद्धर्षयेद् उत्साहयेत् । परपक्षं च उद्वेजयेत् सन्त्रासयेत् ।

सर्वज्ञत्वख्यापनप्रकारमाह— **सर्वज्ञख्यापनं त्विति** । सर्वज्ञत्वख्यातिनिमित्तं तु, वक्ष्यत इति शेषः । **गृहगुह्यप्रवृत्तिज्ञानेनेत्यादि** । तदीयगृहगतं रहस्यमसाधुवृत्तं गूढपुरुषद्वारेण विदित्वा प्रत्याख्यानमित्यर्थः । **कण्टकेत्यादि** । कण्टकशोधनाधिकरणपञ्चमाध्यायोक्तरीत्यापसर्पोपदेशेन राजद्विष्टाचरितृन् गूढं विदित्वा तेषां प्रख्यापनमित्यर्थः । **विज्ञाप्योपायनख्यापनमिति** । राज्ञे निवेदनीयं यदुपायनं सेवार्थमन्यैरुपनीतं तस्य ख्यापनम् इदमीदृशमागमिष्यतीति प्रागेवाख्यानं, कैरुपायैः, अदृष्टसंसर्गविद्यासंज्ञादिभिः अदृष्टा अन्याविदिताः याः संसर्गविद्यासंज्ञाः नृत्तगीतवाद्यविद्यासूचनाः तदादिभिः, आदिपदाच्चारोपदेशादिग्रहणम् । **विदेशप्रवृत्तिज्ञानमिति** । दूरदेशवृत्तान्तज्ञानं, तदहरेव यस्मिन् दिने प्रवृत्तिसम्भवस्तस्मिन्नेव दिने, गृहकपोतेन गृह्यकेण पारावतेन, मुद्रासंयुक्तेन तदहर्वृत्तान्तशंसि लेख्यं मुद्रा तत्संयुक्तेन तद्धारकेण, तदहरेव गृहकपोतोपनीतेन विदेशवृत्तान्तलेख्येनेत्यर्थः ।

दैवतसंयोगमधिकृत्याह— **दैवतसंयोगख्यापनं त्विति** । दैवतसंयो

**तैर्वा नागवरुणव्यञ्जनैः सम्भाषा पूजनं च; रात्रावन्तरुदके समुद्रवालुकाकोशं प्रणिधायाग्निमालादर्शनम्; शिलाशिक्यावगृहीते प्लवके स्थानम्; उदकवस्तिना जरायुणा वा शिरोवगूढनासः पृषतान्त्रकुलीरनक्रशिंशुमारोद्रवसाभिर्वा शतपाक्यं तैलं नस्तःप्रयोगः तेन रात्रिगणश्चरति इत्युदकचरणानि; तैर्वरुणनागकन्यावाक्यक्रिया सम्भाषणं च; कोपस्थानेषु मुखादग्निधूमोत्सर्गः ।**

**तदस्य स्वविषये कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकक्षणिकगूढपुरुषाः साचिव्यकरास्तद्दर्शिनश्च प्रकाशयेयुः । परस्य विषये दैवतदर्शनं दिव्यकोशदण्डोत्पत्तिं च अस्य ब्रूयुः । दैवतप्रश्ननिमित्तवाय-**

---

गख्यातिनिमित्तं तु, वक्ष्यत इति शेषः । **सुरुङ्गामुखेने**त्यादि । अग्निचैत्यदैवतप्रतिमाछिद्रानुप्रविष्टैः अग्निचैत्यम् अग्निशरणं तस्मिन् या दैवतप्रतिमाः तच्छिद्रानुप्रविष्टैः । **उदकादि**त्यादि । नागवरुणव्यञ्जनैः सर्पदववेषैर्वरुणवेषैश्च । **रात्रावि**त्यादि । अन्तरुदके तटाकादिजलमध्ये, समुद्रवालुकाकोशं समुद्रं वालुकानामनिर्गमाय शणसूत्रसीवनादिना मुद्रितमुखं वालुकाकोशं सिकतापेशीम् । **शिलाशिक्ये**त्यादि । शिलाशिक्यावगृहीते शिलाबन्धवता शिक्येनाधस्ताद् धारिते । प्लवके उडुपादौ । स्थानं स्रोतोवेगानाकृष्यमाणतया स्थितिः । **उदके**त्यादि । उदकवस्तिना जलप्रवेशनिरोधकेन वस्त्रान्तेन, जरायुणा वा गर्भपेश्या वा, शिरोवगूढनासः शिरसा सहावच्छादिता नासा यस्य स तथाभूतः पुरुषः, पृषतान्त्रकुलीरनक्रशिंशुमारोद्रवसाभिर्वा बिन्दुमतः शम्बरमृगस्यान्त्रैः कुलीरकुम्भीरजलकपिजलमार्जाराणां वसाभिश्च सह शतपाक्यं तैलं शतकृत्वः पचनेन संस्कृतं तैलं, नस्तःप्रयोगः नासिकायां प्रयुज्यते निषिच्यते इत्यर्थः, तेन तथाविधतैलनस्तःप्रयोगेण युक्त इति शेषः, रात्रिगणश्चरति रात्रिगणान् जले सञ्चरति । इत्युदकचरणानि एवम्प्रकारा उदकसञ्चाराः । तैः उदकचरणैः, वरुणनागकन्यावाक्यक्रिया वरुणनागकन्यानां वाक्यक्रिया, सम्भाषणं च अन्योन्यभाषणं च । **कोपस्थानेष्वि**ति । कोपकारणेषु, मुखाद्, अग्निधूमोत्सर्गः औषधयोगमाययाग्निधूमयोर्वमनम् ।

**तदि**त्यादि । सर्वज्ञत्वदैवतसंयोगख्यातेर्यन्निमित्तजातमुक्तं, तत् । कार्तान्तिकेत्यादिपदे ईक्षणिको विप्रश्निकः । **दैवते**त्यादि । दैवतप्रश्नः शुभाशुभकर्मप्रश्नः निमित्तं शकुनं वायसः काकवाशितम् अङ्गविद्या अङ्गस्पर्शेन शुभाशुभ-

**माङ्गविद्यास्वप्नमृगपक्षिव्याहारेषु चास्य विजयं ब्रूयुः, विपरीतममित्रस्य सदुन्दुभिम्। उल्कां च परस्य नक्षत्रे दर्शयेयुः।**

**परस्य मुख्यान् मित्रत्वेनापदिशन्तो दूतव्यञ्जनाः स्वामिसत्कारं ब्रूयुः। स्वपक्षबलाधानं परपक्षप्रतिघातं च तुल्ययोगक्षेमममात्यानामायुधीयानां च कथयेयुः। तेषु व्यसनाभ्युदयावेक्षणमपत्यपूजनं च प्रयुञ्जीत।**

**तेन परपक्षमुत्साहयेद् यथोक्तं पुरस्तात्। भूयश्च वक्ष्यामः — साधारणगर्दभेन दक्षान्; लकुटशाखाहननाभ्यां दण्डचारिणः; कुलैलकेन चोद्विग्नान्; अशनिवर्षेण विमानितान्; विदुलेनावकेशिना**

---

ज्ञापकविद्या स्वप्नः प्रसिद्धः मृगपक्षिव्याहाराः मृगाणां पक्षिणां च रुतानि तेषु। अस्य विजिगीषोः। विपरीतं पराजयं भाविनम्। सदुन्दुभिम् आघोषणभेरीसहितम्। उल्काम् औपनिषदिकस्य द्वितीयाध्याये वक्ष्यमाणाम्।

**परस्येत्यादि।** स्वामिसत्कारं ब्रूयुः स्वामिना विजिगीषुणा कृतमात्मसत्कारं प्रपञ्चयेयुः, अर्थान्मुख्यानामपि स्वामिसत्कारलोभोत्पादनार्थम्। **स्वपक्षेत्यादि।** तुल्ययोगक्षेमं योगः स्वपक्षबलाधानपरपक्षप्रतिघाताभ्यां जनितो लाभः क्षेमः स्थितपालनं तदुभयं तुल्यं राज्ञा समानं तत्सहभोग्यत्वाद् यस्य तत् तथाभूतम्। **तेष्विति।** अमात्येषु आयुधीयेषु च, व्यसनाभ्युदयावेक्षणं व्यसने तत्प्रतीकारादिकरणम् अभ्युदये अभिनन्दनादिकरणं च, अपत्यपूजनं च मृतेष्वपि तेषु तदपत्यानां सत्करणं च, प्रयुञ्जीत।

यथोक्तेन प्रकारेण परपक्षान् परस्माद् भेदयेदित्याह — **तेन परपक्षमित्यादि।** **भूयश्च वक्ष्याम इति।** भेदनप्रकारमिति शेषः। तमेवाह — **साधारणेत्यादि।** दक्षान् येऽनलसकर्मकरणशीलास्तान्, साधारणगर्दभेन यथा हि सामान्यगर्दभः कर्म नित्यं तत्फलस्यानभिज्ञः करोति तथा यूयं परार्थे कर्म तत्फलानभिज्ञाः कुरुथेत्येवं गर्दभनिदर्शनेनेत्यर्थः, उत्साहयेदिति वर्तते। **लकुटेत्यादि।** दण्डचारिणः सैनिकान्, लकुटशाखाहननाभ्याम् उत्साहयेत्, लकुटो वेत्रयष्टिः शाखाहननं कुठारादि ताभ्यामुपमानीकृताभ्यां दीपयेत्, वेत्रकुठारवत् यूयं स्वकर्म परस्मिंस्तत्फलमनुभवति स्वयमननुभवन्त एव कुर्वन्तोऽचेतनसधर्माण इत्युपालम्भेन भेदयेदित्यभिप्रायः। **कुलेत्यादि।** उद्विग्नान् परस्माद् भीतान्, कुलैलकेन स्वयूथभ्रष्टेन जीवितनिराशेन मेषेण, तदुपमानी-

वायसापिण्डेन कैतवजमेघेनेति विहताशान; दुर्भगालङ्कारेण द्वेषिणेति पूजाफलान्; व्याघ्रचर्मणा मृत्युकूटेन चोपहितान्; पीलुविखादनेन करकयोष्ट्र्या गर्दभीक्षीराभिमन्थनेनेति ध्रुवापकारिणः इति ।

प्रतिपन्नान् अर्थमानाभ्यां योजयेत् । द्रव्यभक्तच्छिद्रेषु चैनान् द्रव्यभक्तदानैरनुगृह्णीयात् । अप्रतिगृह्णतां स्त्रीकुमारालङ्कारानभिहरेयुः ।

---

करणेनेत्यर्थः, उत्साहयेत् । अशनिवर्षेण विमानितानिति । ये परेण विमानितास्तान्, अशनिपाततुल्यया विमाननया युष्माभिर्बहुमानार्थिभिः परस्मात् प्राप्तेति कथनेनोत्साहयेदित्यर्थः । विदुलेनेति । वञ्जुलेन, अफलेन, वाशब्दः पक्षान्तरे, आयसपिण्डेन अयोमयेन भक्षणानर्हेण भक्तपिण्डेन, कैतवजमेघेन मिथ्यासृष्टेनानुदकदायिना मेघेन, इतिशब्दः प्रकारे । एवञ्जातीयेन वस्तुना परमुपमायेति शेषः, विहताशान् परभग्नमनोरथान्, उत्साहयेत् । ये कटकाङ्गुलीयकादिदानेन क्रियमाणां पूजां स्वकर्मणः फलं मन्यन्ते तान् परदत्तालङ्कारदुर्भगत्वकथनेन 'कृते कर्मणि अप्रीतः परः' इति कथनेन भेदकप्रकारान्तरकथनेन च भेदयेदित्याह — दुर्भगालङ्कारेणेत्यादि । व्याघ्रचर्मणेति । उपहितान् ये उपहिताः परप्रयुक्तयोपधया प्रतारिताः तान्, व्याघ्रचर्मणेति व्याघ्रस्येव चर्मास्य व्याघ्रचर्मा तेन, — 'परो निर्दोषमदोषीकरणव्यसनितया हिंस्रत्वाद् व्याघ्रस्वभावः' इति परस्य व्याघ्रौपम्यकथनेनेत्यर्थः । व्यालचर्मणेति पाठे व्यालो हिंस्रसत्त्वः । व्याघ्रच्छद्मनेति वा पाठः कृतकव्याघ्रः पर इति कथनेनेति तदर्थः । मृत्युकूटेन च परः स्वकादेव दोषात् कपटमृत्युरिति कथनेन चेत्यर्थः, उत्साहयेत् । पीलिवत्यादि । ध्रुवापकारिणः ये परस्य नित्यापकर्तारस्तान्, पीलुविखादनेन पील्वृक्षविशेषफलं तिक्तरसं तस्य विखादनेन भक्षणेन — यथा पीलुभक्षणं तिक्तरसत्वादुद्वेजकं तद्वत् परसेवनमिति कथनेनेत्यर्थः, करकया तिक्तरसः शाकभेदः करका तया, उष्ट्र्या तिक्तरस ओषधिभेद उष्ट्री तया ताभ्यां सह परमुद्वेजकत्वेन धर्मेणोपमायेत्यर्थः, गर्दभीक्षीराभिमन्थनेन परोपसर्पणस्य तत्समानत्वकथनेनेत्यर्थः, इतिशब्दः प्रकारान्तरार्थः, उत्साहयेत् । अनिष्पत्त्य परस्यापकुर्वतां तस्मान्निष्पतनार्थमयमुपदेशः । इतिशब्दः प्रकारवर्णनसमाप्तौ ।

प्रतिपन्नानिति । उत्साहनाभ्युपगन्तॄन्, अर्थमानाभ्यां योजयेत् । धनान्नसंकटेषु चैषां तद्दानैरुपकुर्यादित्याह — द्रव्यभक्तेत्यादि । दीयमानं द्रव्य-

दुर्भिक्षस्तेनाटव्युपघातेषु च पौरजानपदानुत्साहयन्तः सत्रिणो ब्रूयुः — 'राजानमनुग्रहं याचामहे ; निरनुग्रहाः परत्र गच्छामः' इति ।

तथेति प्रतिपन्नेषु द्रव्यधान्यपरिग्रहैः ।
साचिव्यं कार्यमित्येतदुपजापाद्भुतं महत् ॥

इति कौटलीयार्थशास्त्रे दुर्गलम्भोपाये त्रयोदशे-
ऽधिकरणे प्रथमोऽध्यायः उपजापः,
आदित एकचत्वारिंशच्छततमः ॥

---

भक्तं गौरवभङ्गभयादप्रतिगृह्णतां स्त्रीधार्याणि कुमारधार्याणि च भूषणानि सत्कारपूर्वं दद्युरित्याह — अप्रतिगृह्णतामित्यादि ।

दुर्भिक्षेत्यादि । उत्साहयन्तो ब्रूयुः भेदनार्थं कथयेयुः ।

तथेतिप्रतिपन्नेष्विति । तथा कुर्म इति कृतयथोक्तवचनाङ्गीकारेषु अर्थात् पौरजानपदेषु स्वामिसकाशादलब्धानुग्रहेषु सत्सु, द्रव्यधान्यपरिग्रहैः धनधान्यवासस्थलानां दानैः, साचिव्यं कार्यम् अनुग्रहः कर्तव्यो विजिगीषुणा । इत्येतत् महत् प्रशस्तम्, उपजापाद्भुतम् उपजापवैचित्र्यम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायां दुर्गलम्भोपाये त्रयोदशे-
ऽधिकरणे प्रथमोऽध्यायः उपजापः,
आदित एकचत्वारिंशच्छततमः ॥

१७२. प्रक. योगवामनम् ।

मुण्डो जटिलो वा पर्वतगुहावासी चतुर्वर्षशतायुः ब्रुवाणः प्रभूतजटिलान्तेवासी नगराभ्याशे तिष्ठेत् । शिष्याश्चास्य मूलफलोपगमनैरमात्यान् राजानं च भगवद्दर्शनाय योजयेयुः । समागतश्च राज्ञा पूर्वराजदेशाभिज्ञानानि कथयेत् 'शते शते च वर्षाणां पूर्णेऽहमग्निं प्रविश्य पुनर्बालो भवामि ; तदिह भवत्समीपे चतुर्थमग्निं प्रवेक्ष्यामि ; अवश्यं मे भवान् मानयितव्यः ; त्रीन् वरान् वृणीष्व इति । प्रतिपन्नं ब्रूयात्—सप्तरात्रमिह सपुत्रदारेण प्रेक्षाप्रहवणपूर्वं वस्तव्यम् इति । वसन्तमवस्कन्देत ।

मुण्डो वा जटिलो वा स्थानिकव्यञ्जनः प्रभूतजटिलान्तेवासी बस्तशोणितदिग्धां वेणुशलाकां सुवर्णचूर्णेनावलिप्य वल्मीके निदध्याद् उपजिह्विकानुसरणार्थं, स्वर्णनालिकां वा । ततः सत्री राज्ञः कथयेत् — असौ सिद्धः पुष्पितं निधिं जानाति' इति । स राज्ञा पृष्टः 'तथा' इति ब्रूयात् । तच्चाभिज्ञानं दर्शयेत् । भूयो वा हिरण्य-

---

**योगवामनमिति** सूत्रम् । योगेन कपटोपायेन वामनं परस्य तद्दुर्गान्निष्क्रामणमुच्यत इति सूत्रार्थः ।

**मुण्डो जटिलो** वेत्यादि । चतुर्वर्षशतायुः ब्रुवाणः चत्वारि वर्षशतान्यात्मनो वयांसि गतानीति कथयन् । प्रभूतजटिलान्तेवासी प्रचुराश्च जटाधराश्च शिष्या यस्य स तथाभूतः । **शिष्याश्चे**त्यादि । मूलफलोपगमनैः मूलानां फलानां चाभ्यवहारार्थमुपहृतैः । **समागतश्चे**त्यादि । पूर्वराजदेशाभिज्ञानानि पूर्वेषां राज्ञां देशानां च चिह्नानि । **शते शते चे**त्यादि । मानयितव्यः वरदानेन सम्भावयितव्यः । इति कथयेदिति सम्बन्धः । **प्रतिपन्नमि**त्यादि । कृतयथोक्ताभ्युपगमम् । इह मदन्तिके । प्रेक्षाप्रहवणपूर्वं प्रेक्षा रूपकाभिनयादिदर्शनं प्रहवणं तुष्टिभोजनादि तत्पुरस्सरम् । अवस्कन्देत हन्यात् ।

**मुण्डो वे**त्यादि । स्थानिकव्यञ्जनः स्थानविशेषाध्यक्षः स्थानिकः तद्व्यञ्जनः । बस्तशोणितदिग्धां छागरुधिरलिप्ताम् । उपजिह्विकानुसरणार्थम् उपजिह्विका वम्री तदनुसरणार्थं तच्चाकृत्रिमत्वप्रतीत्यर्थम् । स्वर्णनालिकां सुवर्णयुक्तं वेणुभाजनं वा । **ततः सत्री**त्यादि । पुष्पितं फलितावस्थापूर्वरूपभूतां पुष्पितावस्थां प्राप्तम् । तच्चाभिज्ञानं पूर्वोक्तं सुवर्णदिग्धवेणुशलाकादिरूपं चिह्नम् । **भूयो वे**त्यादि । भूयो बहुतरम् । अन्तः वल्मीकस्यान्तर्भागे । प्रणिपातसाध्य,

मन्तराधाय ब्रूयाच्चैनं—'नागरक्षितोऽयं निधिः प्रणिपातसाध्यः इति। प्रतिपन्नं ब्रूयात् — सप्तरात्रम्' इति समानम्।

स्थानिकव्यञ्जनं वा रात्रौ तेजनाग्नियुक्तमेकान्ते तिष्ठन्तं सत्रिणः क्रमाभिनीतं राज्ञः कथयेयुः—'असौ सिद्धः सामेधिकः' इति। तं राजा यमर्थं याचेत, तमस्य करिष्यमाणः, 'सप्तरात्रम्' — इति समानम्।

सिद्धव्यञ्जनो वा राजानं जम्भकविद्याभिः प्रलोभयेत्। 'तं राजा' इति समानम्।

सिद्धव्यञ्जनो वा देशदेवतामभ्यर्हितामाश्रित्य प्रहवणैरभीक्ष्णं प्रकृतिमुख्यानभिसंवास्य क्रमेण राजानमतिसन्दध्यात्।

जटिलव्यञ्जनमन्तरुदकवासिनं वा सर्वश्वेतं तटसुरुङ्गाभूमिगृहापसरणं वरुणं नागराजं वा सत्रिणः क्रमाभिनीतं राज्ञः कथयेयुः। 'तं राजा' इति समानम्।

---

नागाराधनसाधनीयः। **सप्तरात्रमिति समानमिति**। "सप्तरात्रमिह सपुत्रदारेण प्रेक्षाप्रहवणपूर्वं वस्तव्यमिति ब्रूयाद्, वसन्तं चावस्कन्देते"ति यत् पूर्वमभिहितं तदिहापि योज्यमित्यर्थः।

**स्थानिकव्यञ्जनं वेत्यादि**। तेजनाग्नियुक्तम् औपनिषदिकाद्वितीयाध्यायोक्तेन तेजनयोगेन स्वगात्राग्निप्रज्वलनाद्भुतप्रदर्शकमित्यर्थः। तेजनेत्यादिविशेषणद्वयं तापसत्वविश्वासार्थम्। सामेधिकः भाविसमृद्धीक्षणिकः।

**सिद्धव्यञ्जनो वा राजानमित्यादि**। जम्भकविद्याभिः मायाविद्याभिः। **तं राजेति समानमिति**। "तं राजा यमर्थं याचेत, तमस्य करिष्यमाणः सप्तरात्रमिह सपुत्रदारेण प्रेक्षाप्रहवणपूर्वं वस्तव्यमिति ब्रूयाद्, वसन्तं चावस्कन्देते"ति प्रागुक्तमिहापि योज्यमित्यर्थः।

**सिद्धव्यञ्जनो वा देशदेवतामित्यादि**। अभ्यर्हितां देवतासु मध्ये विशिष्टाम्। प्रकृतिमुख्यान् अमात्यादीन्। अभिसंवास्य संस्तवेनाभिमुखीकृत्य। क्रमेण प्रकृतिमुख्यद्वारेणेत्यर्थः। अतिसन्दध्याद् अभिसंवास्य वञ्चयेत्।

**जटिलव्यञ्जनमित्यादि**। अन्तरुदकवासिनम् उदकचरणविधयोक्कान्तर्वासशीलम्। सर्वश्वेतं सर्वात्मना श्वेतं, सर्वेषां श्वेततरं वा, 'गुणात् तरेण तरलोपश्चे'ति समासः। सर्वश्वेतत्वं च देवतावर्णविश्वासार्थम्। तटसुरुङ्गा-

**जनपदान्तेवासी सिद्धव्यञ्जनो वा राजानं शत्रुदर्शनाय योजयेत्। प्रतिपन्नं बिम्बं कृत्वा शत्रुमावाहयित्वा निरुद्धे देशे घातयेत्।**

**अश्वपण्योपयाता वैदेहकव्यञ्जनाः पण्योपायननिमित्तमाहूय राजानं पण्यपरीक्षायामासक्तमश्वव्यतिकीर्णं वा हन्युः, अश्वैश्च प्रहरेयुः।**

**नगराभ्याशे वा चैत्यमारुह्य रात्रौ तीक्ष्णाः कुम्भेषु नालीन् वा विदलानि धमन्तः—'स्वामिनो मुख्यानां वा मांसानि भक्षयिष्यामः पूजा नो वर्तताम्' इत्यव्यक्तं ब्रूयुः। तदेषां नैमित्तिकमौहूर्तिकव्यञ्जनाः ख्यापयेयुः।**

**मङ्गल्ये वा ह्रदे तटाकमध्ये वा रात्रौ तेजनतैलाभ्यक्ता नागरूपिणः शक्तिमुसलान्ययोमयानि निष्पेषयन्तस्तथैव ब्रूयुः। ऋक्षचर्म-**

भूमिगृहापसरणं तटान्तर्विवरेण वा भूमिगृहेण वा अपसरणं निर्गमनं यस्य तं तथाभूतम्। क्रमाभिनीतं क्रमेणाभिमुख्यं नीतम्। **तं राजेति समानमिति।** 'तं राजा स्वमर्थं याचेत तमस्य कारेष्यमाण' इत्यादिना 'वसन्तमवस्कन्दत' इत्येतदन्तेनोक्तमिह योज्यमित्यर्थः।

**जनपदेत्यादि।** जनपदान्तेवासी जनपदान्तो जनपदसीमा शत्रुविजिगीषुजनपदयोः सन्धिः तत्र वास्तव्यः। योजयेद् घटनां कुर्यात्। **प्रतिपन्नमिति।** अङ्गीकृतशत्रुदर्शनं राजानं, बिम्बं कृत्वा पूर्वसङ्केतितमाह्वानार्थं चिह्नं ध्वनिविशेषादिरूपं कृत्वा, शत्रुम्, आवाहयित्वा आनाय्य, निरुद्धे सर्वतः प्रतिरुद्धगतौ देशे, घातयेत्, अर्थाच्छत्रुणा।

**अश्वेत्यादि।** वैदेहकव्यञ्जनाः अश्वविक्रेतृवेषाः। पण्योपायननिमित्तम् अश्वरूपाणां पण्योपायनानां दर्शनार्थम्। आसक्तं तत्परम्। अश्वव्यतिकीर्णं वा अश्वसम्बाधगतं वा।

**नगराभ्याशे वेत्यादि।** चैत्यम् उद्देशद्रुमम्। नालीन् धान्यकाण्डान्। विदलानि पाटितदारुशकलानि। धमन्तः धूपयन्तः। अव्यक्तं मानुषीयत्वव्यक्तिर्यथा न भवेत् तथा। **तदेषामित्यादि।** तद् वचनम्।

**मङ्गल्ये वेत्यादि।** मङ्गल्ये मङ्गलनिमित्ते। ह्रदे अगाधे जलाशये। तेजनतैलाभ्यक्ताः शरतैलाभ्यक्ताः। तथैव 'स्वामिनो मुख्यानां मांसानि भक्षयिष्यामः' इत्युक्तेन प्रकारेणैव। **ऋक्षेत्यादि।** ऋक्षचर्मकञ्चुकिनः भल्लूकत्वक्-

कञ्चुकिनो वा अग्निधूमोत्सर्गयुक्ता रक्षोरूपं वहन्तस्त्रिरपसव्यं नगरं कुर्वाणाः श्वसृगालवाशितान्तरेषु तथैव ब्रूयुः। चैत्यदैवतप्रतिमां वा तेजनतैलेनाभ्रपटलच्छन्नेनाग्निना वा रात्रौ प्रज्वाल्य तथैव ब्रूयुः। तदन्ये ख्यापयेयुः।

दैवतप्रतिमानामभ्यर्हितानां वा शोणितेन प्रस्रावमतिमात्रं कुर्युः। तदन्ये दैवरुधिरसंस्रावे सङ्ग्रामे पराजयं ब्रूयुः।

सन्धिरात्रिषु श्मशानप्रमुखे वा चैत्यमूर्ध्वभक्षितैर्मनुष्यैः प्ररूपयेयुः। ततो रक्षोरूपी मनुष्यकं याचेत। यश्चात्र शूरवादिकोऽन्यतमो वा द्रष्टुमागच्छेत् तमन्ये लोहमुसलैर्हन्युः, यथा रक्षोभिर्हत इति ज्ञायेत। तदद्भुतं राज्ञः तद्दर्शिनः सत्रिणश्च कथयेयुः। ततो नैमित्तिकमौहूर्तिकव्यञ्जनाः शान्तिं प्रायश्चित्तं ब्रूयुः — 'अन्यथा महदकुशलं राज्ञो देशस्य च' इति। प्रतिपन्नम् 'एतेषु सप्तरात्रमेकैकमन्त्रबलिहोमं स्वयं राज्ञा कर्तव्यम्' इति ब्रूयुः। ततः समानम्।

निर्मितकञ्चुकधारिणः। अपसव्यं कुर्वाणाः अप्रदक्षिणं परिगच्छन्तः। श्वसृगालवाशितान्तरेषु कुक्कुरजम्बुकविरावमध्येषु। शिवासृगालेत्यपपाठः। तथैव पूर्वोक्तप्रकारेणैव। चैत्यदैवतप्रतिमां वेत्यादि। अभ्रपटलच्छन्नेन अभ्रकधातुमये छदिषि अदृश्यतया स्थितेन। तथैव 'स्वामिनो मुख्यानां वेत्यादिरीत्या। तत तथावचनम्। अन्ये सत्रिणः।

दैवतप्रतिमानामित्यादि। शोणितेन मेषादिरक्तेन। प्रस्रावं प्रस्रुतिम्। कुर्युः भावयेयुः। तदित्यादि। तदन्ये प्रस्रावोत्पादकातिरिक्ताः सत्रिणः।

सन्धीत्यादि। सन्धिरात्रिषु पर्वनिशासु। चैत्यं चिताङ्कम्। ऊर्ध्वभक्षितैः पूर्वकायभक्षितैः। मनुष्यैः उपलक्षितामिति शेषः। प्ररूपयेयुः दर्शयेयुः। तत इत्यादि। याचेत भक्षणार्थम्। 'मनुष्ययाचिनं राक्षसमहं हनिष्यामी'ति यदि यः कश्चित् शूरवादेनोपगच्छेत्, तमन्ये सत्रिणो लोहमुसलैः स्वयं हन्युः, 'रक्षोभिः स हत' इति च ज्ञापयेयुरित्याह — यश्चात्रेत्यादि। तदित्यादि। तद् अद्भुतं शूरपुरुषहननाश्चर्यम्। ततो नैमित्तिकेत्यादि। प्रतिपन्नं अभ्युपगतशान्तिप्रायश्चित्तानुष्ठानम्। एतेषु पूर्वोक्तेषु दुर्निमित्तेषु विषये। एकैकबलिमन्त्रहोमम् एकैकस्य दुर्निमित्तस्यैकैकं बलिमन्त्रहोमं, बलिरुपहारः मन्त्रो मन्त्रजपः होमोऽग्नावाहुतिः एषां समाहारो बलिमन्त्रहोमम्। ततः समानमिति। 'तत्र वसन्तमवस्कन्देते'त्ययमर्थः प्राग्वद् द्रष्टव्य इत्यर्थः।

**एतान् वा योगानात्मनि दर्शयित्वा प्रतिकुर्वीत परेषामुपदेशार्थम्। ततः प्रयोजयेद् योगान्। योगदर्शनप्रतीकारेण वा कोशाभिसंहरणं कुर्यात्।**

**हस्तिकामं वा नागवनपाला हस्तिना लक्षण्येन प्रलोभयेयुः, प्रतिपन्नं गहनमेकायनं वातिनीय घातयेयुः, बद्ध्वा वापहरेयुः।**

**तेन मृगयाकामो व्याख्यातः।**

**द्रव्यस्त्रीलोलुपमाढ्यविधवाभिर्वा परमरूपयौवनाभिः स्त्रीभिर्दायादनिक्षेपार्थमुपनीताभिः सत्रिणः प्रलोभयेयुः। प्रतिपन्नं रात्रौ सत्रिच्छन्नाः समागमे शस्त्ररसाभ्यां घातयेयुः।**

य एते योगा अभिहिताः तान् स्वमहायानामुपदेशार्थम् आत्मनि शुष्केष्टिन्यायेन प्रथमं दर्शयित्वा प्रतिविदध्यात्, पश्चात तु उपदिष्टस्वीयपुरुषसहायः शत्रौ प्रयोजयेदित्याह — **एतान् वा योगा**नित्यादि। **योगदर्शनप्रतीकारेण वा कोशाभिसंहरणं कुर्या**दिति। इदं वाक्यं कोशाभिसंहरणप्रकरणपठितं व्याख्यातचरम्। अस्येह पाठस्तु — योगानां प्रयोगप्रतिविधानयोः कोशाभिसंवर्धनाभ्युपायता पूर्वोक्तां स्मारयितुम्।

**हस्तिकामं** वेति। गजलोलुभं शत्रुं, नागवनपालाः विजिगीषुपक्ष्याः, हस्तिना लक्षण्येन प्रशस्तलक्षणवता, प्रलोभयेयुः, तथाविधहस्तिग्रहणाभिलाषं तस्य जनयेयुरित्यर्थः। प्रतिपन्नम् अभ्युपगतप्रलोभनं तं, गहनं दुष्प्रवेशं वनम्, एकायनं वा एकमात्रगम्यतया सङ्कटं मार्गं वा, अतिनीय अतिसन्धानेन नीत्वा, घातयेयुः, बद्ध्वा वापहरेयुः अघातनपक्षे रज्जुभिर्बद्धं कृत्वा विजिगीषोरन्तिकं नयेयुः, यथा — प्रतिज्ञायौगन्धरायणे वत्सराजं सालङ्कायनादयः प्रद्योतभृत्याः स्वस्वाम्यन्तिकमिति भावः।

हस्तिकामविषयोक्तं मृगयाकामेऽतिदिशति— **तेने**त्यादि।

**द्रव्यस्त्रीलोलुप**मिति। धनकामं स्त्रीकामुकं वा, आढ्यविधवाभिः, वैधव्यं प्राप्ताभिर्धनिकाभिः, परमरूपयौवनाभिः स्त्रीभिः अविधवानाढ्याभिर्वनिताभिः, दायादनिक्षेपार्थम् उपनीताभिः दायादापहृतनिक्षेपप्रतिलम्भार्थव्यवहारवशादन्तिकं प्रापिताभिरित्यर्थः, सत्रिणः प्रलोभयेयुः। प्रतिपन्नम् अभ्युपगतप्रलोभनं, रात्रौ, सत्रिच्छन्नाः सत्रिसम्बन्धिनो गूढपुरुषाः, समागमे समागमप्रसङ्गे, शस्त्ररसाभ्याम् आयुधप्रहारविषप्राशनाभ्यां, घातयेयुः।

सिद्धप्रव्रजितचैत्यस्तूपदैवतप्रतिमानामभीक्ष्णाभिगमनेषु वा भूमिगृहसुरुङ्गागूढभित्तिप्रविष्टास्तीक्ष्णाः परमभिहन्युः ।

येषु देशेषु याः प्रेक्षाः प्रेक्षते पार्थिवः स्वयम् ।
यात्राविहारे रमते यत्र क्रीडति वाम्भसि ॥
चाटूक्त्यादिषु कृत्स्नेषु यज्ञप्रहवणेषु वा ।
सूतिकाप्रेतरोगेषु प्रीतिशोकभयेषु वा ॥
प्रमादं याति यस्मिन् वा विश्वासात् स्वजनोत्सवे ।
यत्रास्यारक्षिसञ्चारो दुर्दिने सङ्कुलेषु वा ॥
विप्रस्थाने प्रदीप्ते वा प्रविष्टे निर्जनेऽपि वा ।
वस्त्राभरणमाल्यानां फेलाभिः शयनासनैः ॥
मद्यभोजनफेलाभिस्तूर्यैर्वाभिहतैः सह ।
प्रहरेयुररींस्तीक्ष्णाः पूर्वप्रणिहितैः सह ॥

---

सिद्धेत्यादि । सिद्धानां साधूनां प्रव्रजितानां भिक्षूणां चैत्यस्तूपदैवतप्रतिमानां च चैत्येषु देवालयेषु स्तूपेषु तद्विमानेषु च वर्तमानानां देवताप्रतिमानां च, अभीक्ष्णाभिगमनेषु वा पौनःपुनिकेषु सेवार्थगमनेषु वा, भूमिगृहसुरुङ्गागूढभित्तिप्रविष्टाः, तीक्ष्णाः, परं शत्रुम्, अभिहन्युः ॥

विधिशेषं पञ्चभिः श्लोकैरेकान्वयेनाह— येष्वित्यादि । पार्थिवः, येषु देशेषु, याः प्रेक्षाः नृत्तानि, स्वयं प्रेक्षते, तेषु तासु चेति शेषः । यत्र यात्राविहारे, रमते व्यासज्जते तत्रेति शेषः । यत्र वा अम्भसि क्रीडति रमते, तत्रेति शेषः । चाटूक्त्यादिष्विति पाठः चाटूक्तिः स्तुतिवादस्तदादिषु, विगुक्त्यादिष्वित्यपि पाठः । कृत्येषु एतत्स्थाने सर्वेष्विति क्वचित् पाठः । यज्ञप्रहवणेषु वा यज्ञेषु तुष्टिभोजनेषु च, सूतिकाप्रेतरोगेषु प्रीतिशोकभयेषु वा प्रसवमरणरोगनिमित्तासु हर्षदुःखभीतिषु वा, यस्मिन् वा स्वजनोत्सवे, विश्वासात् प्रमादं याति, तस्मिन्निति शेषः । यत्र, अस्य राज्ञः, अरक्षिसञ्चारः रक्षिपुरुषरहितः सञ्चारो भवति, तत्रेति शेषः । दुर्दिने अतिवर्षे, संकुलेषु वा आकीर्णेषु वा, विप्रस्थाने विमार्गतः प्रस्थाने, प्रदीप्ते वा नगरादावग्निसन्दीपने वा, प्रविष्टे निर्जनेऽपि वा विजनदेशप्रवेशे वा, तीक्ष्णाः, अरीन् शत्रून् प्रहरेयुः, कथम्भूताः, वस्त्राभरणमाल्यानां फेलाभिः उपभुक्तशेषैः, शयनासनैः, मद्यभोजनफेलाभिः मद्यभोजनोच्छिष्टैश्च, प्रीता इति शेषः, पुनः कीदृशाः, अभि-

यथैव प्रविशेयुश्च द्विषतः सत्रहेतुभिः ।
तथैव चापगच्छेयुरित्युक्तं योगवामनम् ॥

इति कौटलीयार्थशास्त्रे दुर्गलम्भोपाये त्रयोदशाधिकरणे द्वितीयोऽध्यायः योगवामनम्,
आदितो द्विचत्वारिंशच्छततमः ॥

---

हतैः तूर्यैः सह आह्वानार्थं शब्दापितैः संज्ञातूर्यैः सहिताः, पुनः कथम्भूताः, पूर्वप्रणिहितैः सह पूर्वनियुक्तैर्गूढपुरुषैः संज्ञातूर्यशब्दाहूतैर्दत्तसाहाय्या इत्यर्थः ॥

यथैवेति । येनैव प्रकारेण महाप्रणिधानदानलक्षणेन, सत्रहेतुभिः छद्मनिमित्तैरुपलब्धैः, द्विषतः शत्रून्, प्रावेशेयुः अर्थात् सत्रिणः, तथैव तेनैव प्रकारेण, अपगच्छेयुः द्विषद्भ्योऽपसरेयुः, अन्यथा हि द्विषद्भिर्गृहीताः स्युरिति भावः । इति योगवामनम् उक्तम् उपदिष्टम् ॥

इति कौटलीयार्थशास्त्रव्याख्यायां दुर्गलम्भोपाये त्रयोदशेऽधिकरणे द्वितीयोऽध्यायः योगवामनम्,
आदितो द्विचत्वारिंशच्छततमः ॥

१७३. प्रक. अपसर्पप्रणिधिः ।

**श्रेणीमुख्यमाप्तं निष्पातयेत् । स परमाश्रित्य पक्षापदेशेन स्वविषयात् साचिव्यकरणसहायोपादानं कुर्वीत । कृतापसर्पोपचयो वा परमनुमान्य स्वामिनो दूष्यग्रामं वीतहस्त्यश्वं दूष्यामात्यं दण्डमाक्रन्दं वा हत्वा परस्य प्रेषयेत् । जनपदैकदेशं श्रेणीमटवीं वा सहायोपादानार्थं संश्रयेत । विश्वासमुपगतः स्वामिनः प्रेषयेत् । ततः स्वामी हस्तिबन्धनमटवीघातं वापदिश्य गूढमेव प्रहरेत् ।**

**एतेनामात्याटविका व्याख्याताः ।**

**शत्रुणा मैत्रीं कृत्वा अमात्यानवक्षिपेत् । ते तच्छत्रोः प्रेष-**

अपसर्पप्रणिधिरिति सूत्रम् । अपसर्पो गूढपुरुषः तस्य प्रणिधानं परविषये निवासनमुच्यत इति सूत्रार्थः ।

**श्रेणीमुख्यमिति** । तम्, आप्तं प्रत्ययितं, निष्पातयेद् द्वेषहेत्वपदेशेनात्मसकाशान्निष्पातितं कुर्यात्, अर्थाद् विजिगीषुः । **स** इति । मिथ्यानिष्पातितः श्रेणीमुख्यः, परं शत्रुम्, आश्रित्य, पक्षापदेशेन परपक्षार्थत्वापदेशेन, स्वविषयाद् विजिगीषुदेशात्, साचिव्यकरणसहायोपादानं साहाय्यकरणार्थानां सहायानां संग्रहणं, कुर्वीत । **कृतापसर्पोपचयो वेति** । एवं सम्पादितबह्वपसर्पसहायः, परम् अनुमान्य शत्र्वनुमतिग्रहणपूर्वं, स्वामिनो विजिगीषोः, दूष्यग्रामं दूष्यवर्गं, वीतहस्त्यश्वम् असारहस्त्यश्वं, दूष्यामात्यं दूष्यैरमात्यैर्युक्तं, दण्डं सैन्यम्, आक्रन्दं वा पृष्ठमित्रं वा, हत्वा जित्वा, परस्य प्रेषयेत् । **जनपदैकदेशमिति** । जनपदस्यैकदेशम् अर्थात् परकीयं, श्रेणीम्, अटवीं वा आटविकान् वा, सहायोपादानार्थं स्वामिसहायत्वेन स्वीकरणार्थं, संश्रयेत गूढमनुवर्तेत । तथा सहायतयोपात्तेषु तेषु आत्मनो विश्वासे जाते तान् स्वामिनोऽन्तिके साह्यार्थं प्रेषयेदित्याह — **विश्वासमुपगत इत्यादि** । ईदृशसहायलाभानन्तरं स्वामी निजवनहस्तिबन्धनं वननाशनं वा निमित्तमपदिश्य परं तदविदितात्मसन्नाह एव सन् प्रहरेदित्याह — **ततः स्वामीत्यादि** ।

अनया दिशामात्याटविकानामपि अपसर्पतया परविषये प्रणिधानमूहनीयमित्याह — **एतेनेत्यादि** ।

अपसर्पप्रणिधानस्य प्रकारान्तरमाह — **शत्रुणेति** । स्वशत्रुणा सह, मैत्रीं कृत्वा मित्रभावमभिनीय, अमात्यान् स्वीयान्, अवक्षिपेत् धिक्कुर्याद्

**येयुः — 'भर्तारं नः प्रसादय' इति । स यं दूतं प्रेषयेत्, तमुपालभेत — 'भर्ता ते मामंमात्यैर्भेदयति ; न च पुनरिहागन्तव्यम्' इति । अथैकममात्यं निष्पातयेत् : स परमाश्रित्य योगापसर्पापरक्तदूष्यानशक्तिमतः स्तेनाटविकानुभयोपघातकान् वा परस्योपहरेत् । आप्तभावोपगतः प्रवीरपुरुषोपघातमस्योपहरेत् । अन्तपालमाटविकं दण्डचारिणं वा— 'दृढमसौ चासौ च ते शत्रुणा सन्धत्त' इति । अथ पश्चादभित्यक्तशासनैरेनान् घातयेत् ।**

**दण्डबलव्यवहारेण वा शत्रुमुद्योज्य घातयेत् ।**

विजिगीषुः । ते इति । अमात्याः, तच्छत्रोः मित्रीकृतस्य शत्रोः, प्रेषयेयुः, अर्थाद् दूतम् । दूतनिवेदनीयं सन्देशमाह — **भर्तारं न** इति । अस्मासु कुपितमिति शेषः, प्रसादय इति सान्दर्शयेति शेषः । **स** इति । अमात्यप्रार्थितः शत्रुः, यं दूतं, प्रेषयेद् विजिगीषुप्रसादनार्थं, तम्, उपालभेत निन्देत्, अर्थाद् विजिगीषुः, किमुक्त्वा, 'भर्ता ते माम् अमात्यैः भेदयति, पुनः, इह मदन्तिके, नचागन्तव्यम्, अर्थाद् भर्तृसन्देशहरेण त्वया' इति । अमात्यभेदनस्य सत्यत्वभ्रमजननानुकूलमाह **अथेति** । अनन्तरम्, एकमवक्षिप्तेष्वन्यतमम्, अमात्यं, निष्पातयेत् स्वान्तिकान्निरस्तं कुर्यात् । **स** इति । निष्पातितः, परम् आश्रित्य, योगापसर्पापरक्तदूष्यान् स्वामिप्रणिहितान् कपटापसर्पान् स्वामिन्यपरागं प्राप्तान् स्वामिदूष्यांश्च, अशक्तिमतः, स्तेनाटविकान्, उभयोपघातकान् वा, परस्य उपहरेद् 'इमे तव सहाया मया सम्पादिता' इति वदन् उपनयेत् । आप्तभावोपगतः प्रत्ययितत्वापन्नः, अस्य शत्रोः, प्रवीरपुरुषोपघातं प्रवीरपुरुषनाशम्, उपहरेत् प्रापयेत् । कथमुपहरेदित्याह — **अन्तपालमिति** । तम्, आटविकम् अटवीपालं, दण्डचारिणं वा सैनिकं वा, दुष्टत्वेन सूचयेदित्यध्याहर्तव्यम् । किमुक्त्वा, दृढम् असौ च असौ च अन्तपालादिः, ते शत्रुणा, सन्धत्त, इति उक्त्वेति शेषः । **अथेति** । किञ्च, पश्चाद् उत्तरकाले, अभित्यक्तशासनैः अभित्यक्तो विजिगीषुवध्यः तद्धस्तार्पितैर्विजिगीष्वन्तपालादिपरस्परमैत्रीप्रकाशकैः कूटलेख्यैः करणभूतैः, एनान् घातयेत् कूटलेख्यान्यभित्यक्तहस्तात् परेण ग्राहयित्वा अन्तपालादीन् हतान् कारयेदित्यर्थः ।

दण्डबलं ते दास्यामीति प्रतिज्ञया परं तच्छत्रुणाभियोज्य पश्चात् तदनेन तं शत्रुबलेन घातयेदित्याह — **दण्डबलव्यवहारेण वेत्यादि ।**

**कृत्यपक्षोपग्रहेण वा परस्यामित्रं राजानमात्मन्यपकारयित्वाभियुञ्जीत । ततः परस्य प्रेषयेद् — 'असौ ते वैरी ममापकरोति; तमेहि सम्भूय हनिष्यावः; भूमौ हिरण्ये वा ते परिग्रहः' इति । प्रतिपन्नमभिसत्कृत्यागतमवस्कन्देन प्रकाशयुद्धेन वा शत्रुणा घातयेत् । अभिविश्वासनार्थं भूमिदानपुत्राभिषेकरक्षापदेशेन वा ग्राहयेत् । अविषह्यमुपांशुदण्डेन वा घातयेत् । स चेद् दण्डं दद्यात् न स्वयमागच्छेत्, तमस्य वैरिणा घातयेत् । दण्डेन वा प्रयातुमिच्छेत् न विजिगीषुणा, तथाप्येनमुभयतस्संपीडनेन घातयेत् । अविश्वस्तो वा प्रत्येकशो यातुमिच्छेद्, राज्यैकदेशं वा यातव्यस्य आदातुकामः, तथाप्येनं वैरिणा सर्वसन्दोहेन वा घातयेत् । वैरिणा वा सक्तस्य दण्डोपनयेन मूलमन्यतो हारयेत् ।**

---

**कृत्यपक्षोपग्रहेण** वेति । कृत्यपक्षाणां क्रुद्धलुब्धभीतादीनां परकीयानां स्वानुकूलीकरणेन, परस्य, अमित्रं राजानम्, आत्मनि अपकारयित्वा अपकारं कारयित्वा, अभियुञ्जीत । ततः पश्चात्, परस्य प्रेषयेद् अर्थात् सन्देशं, कथम्भूतं सन्देशम्, 'असौ ते वैरी ममापकरोति, तमेहि सम्भूय हनिष्यावः, भूमौ हिरण्ये वा अर्थाच्छत्रुजयलभ्ये लाभे, ते परिग्रहः संविभागः' इत्येवंलक्षणम् । प्रतिपन्नम्, अभिसत्कृत्य स्वोक्तिमभिपूज्य, आगतं परम् , अवस्कन्देन सौप्तिकेन, प्रकाशयुद्धेन वा, शत्रुणा, घातयेत् । अथ शत्रुः संभूयाभियुक्तो जितः, तदा किं कर्तव्यमित्याह— **अभिविश्वासनार्थमिति** । विश्वासं जनयितुं, भूमिदानपुत्राभिषेकरक्षापदेशेन वा प्रतिश्रुतभूमिदानमपदिश्य स्वपुत्राभिषेकमपदिश्य स्वरक्षामपदिश्य वा, ग्राहयेद् अर्थात् परम् । अविषह्यम् अपदेशेन ग्रहीतुमशक्यम्, उपांशुदण्डेन वा रहोवधेन वा, घातयेत् । अभिसत्कृत्यागतविषया एते विधयः । परश्चेत् स्वयं नागतः दण्डमेव केवलं साहाय्यार्थं प्रेषयेत्, तदा परस्य तं दण्डं तच्छत्रुणा घातयेदित्याह — **स चेद् दण्डमित्यादि** । यदि सम्भूय हननार्थमाहूतः परः स्वीयेन दण्डेनैव सह **प्रयातुमिच्छति** नतु विजिगीषुणा सह, तदैनं पुरस्तात् पृष्ठतश्च संपीडनेन घातयेदित्याह — **दण्डेन वा प्रयातुमिच्छेदित्यादि** । यद्यविश्वासादसंप्रयुज्यैव विजिगीषुणा परः स्वयं पृथग् यातुमिच्छति राज्यैकदेशं च यातव्यस्य स्वयं ग्रहीतुकामः, तदा तं वैरिणा सर्वसैन्यसमुदयेन वा घातयेदित्याह — **अविश्वस्तो वेत्यादि । वैरिणा वा सक्तस्येति** । वैरिणमभिगम्य तेन सह युद्ध

**शत्रुभूम्या वा मित्रं पणेत ; मित्रभूम्या वा शत्रुम् । ततः शत्रुभूमिलिप्सायां मित्रेणात्मन्यपकारयित्वाभियुञ्जीत । इति समानाः पूर्वेण सर्व एव योगाः ।**

**शत्रुं वा मित्रभूमिलिप्सायां प्रतिपन्नं दण्डेनानुगृह्णीयात् ; ततो मित्रगतमतिसन्दध्यात् ; कृतप्रतिविधानो वा व्यसनमात्मनो दर्शयित्वा मित्रेणामित्रमुत्साहयित्वा आत्मानमभियोजयेत् ; ततः संपीडनेन घातयेत् ; जीवग्राहेण वा राज्यविनिमयं कारयेत् । मित्रेणाहृतश्चेच्छत्रुरग्राह्ये स्थातुमिच्छेत् , सामन्तादिभिर्मूलमस्य हारयेत् ; दण्डेन वा त्रातुमिच्छेत्, तमस्य घातयेत् ।**

व्यासङ्गं कुर्वतः परस्य, मूलं स्थानीयं, दण्डोपनयेन सैन्यप्रेषणेन, अन्यतः अन्यत्र, हारयेत् ।

**शत्रुभूम्या वेति** । मित्रं, शत्रुभूम्या स्वशत्रुभूम्या, पणेत 'तां जित्वा ते संविभजामी'ति संविदं कुर्याद् गूढम् । मित्रभूम्या वा, शत्रुं पणेत । **तत इति** । तत्र, शत्रुभूमिलिप्सायां, मित्रेण, आत्मनि, अपकारयित्वा अपकारं कारयित्वा, अभियुञ्जीत, अर्थात् तम् । **इति समानाः पूर्वेण सर्व एव योगा** इति । "ततः परस्य प्रेषयेद् 'असौ ते वैरी ममापकरोति, तमेहि संभूय हनिष्यावः भूमौ हिरण्ये वा ते परिग्रहः' इति प्रतिपन्नमभिसत्कृत्यागतमवस्कन्देन प्रकाशयुद्धेन वा शत्रुणा घातयेद्" इत्यादिना "वैरिणा वा सक्तस्य दण्डोपनयेन मूलमन्यतो हारयेद्" इत्यन्तेन सन्दर्भेण ये पूर्वे योगा उक्ताः ते सर्वे इहापि योज्या इत्यतिदेशार्थः ।

**शत्रुं वेति** । तं, मित्रभूमिलिप्सायां, प्रतिपन्नं संभूयहननाभ्युपगन्तारं, **दण्डेन** स्वसैन्यदानेन, **अनुगृह्णीयात्** । ततः स्वदत्तसैन्यग्रहणानन्तरं, मित्रगतं मित्रप्राप्तं मित्रे कृताभियोगम्, अतिसन्दध्यात् मित्रेण संभूय घातयेत् । आत्मनो व्यसनस्याविद्यमानस्यैव तत्प्रतिविधानारम्भैर्विद्यमानताभिनयेन शत्रुं स्वमित्रद्वारेण प्रोत्साह्यात्मन्यभियोजयेत् ; ततः स्वात्मना मित्रेण चेत्युभाभ्यां कृतेन पीडनेन तं घातयेद् , जीवन्तमेव वा तं गृहीत्वा राज्यपरिवर्तं कारयेद् विजिगीषुरित्याह — **कृतप्रतिविधान** इत्यादि । इह 'कृतप्रतिविधानो वे'त्यस्य स्थाने 'ततः प्रतिविधानेन वा' इति क्वचित् पाठः समानार्थः । **मित्रेणेति** । तेन, आहूतः आत्मसंप्रयोगायार्थितः, शत्रुः विजिगीषुव्यसनाभिनयजनितोत्साहो वैरी, अग्राह्ये स्थातुमिच्छेच्चेद् विजिगीषुमभियुञ्जानोऽपि तन्मित्रास

**तौ चेन्न भिद्येयातां प्रकाशमेवान्योन्यस्य भूम्या पणेत; ततः परस्परं मित्रव्यञ्जनोभयवेतना वा दूतान् प्रेषयेयुः—'अयं ते राजा भूमिं लिप्सते शत्रुसंहितः' इति; तयोरन्यतरो जाताशङ्कारोषः पूर्ववच्चेष्टेत ।**

**दुर्गराष्ट्रदण्डमुख्यान् वा कृत्यपक्षहेतुभिरभिविख्याप्य प्रव्राजयेत्; ते युद्धावस्कन्दावरोधव्यसनेषु शत्रुमतिसन्दध्युः; भेदं वास्य स्ववर्गेभ्यः कुर्युः; अभित्यक्तशासनैः प्रतिसमानयेयुः ।**

**लुब्धकव्यञ्जना वा मांसविक्रयेण द्वास्स्था दौवारिकापाश्रयाश्चोराभ्यागमं परस्य द्विस्त्रिरिति निवेद्य लब्धप्रत्यया भर्तुरनीकं द्विधा** प्रयुक्ततयैव स्थातुमिच्छेद् यदि, तर्हीति शेषः, ग्रामघातादिभिः, अस्य शत्रोः मूलं स्थानीयं, हारयेत् । **दण्डेन वा त्रातुमिच्छेदिति** । सैन्येन रक्षितुमिच्छेचेत्, तं दण्डम्, अस्य, घातयेत् ।

मित्रशत्र्वोरगूढभेदत्वेऽतिसन्धानप्रकारमभिधायाभेद्यत्वे तमाह—**तौ चेन्न भिद्येयातामित्यादि** । प्रकाशमेव अगूढमेव सर्वजनविदितं यथा स्यात् तथा । अन्योन्यस्य भूम्या पणेत मित्रभूम्या शत्रुं शत्रुभूम्या मित्रं च पणेत । अन्योन्यभूम्येत्यपि पाठः । तत इति । प्रकाशपणनानन्तरं, परस्परं शत्रुं मित्रं चोद्दिश्येत्यर्थः, मित्रव्यञ्जनोभयवेतना वा मित्रव्यञ्जना उभयवेतना वा, व्यस्त एव तु पाठो हृद्यः । दूतान् सन्देशहरान्, प्रेषयेयुः । सन्देशप्रकारमाह—**अयं ते राजेत्यादि** । **तयोरिति** । मित्रशत्र्वोः, अन्यतरः, जाताशङ्कारोषः, पूर्ववत् चेष्टेत पूर्वोक्तदिशा स्ववैरिणमतिसन्दध्यादित्यर्थः ।

योगान्तरमाह - **दुर्गराष्ट्रदण्डमुख्यान् वेति** । स्थानीयमुख्यान् जनपदमुख्यान् सेनामुख्यांश्च, कृत्यपक्षहेतुभिः कृत्यसहायत्वसंभावनानिमित्तैः, अभिविख्याप्य, प्रव्राजयेद् राष्ट्राद् विवासयेत् । ते विवासिताः, शत्रुमाश्रिता इति शेषः, युद्धावस्कन्दावरोधव्यसनेषु युद्धाद्यवसरेषु, शत्रुम् अतिसन्दध्युः, भेदं वा, अस्य शत्रोः, स्ववर्गेभ्यः स्वीयेभ्योऽमात्यादिवर्गेभ्यः, कुर्युः । अभित्यक्तशासनैः अभित्यक्तहारितैः कूटलेख्यैः, प्रतिसमानयेयुः स्वोद्भावितान् मिथ्यार्थान् संवादयेयुः ।

योगान्तरमाह—**लुब्धकव्यञ्जना वेति** । मृगयुवेषा गूढपुरुषाः, मांसविक्रयेण तद्व्यापारवशेन, द्वास्स्थाः द्वारस्थिताः, दौवारिकापाश्रयाः द्वारा-

**निवेश्य ग्रामवधेऽवस्कन्दे च द्विषतो ब्रूयुः—'आसन्नश्चोरगणः, महांश्चाक्रन्दः, प्रभूतं सैन्यमागच्छतु' इति। तदर्पयित्वा ग्रामघातदण्डस्य सैन्यमितरदादाय रात्रौ दुर्गद्वारेषु ब्रूयुः— 'हतश्चोरगणः ; सिद्धयात्रमिदं सैन्यमागतं ; द्वारमपाव्रियताम्' इति। पूर्वप्रणिहिता वा द्वाराणि दद्युः; तैः सह प्रहरेयुः।**

**कारुशिल्पिपाषण्डकुशीलववैदेहकव्यञ्जनानायुधीयान् वा परदुर्गे प्रणिदध्यात्। तेषां गृहपतिकव्यञ्जनाः काष्ठतृणधान्यपण्यशकटैः प्रहरणावरणान्यभिहरेयुः; देवध्वजप्रतिमाभिर्वा। ततस्तद्व्यञ्जनाः प्रम-**

धिक्कृताश्रयाः, चोराभ्यागमं, परस्य, द्विस्त्रिरिति द्वित्रादिवारान्, निवेद्य, लब्धप्रत्ययाः भर्तुः प्राप्तभर्तृविश्वासाः, ग्रामवधे अवस्कन्दे च विषये तदुभयप्रतिकारार्थमित्यर्थः, द्विषतः शत्रोः, अनीकं, द्विधा निवेश्य द्वैराश्येन निविष्टं कारयित्वा, ब्रूयुः। किमिति —'आसन्नः चोरगणः, महांश्च, आक्रन्दः जनाक्रोशः, प्रभूतं बहुलं, सैन्यम् आगच्छतु, चोरगणाभिघातार्थम्' इति। **तदिति।** आगतं सैन्यं, ग्रामघातदण्डस्य ग्रामघातप्रतिकारार्थे इत्यर्थः, अर्पयित्वा, इतरत् सैन्यम् आदाय, रात्रौ दुर्गद्वारेषु ब्रूयुः, गत्वा वदेयुः, किमिति—'हतः चोरगणः, अत एव सिद्धयात्रं सफलयात्रम्, इदं सैन्यम् आगतम्। द्वारम् अर्थाद् दुर्गस्य, अपाव्रियतां भयहेतुव्यपगमाद् विवृतं क्रियताम्' इति। द्वारापावरणप्रार्थनं च सैन्यं परस्य स्ववशगतं हत्वा गमिष्यतां सुखनिर्गमार्थम्। **पूर्वप्रणिहिता वेति।** पूर्वनियुक्ता वा गूढपुरुषाः, द्वाराणि दद्युः। न केवलं द्वारदाने सहाया एते पूर्वप्रणिहिताः किन्तु लुब्धकव्यञ्जनैः क्रियमाणे सैन्यस्य प्रहारेऽपीत्यभिप्रायेणाह — **तैः सह प्रहरेयुरिति।**

योगान्तरमाह —**कारुशिल्पीत्यादि।** आयुधीयान् आयुधजीविनः। अनायुधीयान् इत्यसमञ्जसः पाठः। प्रणिदध्यात् अपसर्पयेत्। **तेषामित्यादि।** तेषां कार्वादिव्यञ्जनानामायुधीयानाम्। प्रहरणावरणानि प्रहरणानि आवरणानि च युद्धोपयोगीनि। अभिहरेयुः गूढं दद्युः। देवध्वजप्रतिमाभिर्वा देवानां ध्वजभूतैः खड्गादिभिः प्रतिमाभिश्च सह वा। **ततस्तद्व्यञ्जना इत्यादि।** ततः कार्वादिव्यञ्जनाः गृहपतिकव्यञ्जनसकाशाधिगतप्रहरणावरणाः, प्रमत्तवधं प्रमादिनां हननम्, अवस्कन्दप्रतिग्रहं हठाक्रमणस्वीकारम्, अभिप्रहरणम्

त्तवधमवस्कन्दप्रतिग्रहमभिप्रहरणं पृष्ठतः शङ्खदुन्दुभिशब्देन वा प्रविष्टमित्यावेदयेयुः । प्राकारद्वाराट्टालकदानमनीकभेदं घातं वा कुर्युः ।

सार्थगणवासिभिरातिवाहिकैः कन्यावाहिकैरश्वपण्यव्यवहारिभिरुपकरणहारकैर्धान्यक्रेतृविक्रेतृभिर्वा प्रव्रजितलिङ्गिभिर्दूतैश्च दण्डातिनयनं सन्धिकर्म विश्वासनार्थम् । इति राजापसर्पाः ।

एत एवाटवीनामपसर्पाः कण्टकशोधनोक्ताश्च । व्रजमटव्यासन्नमपसर्पाः सार्थं वा चोरैर्घातयेयुः । कृतसङ्केतमन्नपानं चात्र मदनरसविद्धं वा कृत्वापगच्छेयुः । गोपालकवैदेहकाश्च ततश्चोरान् गृहीत-

---

अभितः प्रहारदानं च, शङ्खदुन्दुभिशब्देन वा, वाशब्दात् प्रकारान्तरेण वा, पृष्ठतः प्रविष्टमिति पृष्ठत उपस्थितमिति — प्रमत्तवधोऽवस्कन्दप्रतिग्रहोऽभिप्रहरणं चेति त्रयं पृष्ठत उपस्थितमितीत्यर्थः, आवेदयेयुः, अर्थात् परदुर्गस्थान् । आवेदनवशाच्च संकुले प्रवृत्ते प्राकारद्वाराट्टालकखण्डनं पूर्ववत् परानीकस्य द्विधा भेदनं तद्घातं च कुर्युरित्याह — **प्राकारद्वारेत्यादि** ।

घाताय परानीकस्य भेदनवद् अतिनयनमपि अपसर्पैः कार्यमित्याह — **सार्थेत्यादि** । सार्थगणवासित्वादीनि षड् रूपाणि परिगृह्य स्वमार्गातिवाहनसहायापदेशेन परसैन्यस्यातिदूरनयनमपसर्पैः कर्तव्यं, सन्धिपणितं कर्म च परविश्वासनार्थं कर्तव्यमिति वाक्यार्थः । तत्र सार्थगणवासिभिः धनिकगणान्तर्भूतैः । आतिवाहिकैः अतिवाहो दुर्गममार्गलङ्घनं तत्प्रयोजनैर्मार्गरक्षार्थिभिरित्यर्थः, इदं च षण्णां विशेषकम् । कन्यावाहिकैः कन्यां वहन्ति नयन्तीति कन्यावाहिकास्तैः । प्रव्रजितलिङ्गिभिः संन्यासिव्यञ्जनैः । शेषं स्पष्टार्थम् । **इति राजापसर्पा** इति । अनेन प्रकारेण राज्ञामपसर्पा विज्ञेयाः ।

य एते राजापसर्पाः ये च कण्टकशोधनोक्ताः, त उभये आटविकानां प्रणिधेया इत्याह — **एत एवेत्यादि** । आटविकेष्वपसर्पकार्यमाह — **व्रजमिति** । गोष्ठम्, अटव्यासन्नं वनसन्निकृष्टम्, अपसर्पाः, सार्थं वा पथिकबृन्दं वा, चोरैः अर्थादाटविकैः, आटविका हि चोरवृत्तय इति । घातयेयुः, तेषु स्वयमनुप्रविष्टा इत्यार्थम् । **कृतसङ्केतमिति** । अमुकदेशकाले युष्माकमाहारसंविधा भविष्यतीति कृतसमयम्, अन्नपानं च, अत्र, मदनरसविद्धं मदकरद्रव्येण विषेण च युक्तं, कृत्वा, अपगच्छेयुः । गोपालकवैदेहकाश्च, राज-

लोप्त्रभाराः मदनरसविकारकालेऽवस्कन्दयेयुः । सङ्कर्षणदैवतीयो वा मुण्डजटिलव्यञ्जनः प्रहवणकर्मणा मदनरसयोगाभ्यामतिसन्दध्यात् । अथावस्कन्दं दद्यात् । शौण्डिकव्यञ्जनो वा दैवतप्रेतकार्योत्सवसमाजेष्वाटविकान् सुराविक्रयोपायननिमित्तं मदनरसयोगाभ्यामतिसन्दध्यात् । अथावस्कन्दं दद्यात् ।

ग्रामघातप्रविष्टां वा विक्षिप्य बहुधाटवीम् ।
घातयेदिति चोराणामपसर्पाः प्रकीर्तिताः ॥

इति कौटलीयार्थशास्त्रे दुर्गलम्भोपाये त्रयोदशा-
धिकरणे तृतीयोऽध्यायः अपसर्पप्रणिधिः,
आदितस्त्रिचत्वारिंशच्छततमः ॥

---

पुरुषभूता इति शेषः, ततः चोरान्, मदनरसविकारकाले मादकविद्धान्नपानोपयोगनिमित्तचित्तविभ्रमावसरे विषविद्धान्नपानोपयोगनिमित्तसंज्ञानाशावसरे च, गृहीतलोप्त्रभाराः चोरसकाशोपात्तमुष्टद्रव्यभाराः सन्तः, अवस्कन्दयेयुः गृह्णीयुर्घातयेयुर्वा । मदनरसयोगस्य प्रकारान्तरमाह— सङ्कर्षणदैवतीयो वेति । सङ्कर्षणो बलभद्राख्यं मद्यप्रियं दैवतं तद्भक्तो वा, मुण्डजटिलव्यञ्जनः, प्रहवणकर्मणा तुष्टिभोजनदानच्छद्मना, मदनरसयोगाभ्याम् अतिसन्दध्यात्, अर्थात् चोरान् । अथ अवस्कन्दं दद्यात् मदनरसविकारकाले । प्रकारान्तरमाह— शौण्डिकव्यञ्जनो वेत्यादि । सुराविक्रयोपायननिमित्तं सुराया विक्रयार्थं यदुपायनमुपहरणं तत् निमित्तं कृत्वेत्यर्थः ।

प्रान्ते श्लोकमाह — ग्रामघातप्रविष्टां वेति । ग्रामघातार्थं प्रविष्टाम्, अटवीम् आटविकांश्चोरानित्यर्थः, बहुधा बहुभिर्योगप्रकारैः, विक्षिप्य विकृतचित्तान् कृत्वा, घातयेत् । इति एवं चोराणामपसर्पाः, प्रकीर्तिताः उपदिष्टाः ॥

इति कौटलीयार्थशास्त्रव्याख्यायां दुर्गलम्भोपाये त्रयोदशेऽधि-
करणे तृतीयोऽध्यायः अपसर्पप्रणिधिः,
आदितस्त्रिचत्वारिंशच्छततमः ॥

१७४,१७५. प्रक. पर्युपासनकर्म. अवमर्दश्च ।

**कर्शनपूर्वं पर्युपासनकर्म । जनपदं यथानिविष्टमभये स्थापयेत् । उत्थितमनुग्रहपरिहाराभ्यां निवेशयेदन्यत्रापसरतः; समग्रमन्यस्यां भूमौ निवेशयेदेकस्यां वा वासयेत् । न ह्यजनो जनपदो राज्यमजनपदं वा भवतीति कौटल्यः ।**

**विषमस्थस्य मुष्टिं सस्यं वा हन्याद् वीवधप्रसारौ च ।**
**प्रसारवीवधच्छेदान्मुष्टिसस्यवधादपि ।**
**वमनाद् गूढघाताच्च जायते प्रकृतिक्षयः ॥**

**प्रभूतगुणवद्धान्यकुप्ययन्त्रशस्त्रावरणविष्टिरश्मिसमग्रं मे सैन्य-**

---

**पर्युपासनकर्मेति** सूत्रम् । परदुर्गं परित उपासनकर्म सैन्यनिवासनव्यापारोऽभिधीयत इति सूत्रार्थः ।

**कर्शनेत्यादि** । पर्युपासनकर्म, कर्शनपूर्वं कोशदण्डरेचनामात्यवधादि कर्शनं तत्पुरस्सरं, कर्तव्यमिति शेषः । कर्शने च शत्रोः क्रियमाणे जनपदो न पीडनीयः किन्तु रक्षणीय इति वक्तुमाह — **जनपदमित्यादि** । तं, यथानिविष्टं यथापरनिवेशितरूपम्, अभये स्थापयेत्, अभयमित्यपि पाठः । **उत्थितमिति** । कृष्यादिप्रयासोद्यतं जनं, अनुग्रहपरिहाराभ्यां धनदानकरमोक्षणाभ्यां, निवेशयेद्, अपसरतोऽन्यत्र अपसरन्तं वर्जयित्वा, अपसरतोऽनुग्रहपरिहारौ न कार्यावित्यर्थः । **समग्रमिति** । अधिकम्, अन्यस्यां भिन्नभिन्नायां भूमौ, निवेशयेद्; एकस्यां वा वासयेद्, एकस्थं वेत्यपि पाठः । किमर्थं जनस्थापनादिकं तात्पर्येणोपदिश्यते, तत्राह — **नह्यजनो जनपद** इत्यादि । जनरहितस्य जनपदव्यपदेशाभावाद् जनपदरहितस्य राज्यव्यपदेशाभावाच्च जनस्थापनादिकमावश्यकमित्यर्थः ।

कर्शनप्रकारमाह — **विषमस्थस्येति** । शत्रूपरोधसंकटप्राप्तस्य, मुष्टिं बीजवापं, सस्यं वा, हन्यात् । वीवधप्रसारौ च वीवधो धान्यस्नेहादिभारः प्रसारः तृणकाष्ठादिप्रवेशः तौ च, हन्यात् ।

प्रकृतिक्षयहेतून् संगृह्णाति— **प्रसारवीवधच्छेदादित्यादि** । वमनाद् अन्यत्र नयनात् । प्रकृतिक्षयः अमात्याद्यपचयः ।

कस्यामवस्थायां पर्युपासनं कर्तव्यमित्याह — **प्रभूतेत्यादि** । प्रचुर॰ सारधान्यादिसप्तकसम्पन्नं, तत्र आवरणं पेटीचर्मादि. विष्टिः कर्मकरः रश्मिः

**मृतुश्च पुरस्तात्; अपर्तुः परस्य व्याधिदुर्भिक्षनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्च' इति पर्युपासीत।**

**कृत्वा स्कन्धावारस्य रक्षां वीवधासारयोः पथश्च, परिक्षिप्य दुर्गं खातसालाभ्यां, दूषयित्वोदकमवस्राव्य परिखाः संपूरयित्वा वा, सुरुङ्गाबलकुटिकाभ्यां वप्रप्राकारौ हारयेत्।**

**दारं च गुलेन निम्नं वा पांसुमालयाच्छादयेत्। बहुलारक्षं यन्त्रैर्घातयेत्। निष्करादुपनिष्कृष्याश्वैश्च प्रहरेयुः। विक्रमान्तरेषु च नियोगविकल्पसमुच्चयैश्चोपायानां सिद्धिं लिप्सेत दुर्गवासिनः।**

---

प्रग्रहः, शेषं प्रतीतम्। मे सैन्यम्, ऋतुश्च पुरस्तात् कालश्चानुकूल उपस्थितः, परस्य अपर्तुः प्रतिकूलः कालः, व्याधिदुर्भिक्षनिचयरक्षाक्षयः व्याधिना दुर्भिक्षेण च निचयस्य सञ्चितधनादेः रक्षाया आरक्षकाणां च क्षयः, क्रीतबलनिर्वेदः क्रयेणाधिगतस्य बलस्य कृतश्रमवैफल्यदर्शनेन भूयस्साह्यकरणाद् विरिरंसा, मित्रबलनिर्वेदश्च, अस्तीति सर्वत्र शेषः। इति अस्यामवस्थायामिति शेषः, पर्युपासीत।

पर्युपासनप्रकारमाह—**कृत्वेत्यादि**। स्कन्धावारस्य स्वसेनानिवेशस्य। परिक्षिप्य दुर्गं परस्य स्थानीयं परिगत्य। खातसालाभ्यां खातसालानुसारेण। अवस्राव्य निर्गतजलाः कृत्वा। सुरुङ्गाबलकुटिकाभ्यां तिर्यग्भूखातैः सैन्यपल्लीभिश्च, जातौ चेहैकत्वविवक्षया द्विवचनम्। हारयेत् आक्रामेत्।

**दारमित्यादि**। दारं दीर्णदेशम्। गुलेन छादनसाधनपिण्डेन। बहुलेनेति पाठश्चिन्त्यार्थः। बहुलारक्षं प्रचुररक्षाविधानं प्रदेशम्। **निष्करादिति**। निन्दितकरणात् कपटादित्यर्थः, अथवा करः शुण्डा निरायतः करो यस्य स निष्करः प्रसारितकरः अर्थात् करिणं तथाभूतं विधायेति ल्यब्लोपे पञ्चमी, दुष्करादिति पाठेऽपि कपटादित्यर्थः। निष्कुरादित्युकारमध्यस्तु मृग्यार्थः पाठः। अश्वैश्च चकाराद् गजैश्च। प्रहरेयुः अर्थादारक्षान्। **विक्रमान्तरेषु चेति**। विक्रमविशेषेषु च परैः प्रदर्श्यमानेष्वित्यर्थः, उपायानां नियोगविकल्पसमुच्चयैश्च अयमेवात्रोपायोऽनुष्ठेय इति व्यवस्था नियोगः अयं वासौ वेति विकल्पः अयं चासौ चेति समुच्चयः एतैर्यथाविषयमनुष्ठितैः, सिद्धिं लिप्सेत, दुर्गवासिनः दुर्गगतस्य शत्रोः।

**श्येनकाकनप्तृभासशुकशारिकोलूककपोतान् ग्राहयित्वा पुच्छेष्वग्नियोगयुक्तान् परदुर्गे विसृजेयुः ।**

**अपकृष्टस्कन्धावारादुच्छ्रितध्वजधन्वारक्षा वा मानुषेणाग्निना परदुर्गमादीपयेत् ।**

**गूढपुरुषाश्चान्तदुर्गपालका नकुलवानरबिडालशुनां पुच्छेष्वग्नियोगमाधाय काण्डनिचयरक्षाविधानवेश्मसु विसृजेयुः ।**

**शुष्कमत्स्यानामुदरेष्वग्निमाधाय वल्लूरे वा वायसोपहारेण वयोभिर्हारयेयुः ।**

**सरलदेवदारुपूतितृणगुग्गुलुश्रीवेष्टकसर्जरसलाक्षागुलिकाः खरोष्ट्राजावीनां लण्डं चाग्निधारणम् ।**

---

**श्येनकाकेत्यादि** । तत्र नप्ता विष्किराख्यः पक्षी, शेषाः प्रतीताः । पुच्छेषु अग्नियोगयुक्तान् अग्निप्रज्वलनोपाययुक्तान् । विसृजेयुः विसृष्टश्येनादिपुच्छपरिपतिताग्नियोगद्वारेण परदुर्गं दीपयेयुरित्यर्थः ।

**अपकृष्टस्कन्धावारादिति** । अधःस्थात् स्वस्कन्धावारात्, उच्छ्रितध्वजधन्वा उच्छ्रिता अग्निक्षेपार्थमुन्नमिता ध्वजाः पताका धन्वानि धनूंषि च येन स तथाभूतः, आरक्षा वा, मानुषेणाग्निना शत्रुनिहतस्य वा शूलारोपणमारितस्य वा मनुष्यस्यास्थ्ना कल्माषवेणुना मथनादुत्थितेनाग्निना, परदुर्गम् आदीपयेत् । आरक्षांशे 'आदीपयेयुरि'ति विपरिणामेन संबन्धः । 'आदीपयेयुरि'त्येव क्वचित् पाठः ।

**गूढपुरुषाश्चेत्यादि** । अन्तदुर्गपालकाः अन्तपालकदुर्गपालकव्यञ्जना इत्यर्थः । काण्डनिचयरक्षाविधानवेश्मसु येषु बाणाः कुप्यादिवर्गो वा सञ्चित्य रक्ष्यन्ते तेषु गृहेषु ।

**शुष्कमत्स्यानामित्यादि** । अग्निमाधाय वक्ष्यमाणगुलिकादिकमग्निधारणं निवेश्य । वल्लूरे वा शुष्कमांसे वा । वायसोपहारेण पक्षिसंबन्ध्युपहारात्मना ।

**सरलेत्यादि** । तत्र सरलः पीतद्रुः, देवदारुः दारुहरिद्रा, पूतितृणं रोहिषतृणम्, गुग्गुलुः कालनिर्यासः, श्रीवेष्टकः सरलनिर्यासः, सर्जरसः यक्षधूपः, लाक्षा जतु ।

प्रियालचूर्णमवल्गुजमषीमधूच्छिष्टमश्वखरोष्ट्रगोलण्डमित्येष क्षेप्योऽग्नियोगः ।

सर्वलोहचूर्णमग्निवर्णं वा कुम्भीसीसत्रपुचूर्णं वा पारिभद्रकपलाशपुष्पकेशमषीतैलमधूच्छिष्टकश्रीवेष्टकयुक्तोऽग्नियोगः विश्वासघाती वा । तेनावलिप्तः शणत्रपुसवल्कवेष्टितो बाण इत्यग्नियोगः ।

नत्वेव विद्यमाने पराक्रमेऽग्निमवसृजेत् । अविश्वास्यो ह्यग्निः दैवपीडनं च, अप्रतिसंख्यातप्राणिधान्यपशुहिरण्यकुप्यद्रव्यक्षयकरः । क्षीणनिचयं चावाप्तमपि राज्यं क्षयायैव भवति ।

इति पर्युपासनकर्म ।

'सर्वारम्भोपकरणविष्टिसम्पन्नोऽस्मि; व्याधितः पर उपधाविरुद्धप्रकृतिरकृतदुर्गकर्मनिचयो वा निरासारः सासारो वा पुरा मित्रैः सन्धत्ते' इत्यवमर्दकालः ।

---

**प्रियाले**त्यादि । तत्र प्रियालो राजादनः, अवल्गुजः सोमराजिसंज्ञौषधिः, मषी शेफालिकाभेदः । मधूच्छिष्टं सिक्थः ।

**सर्वलोहचूर्ण**मित्यादि । तत्र कुम्भी श्रीपर्णी, सीसत्रपुणी लोहभेदौ । पारिभद्रको निम्बः, पलाशः किंशुकः, केशं ह्रीबेरम् । विश्वासघाती विश्वासविषय एव सन् हन्तीति तथोच्यते । **तेनावलिप्त** इत्यादि । शणः क्षुपभेदः, त्रपुसं तन्नामप्रसिद्ध ओषधिभेदः । बाणोऽर्जुनवृक्षः ।

त एतेऽग्नियोगाः पराक्रमसद्भावे न प्रयोक्तव्या इत्याह — **नत्वेवे**त्यादि । अविश्वास्यः अतिप्रवृद्धोऽदिधक्षितमपि निर्दहतीत्यतो विश्वसितुमनर्हः । दैवपडिनं च पीडनवर्गे प्रथमगणितं दैवपीडनं च । अप्रतिसंख्यातेत्यादिपदे अप्रतिसंख्यातेत्यस्यासंख्येत्यर्थः । क्षीणनिचयं प्राणिधान्यादिसञ्चयो निचयः स क्षीणो यस्मिंस्तत् ।

**इति पर्युपासनकर्मे**ति । व्याख्यातमिति शेषः ।

**अवमर्द** इति सूत्रम् । अवमर्दः परदुर्गग्रहणं स कदा कथं कर्तव्य इत्ययमर्थोऽत्राभिधीयत इति सूत्रार्थः ।

अवमर्दकालमाह — **सर्वारम्भे**त्यादि । सर्वविधैः सैन्यसन्नाहैः सैन्यभक्तावरणाद्युपकरणैः कर्मकरैश्चाहं सम्पन्नोऽस्मि; शत्रुस्तु व्याधिपीडितो वा, उपधाप्रत्यक्षिताशुचिभावैरमात्यैर्युक्तो वा, अकृतदुर्गसंस्कारधनधान्यादिसञ्चयो

स्वयमग्नौ जाते समुत्थापिते वा प्रहवणे प्रेक्षानीकदर्शनसङ्गसौरिककलहेषु नित्ययुद्धश्रान्तबले बहुलयुद्धप्रतिविद्धप्रेतपुरुषे जागरणक्लान्तसुप्तजने दुर्दिने नदीवेगे वा नीहारसम्प्लवे वावमृद्नीयात् ।

स्कन्धावारमुत्सृज्य वा वनगूढः शत्रुः सत्रान्निष्क्रान्तं घातयेत् ।

मित्रासारमुख्यव्यञ्जनो वा संरुद्धेन मैत्रीं कृत्वा दूतमभित्यक्तं प्रेषयेत् — 'इदं ते छिद्रम्; इमे दूष्याः; संरोद्धुर्वा छिद्रमयं ते कृत्यपक्षः' इति । तं प्रतिदूतमादाय निर्गच्छन्तं विजिगीषुर्गृहीत्वा दोषमभिविख्याप्य प्रवास्यापगच्छेत् ततः । मित्रासारव्यञ्जनो वा संरुद्धं ब्रूयात् — 'मां त्रातुमुपनिर्गच्छ; मया वा सह संरोद्धारं जहि' इति । प्रतिपन्नमुभयतस्संपीडनेन घातयेत्; जीवग्राहेण वा राज्यविनिमयं कारयेत्; नगरं वास्य प्रमृद्नीयात्; सारबलं वास्य वमयित्वाभिहन्यात् ।

---

वा सुहृद्बलरहितो वा, संभावितसुहृद्बलोऽपि मित्रैः सन्धास्यते न त्वद्यापि कृतसन्धिः इति यदा विजिगीषुर्मन्येत; तदा स परमवमृद्नीयादित्यर्थः ।

**स्वयमित्यादि** । प्रेक्षानीकदर्शनसङ्गसौरिककलहेषु प्रेक्षायां नृत्तादौ अनीकदर्शने सैन्यमिथ्यायुद्धप्रेक्षणे च सङ्ग आसक्तिः तस्मिन् सौरिककलहेषु शौण्डिकोत्पादितेषु कलहेषु च । नित्ययुद्धश्रान्तबल इत्यादिविशेषणत्रयस्य परस्मिन्निति विशेष्यं गम्यम् । नदीवेगे वेगवाहिनदीतरणकाले । नीहारसंप्लवे अवश्यायनिमित्तोपप्लवे ।

**स्कन्धावारमित्यादि** । सत्राद् वनात् । यदि शत्रुर्वने गूढस्थितः तर्हि तस्य वनान्निष्क्रमणं प्रतीक्ष्य तं विजिगीषुर्घातयेदित्यर्थः । 'शत्रुं निष्क्रान्तम्' इति पाठे तु स्फुट एवार्थः ।

**मित्रेत्यादि** । मित्रासारमुख्यव्यञ्जनो मित्रव्यञ्जनो वा सुहृद्बलमुख्यवेषो वा । अभित्यक्तं वध्यम् । अभिव्यक्तामिति पाठे वध्यत्वेन निश्चितम् । प्रेषयेत् लेखं दत्त्वेति शेषः । इदं ते इत्यादि लेखार्थप्रदर्शनम् । दूष्याः त्वदीयाः अपकर्तारः परस्य त्वच्छिद्रप्रविवक्षोः साहाय्यदानजागरूकाः । ते कृत्यपक्षः संरोद्धृच्छिद्रप्रविवक्षोस्तव साहाय्यदानजागरूकः परकीयक्रुद्धलुब्धादिवर्गः । **तमित्यादि** । तम् अभित्यक्तम् । प्रतिदूतम् आदाय प्रतिलेखार्थं गृहीत्वा । दोषम् आत्मापकारम् । प्रवास्य मारयित्वा । ततः अपगच्छेत्

**तेन दण्डोपनताटविका व्याख्याताः ।**

**दण्डोपनताटविकयोरन्यतरो वा संरुद्धस्य प्रेषयेत् —'अयं संरोद्धा व्याधितः, पार्ष्णिग्राहेणाभियुक्तः, छिद्रमन्यदुत्थितम्, अन्यस्यां भूमावपयातुकामः' इति । प्रतिपन्ने संरोद्धा स्कन्धावारमादीप्यापयायात्, ततः पूर्ववदाचरेत् ।**

**पण्यसम्पातं वा कृत्वा पण्येनैनं रसविद्धेनातिसन्दध्यात् ।**

**आसारव्यञ्जनो वा संरुद्धस्य दूतं प्रेषयेत् — 'मया बाह्यमभिहतमुपनिर्गच्छाभिहन्तुम्' इति । प्रतिपन्नं पूर्ववदाचरेत् ।**

**मित्रं बन्धुं वापदिश्य योगपुरुषाः शासनमुद्राहस्ताः प्रविश्य दुर्गं ग्राहयेयुः ।**

**आसारव्यञ्जनो वा संरुद्धस्य प्रेषयेत् — 'अमुष्मिन् देशे काले च स्कन्धावारमभिहनिष्यामि ; युष्माभिरपि योद्धव्यम्' इति । प्रतिपन्नं यथोक्तमभ्याघातसंकुलं दर्शयित्वा रात्रौ दुर्गान्निष्क्रान्तं घातयेत् ।**

---

संरुद्धपक्षादपसरेत् । प्रकारान्तरमाह — **मित्रासारव्यञ्जनो** वेत्यादि । उभयतः पुरः पश्चाच्च । वमयित्वा दुर्गान्निर्गमय्य ।

उक्ताः प्रकारा दण्डोपनताटविकद्वाराप्यनुष्ठेया इत्याह — **तेन दण्डोपनताटविका** इत्यादि ।

तत्र प्रकारान्तरमाह — **दण्डोपनताटविकयो**रित्यादि । ततः पूर्ववदाचरेदिति । पूर्ववदाचरणं च उभयतःसंपीड्यघातनादिकं पूर्वोक्तम् ।

**पण्ये**त्यादि । पण्यसम्पातं पण्यविक्रेतृसङ्घागमनम् ।

प्रकारान्तरमाह — **आसारव्यञ्जनो** वेत्यादि । सन्देशार्थमाह — **मया बाह्य**मित्यादि । मया प्रथममभिहन्यमानं शत्रुमनुहन्तुं दुर्गान्निष्क्रान्तो भवेत्यर्थः । **प्रतिपन्न**मित्यादि । पूर्ववदाचरेत् उभयतःसम्पीड्यघातनादिकं कुर्यात् ।

**मित्र**मित्यादि । मित्रं बन्धुं वापदिश्य आत्मनो मित्रत्वं बन्धुत्वं वा निमित्तं कल्पयित्वा । शासनमुद्राहस्ताः मुद्रितकूटलेख्यहस्ताः ।

आसारव्यञ्जनेन कर्तव्यमन्यमतिसन्धानप्रकारमाह — **आसारव्यञ्जनो** वेत्यादि । अभ्याघातसंकुलं विजिगीषुस्कन्धावाराभिहननतुमुलं, तत्प्रदर्शनं च संरुद्धविश्वासार्थम् ।

यद्वा मित्रमावाहयेद्, आटविकं वा, तमुत्साहयेत् —'विक्रम्य संरुद्धे भूमिमस्य प्रतिपद्यस्व' इति । विक्रान्तं प्रकृतिभिर्दूष्यमुख्यावग्रहेण वा घातयेन: स्वयं वा रसेन । 'मित्रघातकोऽयम्' इत्यवाप्तार्थः ।

विक्रमितुकामं वा मित्रव्यञ्जनः परस्याभिशंसेत्: आप्तभावोपगतः प्रवीरपुरुषानस्योपघातयेत् ।

सन्धिं वा कृत्वा जनपदमेनं निवेशयेत्: निविष्टमन्यजनपदमविज्ञातो हन्यात् ।

अपकारयित्वा दूष्याटविकेषु वा बलैकदेशमतिनीय दुर्गमवस्कन्देन हारयेत ।

दूष्यामित्राटविकद्वेष्यप्रत्यपसृताश्च कृतार्थमानसंज्ञाचिह्नाः परदुर्गमवस्कन्देयुः ।

प्रकारान्तरमाह — यद्वेत्यादि । तम् उत्साहयेत् मित्राटविकान्यतरं पराभियोगायोद्योजयेत् । प्रकृतिभिः अमात्यादिभिः । दूष्यमुख्यावग्रहेण वा दूष्यमुख्यस्ववशीकरणेन । दूष्यमुख्योपग्रहेणेति पाठे दूष्यमुख्यानुकूलनेनेत्यर्थः । मित्रघातकोऽयमित्यवाप्तार्थ इति । परं मित्रघातक इति प्रख्याप्य स्वार्थं साधयेदित्यर्थः ।

प्रकारान्तरमाह — विक्रमितुकामं वेत्यादि । विजिगीषुस्त्वयि विक्रमितुमिच्छतीत्येवं शत्रोस्तन्मित्रव्यञ्जनः कथयेत्, प्रतिपद्य चैवं तस्याप्तभावं तदीयान् प्रवीरपुरुषान् घातयेदित्यर्थः ।

परेण सन्धिं कृत्वा तेनैव स्वराष्ट्रे जनपदनिवेशमन्यं कारयित्वा तं तदविज्ञातो हन्यादित्याह — सन्धिं वेत्यादि ।

स्वदूष्याटविकेषु विषये परस्य बलैकदेशमपकारं कारयित्वा तेन निमित्तेन तमतिदूरं नीत्वा च बलैकदेशविरहेण सुखाक्रमणीयतामापन्नं परदुर्गं प्रसभाक्रमणेनापहरेदिति प्रकारमन्यमाह — अपकारयित्वेत्यादि ।

अवस्कन्दसहायाः के इत्यत्राह—दूष्यामित्रेत्यादि । तत्र प्रत्यपसृताः परस्मादपसृत्य पुनस्तं प्रत्यागताः । शेषास्तु प्रतीताः । कृतार्थमानसंज्ञाचिह्नाः कृतार्थमाना धनाभरणादिदानसत्कृताः कृतसंज्ञाचिह्नाश्च आहितावस्कन्दकालसूचकसङ्केताश्च ।

**परदुर्गमवस्कन्द्य स्कन्धावारं वा पतितपराङ्मुखाभिपन्नमुक्तकेशशस्त्रभयविरूपेभ्यश्चाभयमयुध्यमानेभ्यश्च दद्युः । परदुर्गमवाप्य विशुद्धशत्रुपक्षः कृतोपांशुदण्डप्रतीकारमन्तर्बहिश्च प्रविशेत् ।**

**एवं विजिगीषुरमित्रभूमिं लब्ध्वा मध्यमं लिप्सेत । तत्सिद्धावुदासीनम् । एष प्रथमो मार्गः पृथिवीं जेतुम् ।**

**मध्यमोदासीनयोरभावे गुणातिशयेनारिप्रकृतीः साधयेत् । तत उत्तराः प्रकृतीः । एष द्वितीयो मार्गः ।**

**मण्डलस्याभावे शत्रुणा मित्रं मित्रेण वा शत्रुमुभयतःसम्पीडनेन साधयेत् । एष तृतीयो मार्गः ।**

**शक्यमेकं वा सामन्तं साधयेत्; तेन द्विगुणो द्वितीयं, त्रिगुणस्तृतीयम् । एष चतुर्थो मार्गः पृथिवीं जेतुम् ।**

---

परदुर्गस्य परस्कन्धावारस्य वावस्कन्दे सिद्धेऽनन्तरकरणीयमाह—**परदुर्गमित्यादि** । पतितेत्यादिपदे अभिपन्नो विपद्गतः शस्त्रभयविरूपः शस्त्रभयविकृताकारः । शेषाः प्रतीताः । **परदुर्गमित्यादि** । विशुद्धशत्रुपक्षः उत्सारितशत्रुपक्ष्यः । विशुद्धशत्रुपक्षमिति पाठे क्रियाविशेषणम् । अन्तर्बहिश्च दुर्गस्यान्तर्भागं बहिर्भागं च ।

अनेन प्रकारेण शत्रोर्भूमिं लब्ध्वा ततो मध्यमस्य तत उदासीनस्य च लब्धुमीहेतेत्येष पृथिवीजयस्य प्रथमो मार्ग इत्याह — **एवं विजिगीषुरित्यादि** ।

मध्यमोदासीनसत्तायामुक्तः क्रमः । तदभावे त्वाह—**मध्यमोदासीनयोरभाव** इत्यादि । गुणातिशयेन शत्रुगुणातिशायिना स्वगुणेन । अरिप्रकृतीः साधयेत् शत्रोरमात्यादीन् स्वानुरक्तान् कुर्यात् । उत्तराः प्रकृतीः कोशदण्डादिकाः ।

तृतीयं मार्गमाह — **मण्डलस्याभाव** इत्यादि । मण्डलं दशराजकं तस्याभावे ।

चतुर्थमाह — **शक्यमेकमित्यादि** । शक्यम् आत्मसुजयम् । तेन द्विगुणः साधितेनैकेन सामन्तेन सहायभूतेन द्विगुणात्मबलः ।

जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत ।
उपजापोऽपसर्पो वा वामनं पर्युपासनम् ।
अवमर्दश्च पञ्चैते दुर्गलम्भस्य हेतवः ॥

इति कौटलीयार्थशास्त्रे दुर्गलम्भोपाये त्रयोदशाधिकरणे
चतुर्थोऽध्यायः पर्युपासनकर्म अवमर्दश्च,
आदितश्चतुश्चत्वारिंशच्छततमः ॥

---

जित्वा चेत्यादि । स्वधर्मेण यथायथं वर्णाश्रमयोः विहितेन धर्मेण मन्वाद्युक्तेन ।

उक्तान् दुर्गलम्भहेतून् श्लोकेन संगृह्णाति — उपजापोऽपसर्पो वे-त्यादि । उपजापापसर्पौ चेति क्वचित् पाठः ।

इति कौटलीयार्थशास्त्रव्याख्यायां दुर्गलम्भोपाये त्रयोदशेऽधिकरणे
चतुर्थोऽध्यायः पर्युपासनकर्म अवमर्दश्च ।
आदितश्चतुश्चत्वारिंशच्छततमः ॥

---

## १७६. प्रक. लब्धप्रशमनम् ।

**द्विविधं विजिगीषोः समुत्थानम् — अटव्यादिकमेकग्रामादिकं च ।**

**त्रिविधश्चास्य लम्भः — नवो, भूतपूर्वः, पित्र्य इति ।**

**नवमवाप्य लम्भं परदोषान् स्वगुणैश्छादयेत् गुणान् गुणद्वैगुण्येन । स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिश्च प्रकृतिप्रियहितान्यनुवर्तेत । यथासम्भाषितं च कृत्यपक्षमुपग्राहयेत । भूयश्च कृतप्रयासम् । अविश्वास्यो हि विसंवादकः स्वेषां परेषां च भवति; प्रकृतिविरुद्धाचारश्च । तस्मात् समानशीलवेषभाषाचारतामुपगच्छेत् । देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत ।**

**लब्धप्रशमन**मिति सूत्रम् । विजिगीषुणा लब्धस्य परदुर्गादिकस्य प्रशमनं लब्धप्रशमनम् । तच्च दुर्गादिवासिनाम् अपूर्वभूपतिविषयशङ्काद्यपोहनेन स्वात्मनि विस्रम्भजननम् । तदिहोच्यत इति सूत्रार्थः ।

**द्विविधमित्यादि** । समुत्थानम् उद्योगः, तेन तदुपार्जितं लक्ष्यते । अटव्यादिकमित्यादिपदेन खन्यादिकम् एकग्रामादिकमित्यादिपदेन नगरादिकं च ग्राह्यम् ।

**त्रिविधश्चेत्यादि** । लम्भो लाभः तेन लब्धोऽर्थो लक्ष्यते । नवः अस्वीय एव विजिगीषुणा शत्रुसकाशार्जितः । भूतपूर्वः स्वीय एव शत्रुवशे स्थितस्तं जित्वा प्रत्याहृतः । पित्र्यः स्वपितृसंबन्ध्येवार्थः परहस्तगतः परं जित्वा प्रत्याहृतः ।

तत्र नवलम्भे विधिमाह — **नवमवाप्येत्यादि** । छादयेत् विस्मारयेत् । गुणान् परकीयान् । गुणद्वैगुण्येन परगुणातिशायिस्वगुणप्रदर्शनेन । **स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिरित्यादि** । स्वीयैर्धर्मानुष्ठानैः कृष्यादिकर्मसु ऋणदानाद्युपकारैः करमोक्षणैः भूम्यादिदानकर्मभिः पूजनकर्मभिश्च । यथासंभाषितं पूर्वकृतसंविदनुसारेण । कृत्यपक्षं परकीयं क्रुद्धादिवर्गं कृतात्मोपकारम् । उपग्राहयेद् धनादिदानेन प्रीणयेदित्यर्थः । भूयः बहुतरम् । कृतप्रयासं कृतपरिश्रमप्रकर्षम् । प्रकृतिविरुद्धाचारः राष्ट्रजनाविरुद्धवृत्तवेषादिपरिग्रहः । देशदैवतसमाजोत्सवविहारेषु लब्धे देशे यद् दैवतं जनैराद्रियमाणं समाज उत्सवो विहारश्च, तेषु ।

**देशग्रामजातिसङ्घमुख्येषु चाभीक्ष्णं सत्रिणः परस्यापचारं दर्शयेयुः। माहाभाग्यं भक्तिं च तेषु स्वामिनः स्वामिसत्कारं च विद्यमानम्। उचितैश्चैनान् भोगपरिहाररक्षावेक्षणैर्भुञ्जीत। सर्वदेवताश्रमपूजनं च विद्यावाक्यधर्मशूरपुरुषाणां च भूमिद्रव्यदानपरिहारान् कारयेत्। सर्वबन्धनमोक्षणमनुग्रहं दीनानाथव्याधितानां च। चातुर्मास्येष्वर्धमासिकमघातं; पौर्णमासीषु च चातूरात्रिकं; राजदेशनक्षत्रेष्वेकरात्रिकम्। योनिबालवधं पुंस्त्वोपघातं च प्रतिषेधयेत्। यच्च कोशदण्डोपघातिकमधर्मिष्ठं वा चरित्रं मन्येत, तदपनीय धर्म्यव्यवहारं स्थापयेत्। चोरप्रकृतीनां म्लेच्छजातीनां च स्थानविपर्यासमनेकस्थं कारयेद् दुर्गराष्ट्रदण्डमुख्यानां च। परोपगृहीतानां च मन्त्रिपुरोहितादीनां परस्य प्रत्यन्तेष्वनेकस्थं वासं कारयेत्। अपकारसमर्थाननु क्षियतो वा भर्तृविनाशमुपांशुदण्डेन प्रशमयेत्। स्वदेशीयान् वा परेण वावरुद्धानपवाहितस्थानेषु स्थापयेत्।**

**देशग्रामेत्यादि**। परस्य जितस्य शत्रोः। अपचारम् अहितानुष्ठानम्। **माहेत्यादि**। माहाभाग्यं महाभागत्वम्। तेषु स्वदेशीयेषु ग्रामजातिसङ्घमुख्येषु। भक्तिं वात्सल्यम्। **उचितैरित्यादि**। भोगपरिहाररक्षावेक्षणैः भोगो राजभागः परिहारः करमोक्षः रक्षावेक्षणं कण्टकशोधनम् एतैः। भुञ्जीत उपयुञ्जीत। **सर्वदेवतेत्यादि**। विद्यावाक्यधर्मशूरपुरुषाणां विद्याशूराः पुरुषा विपश्चितः वाक्यशूरा वाग्मिनः धर्मशूराः धार्मिकाः तेषाम्। **सर्वेत्यादि**। सर्वबन्धनमोक्षणं सर्वेषां काराबद्धानां बन्धनाद् मोचनम्। **चातुरित्यादि**। चातुर्मास्येषु चतुर्षु चतुर्षु मासेष्वतीतेषु, अर्धमासिकमघातं पञ्चदशदिवसव्यापकं प्राणिवधप्रतिषेधं, पौर्णमासीषु च, चातूरात्रिकं रात्रिचतुष्टयव्यापकमघातं, राजदेशनक्षत्रेषु राजनक्षत्रेषु देशलम्भनक्षत्रेषु च, एकरात्रिकम् एकरात्रिव्यापकमघातं, कारयेदिति वर्तते। योनिबालवधं योनयो विजननक्षमाः कुक्कुट्यादयः बालाः भक्ष्यप्राणितर्णकाः तेषां वधं, पुंस्त्वोपघातं च षण्डीकरणं च, प्रतिषेधयेत्। **यच्चेत्यादि**। धर्म्यव्यवहारं धर्मानपेतचरित्रानुष्ठानम्। **चोरप्रकृतीनामित्यादि**। स्थानविपर्यासं स्थितिव्यत्ययम्। अनेकस्थम् असंहतम्। **परोपगृहीतानां चेत्यादि**। प्रत्यन्तेषु विषयान्तेषु। अनेकस्थं भिन्नभिन्नप्रदेशगतम्। **अपकारसमर्थानित्यादि**। भर्तृविनाशमनु क्षियतः स्मामिविनाशं लक्षीकृत्य वसतः। उपांशुदण्डेन रहोवधेन। **स्वदेशीयान् वेत्यादि**। अवरुद्धान् कारायां नियन्त्रितान्। अपव-

यश्च तत्कुलीनः प्रत्यादेयमादातुं शक्तः प्रत्यन्ताटवीस्थो वा प्रबाधितुमभिजातः, तस्मै विगुणां भूमिं प्रयच्छेत्ः गुणवत्याश्चतुर्भागं वा कोशदण्डदानमवस्थाप्य, यदुपकुर्वाणः पौरजानपदान कोपयेत्। कुपितैस्तैरेनं घातयेत्, प्रकृतिभिरुपक्रुष्टमपनयेद्, औपघातिके वा देशे निवेशयेदिति ।

भूतपूर्वे येन दोषेणापवृत्तः, तं प्रकृतिदोषं छादयेत । येन च गुणेनोपावृत्तः, तं तीव्रीकुर्यादिति ।

पित्र्ये पितृदोषाञ्छादयेत् । गुणांश्च प्रकाशयेदिति ॥

चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत ।
प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत ॥

इति कौटलीयार्थशास्त्रे दुर्गलम्भोपाये त्रयोदशाधिकरणे पञ्चमोऽध्यायः
लम्भप्रशमनम् । आदितः पञ्चचत्वारिंशच्छततमः
एतावता कौटलीयस्यार्थशास्त्रस्य दुर्गलम्भोपायं
त्रयोदशमधिकरणं समाप्तम् ॥

हितस्थानेषु अपवाहितानां स्वराज्याधिकारप्रत्याविताना परपक्ष्याणामधिकार-पदेषु ।

यदि परस्मादपहृतां भूमिं तद्वंश्यः कश्चित् प्रत्यादातुं शक्त इति शङ्क्येत विषयान्ताटवीस्थो वा तां बाधितुं शक्त इति शङ्क्येत, तस्मै तथाविधाय गुणहीनां भूमिं दद्याद्, अथवा गुणवत्या भूमेश्चतुर्थांशं दद्यात् कोशदण्डदानमात्मार्थं तावद् बहु व्यवस्थाप्य, यावतः साधनाय पौरजानपदान् सपीडयेद्, इत्याह यश्च तत्कुलीन इत्यादि । यत् कोशदण्डदानम् । उपकुर्वाणः साधयन् स्वस्मै ददानो वा । कोपनफलमाह — **कुपितैरित्यादि** । एनं कोपयितारम् । **प्रकृतिभिरित्यादि** । उपक्रुष्टं निन्दितम् । औपघातिके उपघातहेतुभूते । इतिशब्दो नवलम्भविधिसमाप्तौ ।

भूतपूर्वलम्भविषयमाह — **भूतपूर्वे** इत्यादि । अपवृत्तः स्वहस्तात् प्रच्युतः । छादयेत् लोपयेत् । उपावृत्तः परहस्तात् स्वहस्तं प्रत्यापन्नः । तीव्रीकुर्याद् द्रढयेत् ।

पित्र्यलम्भमधिकृत्याह — **पित्र्ये** इत्यादि । पितृदोषान् यैर्दोषैः पितुर्हस्तादपवृत्तस्तान् दोषानित्यर्थः ॥

**चरित्रमित्यादि ।** अकृतम् अन्याप्रवर्तितम् ॥

व्याख्यायामर्थशास्त्रस्य श्रीमूलाख्यानभाजने ।
**दुर्गलम्भोपायसंज्ञं** त्रयोदशमपूर्यत ॥

इति श्री**वञ्चिमण्डलमहाराजा**श्रितस्य **ताम्रपर्णी**तीरवर्ति**तरुवाग्रहारा-
भिजनस्य** श्री**सीताम्बा**श्री**रामसुब्रह्मण्या**र्यसूनोर्महामहोपाध्याय-
**गणपतिशास्त्रिणः** कृतिषु **कौटलीयार्थशास्त्र**व्याख्यायां
**श्रीमूला**ख्यायां दुर्गलम्भोपाये त्रयोदशेऽधिकरणे
पञ्चमोऽध्यायः लब्धप्रशमनम् । आदितः
पञ्चचत्वारिंशच्छततमः ॥
दुर्गलम्भोपायस्त्रयोदशमधिकरणं समाप्तम् ॥

# औपनिषदिकं—चतुर्दशमधिकरणम्।

## १७७. प्रक. परघातप्रयोगः।

**चातुर्वर्ण्यरक्षार्थमौपनिषदिकमधर्मिष्ठेषु प्रयुञ्जीत।**

**कालकूटादिः विषवर्गः श्रद्धेयदेशवेषशिल्पभाजनापदेशैः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मभिः म्लेच्छजातीयैरभिप्रेतैः स्त्रीभिः पुंभिश्च परशरीरोपभोगेष्वाधातव्यः।**

**राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु गूढाः शस्त्रनिधानं कुर्युः; सत्राजीविनश्च रात्रिचारिणोऽग्निजीविनश्चाग्निनिधानम्।**

---

इत्थं त्रयोदशभिरधिकरणैस्तन्त्रावापौ प्रपञ्चितौ, अथ तदुभयानुकूलमौपनिषादिकं चतुर्दशमधिकरणमारभ्यते। उपनिषन्नाम औषधमन्त्ररहस्यं, रहस्यत्वं च गुरूपदेशैकसमधिगम्यप्रयोगतया गोपनीयत्वात्: उपनिषदेव औपनिषदं, तदधिकृत्य प्रवृत्तमौपनिषदिकम्। तच्चेदं हिंसात्मकत्वादधर्मिष्ठेष्वेव प्रयोक्तव्यमित्याह-- **चातुर्वर्ण्येत्यादि**। चातुर्वर्ण्यरक्षार्थं वर्णग्रहणं जातेरप्युपलक्षणं तेन यथावर्णजातिविभक्तधर्मकर्मकं मनुष्यसामान्यं चातुर्वर्ण्यशब्दतो गृह्यते, तस्य रक्षार्थम् अधर्मिष्ठप्रभवाभ्य आपद्भ्योऽनन्यप्रतीकार्याभ्यः परित्राणसिद्धये। तत्र

**परघातप्रयोग** इति सूत्रम्। शत्रुवधार्थं औषधप्रयोग उच्यत इति सूत्रार्थः।

**कालेत्यादि**। कालकूटादिरित्यादिपदेन वत्सनाभहलाहलादीनां ग्रहणम्। श्रद्धेयदेशवेषशिल्पभाजनापदेशैः विश्वसनीयं देशं वेषं शिल्पं भाजनं चात्मनोऽपदिशद्भिः। कुब्जेत्यादिपदे कुब्जादयश्च मूकादिच्छद्मानश्चेति समासः। कुब्जो गड्डुलः, वामनः खर्वः, किरातोऽल्पतनुः। अभिप्रेतैः इष्टैः। परशरीरोपभोगेषु शत्रोर्देहोपभोग्येषु वस्त्रादिषु।

**राजक्रीडेत्यादि**। राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु क्रीडनकनिधानेषु भूषणनिधानेषु सुगन्धिद्रव्यनिधानेषु च राजोपभोग्येषु, गूढाः गूढपुरुषाः, शस्त्रनिधानं शस्त्रनिवेशनं कुर्युः। यद्वा राज्ञः क्रीडाभाण्डाद्युपभोगावसरेषु शस्त्रप्रयोगं कुर्युरित्यर्थः। सत्राजीविनश्च सत्रिणश्च, रात्रिचारिणः, अग्निजीविनश्च अयस्कारादयश्च, अग्निनिधानम् अग्निनिवेशनं कुर्युः।

**चित्रभेककौण्डिन्यककृकणपञ्चकुष्ठशतपदीचूर्णमुच्चिदिङ्गकम्बलिशतकन्देध्मकृकलासचूर्णं गृहगौलिकान्धाहिककृकणकपूतिकीटगोमारिकाचूर्णं भल्लातकावल्गुकारसयुक्तं सद्यःप्राणहरमेतेषां वा धूमः ।**

**कीटो वान्यतमस्तप्तः कृष्णसर्पप्रियङ्गुभिः ।**
**शोषयेदेष संयोगः सद्यःप्राणहरो मतः ॥**

**धामार्गवयातुधानमूलं भल्लातकपुष्पचूर्णयुक्तमार्धमासिकः ।**

**व्याघातकमूलं भल्लातकपुष्पचूर्णयुक्तं कीटयोगो मासिकः । कलामात्रं पुरुषाणां द्विगुणं खराश्वानां चतुर्गुणं हस्त्युष्ट्राणाम् ।**

**शतकर्दमोच्चिदिङ्गकरवीरकटुतुम्बीमत्स्यधूमो मदनकोद्रवपला-**

---

चित्रभेकादिचूर्णम् उच्चिदिङ्गादिचूर्णं गृहगौलिकादिचूर्णं च भल्लातकादिरसयुक्तं सद्यःप्राणहरम्, एषां चूर्णानां धूमो वा सद्यःप्राणहर इत्याह — **चित्रे**त्यादि । तत्र चित्रभेकः चित्रवर्णो मण्डूकः, कौण्डिन्यकः शकृन्मूत्रविषः कीटभेदः, कृकणः पक्षिभेदः कीटभेदो वा, पञ्चकुष्ठं कुष्ठस्य पारिभाव्यस्य त्वक्पत्रपुष्पफलमूलानि, शतपदी कर्णजलूका, उच्चिदिङ्गः अलविषः कीटभेदः । उच्चिटिङ्ग इति सुश्रुते । कम्बली कृमिभेदः, शत शतमूली नामैकदेशग्रहणात् । कन्दः कण्डूरः, इध्मं पलाशसमित्, कृकलासः सरटः । गृहगौलिका पल्ली, अन्धाहिको मत्स्यभेदः, पूतिकीटः कीटभेदः, गोमारिका ओषधिभेदः । भल्लातकः अरुष्कराख्यो वृक्षभेदः, अवल्गुका अवल्गुजा सोमराजी ॥

**कीट** इति । अन्यतमः उक्तेष्वेकतमः, कीटः, तप्तः, शोषयेत् आघ्राणादिनोपयुज्यमानः शोषणं कुर्यात् । अयं केवलस्य गुणः । मिश्रितस्य गुणमाह— कृष्णसर्पप्रियङ्गुभिः कृष्णसर्पेण कङ्गुभिश्च सह, संयोगः संप्राप्तयोगः, एष तप्त इत्यार्थम् । सद्यःप्राणहरो मतः ।

**धामार्गवे**त्यादि । आर्धमासिकः अर्धमासेन प्राणहरो योग इत्यर्थः । तत्र धामार्गवः कोशातकी, यातुधानो राक्षसशब्दवाच्य ओषधिभेदः ।

**व्याघातके**त्यादि । भल्लातकपुष्पचूर्णयुक्तेन आरग्वधमूलेन सह तप्तः कीटः कश्चित् कीटयोगो भवति । स उपयुज्यमानो मासेनैकेन प्राणहरो भवतीत्यर्थः । कीटयोगोपयोगमात्रामाह—**कलामात्र**मित्यादि । कला अल्पोंऽशः । पुरुषाणां नराणाम् । द्विगुणं कलाद्वयमात्रम् ।

**शतकर्दमे**त्यादि । तत्र कर्दमः यक्षकर्दमः, करवीरः हयमाराख्य

**लेन हस्तिकर्णपलाशपलालेन वा प्रवातानुवाते प्रणीतो यावच्चरति तावन्मारयति ।**

**पूतिकीटमत्स्यकटुतुम्बीशतकर्दमेध्मेन्द्रगोपचूर्णं पूतिकीटक्षुद्राराला-हेमविदारीचूर्णं वा बस्तशृङ्गखुरचूर्णयुक्तमन्धीकरो धूमः ।**

**पूतिकरञ्जपत्रहरितालमनश्शिलागुञ्जारक्तकार्पासपलालान्या-स्फोटकाचगोशकृद्रसपिष्टमन्धीकरो धूमः ।**

**सर्पनिर्मोकं गोश्वपुरीषमन्धाहिकशिरश्चान्धीकरो धूमः ।**

**पारावतप्लवकक्रव्यादानां हस्तिनरवराहाणां च मूत्रपुरीषं कासीसहिङ्गुयवतुषकणतण्डुलाः कार्पासकुटजकोशातकीनां च बीजानि गोमूत्रिकाभाण्डीमूलं निम्बशिग्रुफणिज्जकाक्षीवपीलुकभङ्गः सर्पशफरीचर्म हस्तिनखशृङ्गचूर्णमित्येष धूमो मदनकोद्रवपलालेन हस्तिकर्ण-पलाशपलालेन वा प्रणीतः प्रत्येकशो यावच्चरति तावन्मारयति ।**

ओषधिभेदः, कटुतुम्बी इक्ष्वाकुः । मदनो धुस्तूरः, कोद्रवो धान्यभेदः, हस्तिकर्णः कुस्तुम्बुरुः, पलाशः कर्चूरम्, पलालम् अफलो धान्यादिकाण्डः । प्रवातानुवाते प्रभूतमारुते अभिमारुते च ।

**पूतिकीटे**त्यादि । तत्र इन्द्रगोपः ज्योतिर्माली नाम कीटः । क्षुद्रा कण्टकारी, अराला यक्षधूपाख्यो निर्यासः, अत एव प्रयोगात् स्त्रियामप्ययम् । हेम धुस्तूरः, विदारी इक्षुगन्धा । अन्धीकरः अन्धङ्करणः ।

**पूतिकरञ्जे**त्यादि । तत्र पूतिकरञ्जः पूतिकाख्यो वृक्षभेदः, हरितालं नटमण्डनं, मनश्शिला कुनटी नाम धातुभेदः, गुञ्जा कृष्णला । आस्फोटो रक्तार्कः, काचं क्षारमृज्जो लवणभेदः । पिष्टमित्येकवचनं पूतिकरञ्जादिसमुदा-यविवक्षया, सामान्यविवक्षया च क्लीबत्वम् ।

सर्पकञ्चुको गवाश्वशकृद् अन्धाहिकाख्यमत्स्यशिर इति त्रयस्य धू-पितस्य धूमोऽन्धङ्करण इत्याह — **सर्पनिर्मोक**मित्यादि । निर्मोकशब्दस्य नपुंसकत्वमार्षम् ।

पारावतादिषट्कमूत्रपुरीषं कासीसादित्रिकं कार्पासादित्रिकबीजानि गो-मूत्रिकादिद्विकमूलं निम्बादिपञ्चकभङ्गः सर्पादिद्विकचर्म हस्तिसम्बन्धि नखशृ-ङ्गचूर्णमित्येतेष्वेकैकस्य मदनकोद्रवपलालेन वा हस्तिकर्णपलाशपलालेन वा प्रधूपितस्य धूमः स्वससञ्चारसमकालमेव प्राणिनो मारयतीत्याह — **पारावते-**

**कालीकुष्ठनडशतावरीमूलं सर्पप्रचलाककृकणपञ्चकुष्ठचूर्णं वा धूमः पूर्वकल्पेनार्द्रे शुष्कपलाले वा प्रणीतः सङ्ग्रामावतरणावस्कन्दनसंकुलेषु कृततेजनोदकाक्षिप्रतीकारैः प्रणीतः सर्वप्राणिनां नेत्रघ्नः ।**

**शारिकाकपोतबकबलाकालण्डमर्काक्षिपीलुकस्नुहिक्षीरपिष्टमन्धीकरणमञ्जनमुदकदूषणं च ।**

**यवकशालिमूलमदनफलजातीपत्रनरमूत्रयोगाः प्लक्षविदारीमूलयुक्तो मूकोदुम्बरमदनकोद्रवक्काथयुक्तो हस्तिकर्णपलाशक्काथयुक्तो वा मदनयोगः । शृङ्गिगौतमवृक्षकण्टकारमयूरपदीयोगो गुञ्जालाङ्गलीविषमूलिकेङ्गुदीयोगः करवीराक्षिपीलुकार्कमृगमारणीयोगो मदनको-**

---

त्यादि । तत्र पारावतः कपोतः, प्लवकः पक्षिभेदः, क्रव्यादो गृध्रः । कासीसं धातुभेदः, हिङ्गु रामठं, यवतुषकणतण्डुलं शितशूकसम्बन्धी तुषकणतण्डुलानां समाहारः । कुटजो वृक्षभेदः, कोशातकी अपामार्गः । गोमूत्रिका तृणभेदः, भाण्डी योजनवल्ली । शिग्रुः शोभाञ्जनः, फणिज्जः जम्बीरभेदः, काक्षीबः शिग्रुविशेषः, पीलुको वृक्षभेदः ।

नेत्रघ्नं धूमयोगमाह — **कालीत्यादि** । तत्र काली अम्बष्ठा नडः पोटगलः, शतावरी शतमूली । प्रचलाकः मयूरबर्हः । पूर्वकल्पेन 'मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वेति पूर्वम् अभिहितेन प्रकारेण । पूर्वकल्केनेति पाठे अर्थश्चिन्त्यः । आर्द्रशुष्कपलालेन वेति क्वचित् पाठः । कृततेजनोदकाक्षिप्रतीकारैः कृतं स्वचक्षुर्घातपरिहाराय सज्जितं तेजनोदकं स्वबलोपघातप्रतीकारप्रकरणे वक्ष्यमाणं वृक्षविशेषोदकम् अक्षिप्रतीकारश्च अपरश्च तज्जातीयश्चक्षुरुपघातप्रतिविधियैस्तथाभूतैः, अर्थात् प्रणेतृभिः ।

**शारिकेत्यादि** । तत्र शारिका गोराटी, बकः कह्वः बलाका बिसकण्ठिका । अर्कः अर्कपर्णाख्यौषधिः अक्षी वृक्षभेदो विभीतकप्रकारः, स्नुहिः समन्तदुग्धा ।

मदनयोगानाह — **यवकेत्यादि** । तत्र यवकः तोयपर्णिका, शालिः कलमादिः, जाती मालती, योगाः मिश्रणानि । प्लक्षः पिप्पलः । मूकम् आविलं जलम्, उदुम्बरो हेमदुग्धः । मदनयोगः चित्तविभ्रमकरो योगः । **शृङ्गिगौतमेत्यादि** । शृङ्गिगौतमं शृङ्ग्याख्यमत्स्याविशेषस्य भेदः, वृक्षः लोध्रः, कण्टकारः शाल्मलिवृक्षः, मयूरपदी ओषधिभेदः । लाङ्गली पृथक्पर्णी,

**द्रवकाथयुक्तो हस्तिकर्णपलाशकाथयुक्तो वा मदनयोगः। समस्ता वा यवसेन्धनोदकदूषणाः।**

**कृतकण्डलकृकलासगृहगौलिकान्धाहिकधूमो नेत्रवधमुन्मादं च करोति।**

**कृकलासगृहगौलिकायोगः कुष्ठकरः।**

**स एव चित्रभेकान्त्रमधुयुक्तः प्रमेहमापादयति; मनुष्यलोहितयुक्तः शोषम्।**

**दूषीविषं मदनकोद्रवचूर्णमुपजिह्विकायोगः मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपीलुकयोगो विषूचिकाकरः।**

**पञ्चकुष्ठककौण्डिन्यकराजवृक्षपुष्पमधुयोगो ज्वरकरः।**

**भासनकुलजिह्वाग्रन्थिकायोगः खरीक्षीरपिष्टो मूकबधिरकरो मासार्धमासिकः। कलामात्रं पुरुषाणामिति समानं पूर्वेण।**

---

विषमूलिका कालकूटादिः. इङ्गुदी कटभी। मृगमारणी ओषधिभेदः। उक्ताः सर्व एवैते योगाः यवसेन्धनोदकानि दूषयन्तीत्याह — **समस्ता वेत्यादि**।

नेत्रघातोन्मादोभयहेतुं धूममाह — **कृतकण्डलेत्यादि**। कृता पक्का कण्डला रलयोरभेदात् कण्डरा स्नायुसंघातो येषां ते कृतकण्डलाः तथाभूतानां कृकलासगृहगौलिकान्धाहिकानां धूमः अर्थात् कृकलासादिस्नायुसंघाततापनोत्पन्नो धूमः, नेत्रवधम्, उन्मादं चित्तविभ्रमं च, करोति। **कृतकण्डलेत्यादेरपरा व्याख्या** — कृतकण्डलाना मिश्रितकपिकच्छूकानां कृकलासादीनां धूमः इति।

**कृकलासेत्यादि**। इह योगशब्दो योगजधूमपरः। कुष्ठं कोठम्।

**स इत्यादि**। स एव कृकलासगृहगौलिकायोग एव। आन्त्रं परीतत्। प्रमेहम् अतिमूत्रस्रावरोगम्। शोषं क्षयम्।

**दूषीत्यादि**। दूषीविषम् औषधाद्युपहतवीर्यं विषं, मदनकोद्रवचूर्णम्, उपजिह्विकायोगः वम्रीमिश्रणं, मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपीलुकयोगः मातृवाहकः पक्षिभेदः अञ्जलिकारः ओषधिभेदः प्रचलाकभेकाक्षिपीलुका व्याख्याताः एषां योगः, विषूचिकाकरः।

**पञ्चकुष्ठेत्यादि**। तत्र राजवृक्ष आरग्वधः, पुष्पमधुः मधूकः।

**भासनकुलेत्यादि**। तत्र भासः शकुन्ताख्यः पक्षिविशेषः, **जिह्वा**

**भङ्गकाथोपनयनमौषधानां चूर्णं प्राणभृताम्। सर्वेषां वा काथोपनयनम्; एवं वीर्यवत्तरं भवति। इति योगसम्पत्।**

**शाल्मलीविदारीधान्यसिद्धो मूलवत्सनाभसंयुक्तश्चुचुन्दरीशोणितप्रलेपेन दिग्धो बाणो यं विध्यति, स विद्धोऽन्यान् दश पुरुषान् दशति; ते दष्टा दशान्यान् दशन्ति पुरुषान्।**

**भल्लातकयातुधानापामार्गबाणानां पुष्पैरेलकाक्षिगुग्गुलुहालाहलानां च कषायं बस्तनरशोणितयुक्तं दंशयोगः। ततोऽर्धधरणिको योगः सक्तुपिण्याकाभ्यामुदके प्रणीतो धनुश्शतायाममुदकाशयं दूषयति; मत्स्यपरम्परा ह्येतेन दष्टाभिमृष्टा वा विषीभवति; यश्चैतदुदकं पिबति स्पृशति वा।**

मञ्जिष्ठासंज्ञं भेषजं, ग्रन्थिका पिप्पलीमूलम्, खरीक्षीरपिष्टः गर्दभीदुग्धसम्मिश्रितः, मूकबधिरकरो मासार्धमासिकः मासेनार्धमासेन वा मूकत्वबधिरत्वयोरापादकः। योगानामुपयोक्तव्यपरिमाणं तु 'कलामात्रं पुरुषाणां द्विगुणः खराश्वानां चतुर्गुणं हस्त्युष्ट्राणाम्' इति पूर्वोक्तेन परिमाणेन समानमित्याह — **कलामात्रमि**त्यादि।

उक्तेषु योगेष्वौषधानां यथास्वं भङ्गकाथेन साधनं प्राणिनां चूर्णनं च कार्यमित्याह — **भङ्गे**त्यादि। उभयेषामपि काथोपनयनपक्षमाह — **सर्वेषां वे**त्यादि। काथसाधितस्य वीर्यातिशयमाह — **एवं वीर्यवत्तरमि**ति। **इति योगसम्पदि**ति। निरूपितेति शेषः।

औषधवीर्यमाह — **शाल्मली**त्यादि। तत्र धान्यं कुस्तुम्बुरु। मूलं पिप्पलीमूलं, वत्सनाभो विषभेदः। चुचुन्दरी उग्रविषो मूषिकभेदः। दिग्धो लिप्तः।

अन्यं दंशयोगमाह — **भल्लातके**त्यादि। तत्र बाणोऽर्जुनवृक्षः। पुष्पैः, साधितमिति शेषः। एलकः त्वग्गन्धाख्यो वृक्षः। **दंशयोग** इति। उक्तकषायोपयोगः पूर्ववद् बहुपुरुषदंशनोपायो भवतीत्यर्थः। तस्य वीर्यमाह — **तत** इत्यादि। तत उक्तात् कषायात्। अर्धधरणिकः रूप्यमाषकाष्टकप्रमाणः। सक्तुपिण्याकाभ्यां सक्तुना धानाचूर्णेन पिण्याकेन तिलकल्केन च सह। **एतेन** उक्तदंशयोगदूषितेन। विषीभवति विषतां प्रतिपद्यते। विषीभ-

**रक्तश्वेतसर्षपैर्गोधा त्रिपक्षमुष्टिकायां भूमौ निखातायां निहिता वध्येनोद्धृता यावत् पश्यति, तावन्मारयति । कृष्णः सर्पो वा ।**

**विद्युत्प्रदग्धोऽङ्गारोऽज्वालो वा विद्युत्प्रदग्धैः काष्ठैर्गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाभिहुतोऽग्निः प्रणीतश्च निष्प्रतीकारो दहति ।**

**कर्मारादग्निमाहृत्य क्षौद्रेण जुहुयात् पृथक् ।**
**सुरया शौण्डिकादग्निं भार्ग्यायामग्निं घृतेन च ॥**
**माल्येन चैकपत्न्यग्निं पुंश्चल्यग्निं च सर्षपैः ।**
**दध्ना च सूतिकास्वग्निमाहिताग्निं च तण्डुलैः ॥**

वन्तीति बहुवचनान्तपाठे कर्तृपदं बहुवचनान्तं छेत्तव्यम् । **यश्चेत्यादि** । यो वा एतदुदकं पिबति स च विपीभवतीत्यर्थः ।

निहाका नाम जलजन्तुः श्वेतैः रक्तैश्च सर्षपैः सह पञ्चचत्वारिंशतं दिवसान् मृद्भाण्डविशेषे भूमौ खाता स्थापिता पश्चाद् वध्यपुरुषेणोद्धृता सती यावत् तामुद्धृतां पश्यति तावत् न मारयतीत्याह --- **रक्तश्वेतेत्यादि** । **कृष्णः सर्पो वेति** । सोऽपि रक्तश्वेतसर्षपैः त्रीन् पक्षान् उष्ट्रिकायां भूखातस्थापितायां निहितो वध्येनोद्धृतो यावत् तमुद्धृतं पश्यति तावन्मारयतीत्यर्थः ।

निष्प्रतीकारमाग्नेयं योगमाह --- **विद्युत्प्रदग्ध इत्यादि** । विद्युत्प्रदग्धेन्धनस्थो निर्ज्वालस्तद्वद्भूताग्निर्विद्युत्प्रदग्धैः काष्ठैर्गृहीत्वाभिवर्धितः कृत्तिकायुक्ते भरणीयुक्ते वा काले रुद्रदेवताकेन कर्मणा कृतहोमः परदुर्गादिषु प्रयुक्तोऽशक्यप्रतिक्रियो दाह्यं दहतीत्यर्थः । कर्मानुष्ठानक्रमस्तु सम्प्रदायादवगन्तव्यः ।

योगान्तरं श्लोकचतुष्टयेनाह --- **कर्मारादित्यादिना** । कर्माराद् वेणोर्वेण्वन्तरसंघृष्टाद्, अग्निम् आहृत्य, क्षौद्रेण माक्षिकेण, पृथग् जुहुयात् । वक्ष्यमाणाग्निभ्यः पार्थक्येनावस्थापिते तस्मिन् होमं कुर्यात् । पृथगित्युत्तरेष्वपि संबध्यते । शौण्डिकाद् अग्निम् आहृत्य, सुरया मद्येन, जुहुयात् । अयोऽग्निम् अयश्शब्देनायस्कारलक्षणाद् अयस्कारसकाशादाहृतमग्निमित्यर्थः, भार्ग्या ब्राह्मणयष्टिकाख्ययौषध्या, घृतेन च जुहुयात् । एकपत्न्यग्निं पतिव्रतासकाशादाहृतमग्निं, माल्येन जुहुयात् । पुंश्चल्यग्निं पुंश्चली बन्धकी तदीयमग्निं, सर्षपैः जुहुयात् । सूतिकासु, विद्यमानमाहृतमिति शेषः, अग्निं दध्ना

चण्डालाग्निं च मांसेन चिताग्निं मानुषेण च ।
समस्तान् बस्तवसया मानुषेण ध्रुवेण च ॥

जुहुयादग्निमन्त्रेण राजवृक्षकदारुभिः ।
एष निष्प्रतिकारोऽग्निर्द्विषतां नेत्रमोहनः ॥

अदिते! नमस्ते; अनुमते! नमस्ते; सरस्वति! नमस्ते; देव! सवितर्नमस्ते। अग्नये स्वाहा; सोमाय स्वाहा; भूः स्वाहा; भुवः स्वाहा।

इति कौटलीयार्थशास्त्रे औपनिषदिके चतुर्दशाधिकरणे
प्रथमोऽध्यायः परघातप्रयोगः, आदितः
षट्चत्वारिंशदुत्तरशततमः ॥

---

जुहुयात्। आहिताग्निम् आहिताग्निसम्बन्धिनमग्निमित्यर्थः, तण्डुलैः, जुहुयात्। चण्डालाग्निं चण्डालादाहृतमग्निं, मांसेन जुहुयात्। चिताग्निं शवचित्याग्निं, मानुषेण जुहुयात्। समस्तान् व्यस्तान् पूर्वोक्तरीत्या पृथक् पृथगभिहुतान् नवविधान् अग्नीन् एकीकृतानित्यर्थः, बस्तवसया मेषवपया, मानुषेण, ध्रुवेण च वटेन च, राजवृक्षकदारुभिः आरग्वधकाष्ठैः, अग्निमन्त्रेण अग्निस्तावकमन्त्रेण सम्प्रदायाधिगन्तव्येन, जुहुयात्। एषोऽग्निः द्विषतां नेत्रमोहनः, एनमग्निं स्वदुर्गादिषु देदीप्यमानं शत्रवो न केवलं प्रतिकर्तुमशक्ताः, किन्तु तद्दर्शनान्मौढ्यमपि प्रतिपद्यन्त इत्यर्थः।

मन्त्रैकदेशं दर्शयति — अदिते! नमस्ते इत्यादि ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् औपनिषदिके चतुर्दशेऽधिकरणे प्रथमोऽध्यायः परघातप्रयोगः,
आदितः षट्चत्वारिंशदुत्तरशततमः ॥

## १७८. प्रक. प्रलम्भने अद्भुतोत्पादनम् ।

शिरीषोदुम्बरशमीचूर्णं सर्पिषा संहृत्यार्धमासिकक्षुद्योगः ।

कशेरुकोत्पलकन्देक्षुमूलबिसदूर्वाक्षीरघृतमण्डसिद्धो मासिकः ।

माषयवकुलत्थदर्भमूलचूर्णं वा क्षीरघृताभ्यां, वल्लीक्षीरघृतं वा समसिद्धं सालपृश्निपर्णीमूलकल्कं पयसा पीत्वा, पयो वा तत्सिद्धं मधुघृताभ्यामशित्वा, मासमुपवसति ।

श्वेतबस्तमूत्रे सप्तरात्रोषितैः सिद्धार्थकैः सिद्धं तैलं कटुकालाबौ मासार्धमासस्थितं चतुष्पदद्विपदानां विरूपकरणम् ।

तक्रयवभक्षस्य सप्तरात्रादूर्ध्वं श्वेतगर्दभस्य लण्डयवैः सिद्धं गौरसर्षपतैलं विरूपकरणम् ।

---

**प्रलम्भन**मिति सूत्रम् । औषधमन्त्रप्रयोगद्वारा क्षुत्प्रतीकारविरूपकरणादिना शत्रुवञ्चनमुच्यत इति सूत्रार्थः । अद्भुतोत्पादनं भैषज्यमन्त्रप्रयोगः इति द्विधा विभज्य प्रकरणमिदमध्यायद्वयेन वितन्यते । अद्भुतं पक्षोपवासमासोपवासादिकम् ।

तत्र पक्षोपवासानुकूलं योगमाह — **शिरीषे**त्यादि । शिरीषः कपीतनः, उदुम्बरो जन्तुफलाख्यो वृक्षः, शमी सक्तुफला । संहृत्य संयोज्य ।

मासोपवासयोगमाह — **कशेरुके**त्यादि । तत्र कशेरुकं वृष्यकन्दम्, उत्पलकन्दः कुवलयकन्दः, बिसं मृणालं, दूर्वा सहस्रवीर्या, मण्डः रसाग्रः ।

मासोपवासयोगस्य प्रकारान्तराण्याह — **माषयवे**त्यादि । माषादिचतुष्टयचूर्णं क्षीरघृताभ्यां मिश्रितं पीत्वेत्येकः प्रकारः, वल्लीक्षीरघृतं समप्रमाणसिद्धं पीत्वेति द्वितीयः, सालपृश्निपर्णीमूलकल्कं पयसा मिश्रं पीत्वेति तृतीयः, पृश्निपर्णीमूलकल्कैः सह क्वाथसाधितं क्षीरं मधुघृताभ्यां मिश्रितं पीत्वेति चतुर्थः । तत्र माषो मलदः, यवो दीर्घशूकः, कुलत्थो धान्यभेदः क्वचित् कुलस्थेति पाठः । दर्भः अश्ववालः । वल्ली अजमोदकः । सालः अर्जुनः, पृश्निपर्णी लाङ्गली, कल्कः द्रवाधश्चूर्णम् ।

विरूपकरणयोगमाह—**श्वेतबस्तमूत्र** इत्यादि । सिद्धार्थकैः सर्षपैः । कटुकालाबौ कटुतुम्ब्याम् ।

तस्य प्रकारान्तरमाह — **तक्रे**त्यादि । तक्रयवौ सप्तरात्रं भक्षयितुः पश्चाद् धवलगर्दभस्य विष्ठाभिर्यवैश्च सह पक्वं गौरसर्षपतैलमशित वैरूप्यकारकं भवतीत्यर्थः ।

एतयोरन्यतरस्य मूत्रलण्डरससिद्धं सिद्धार्थकतैलमर्कतूलपतङ्ग-चूर्णप्रतिवापं श्वेतीकरणम् ।

श्वेतकुक्कुटाजगरलण्डयोगः श्वेतीकरणम् ।

श्वेतबस्तमूत्रे श्वेतसर्षपाः सप्तरात्रोषितास्तक्रमर्कक्षीरमर्कतूलकटु-कमत्स्यविलङ्गाश्च । एष पक्षस्थितो योगः श्वेतीकरणम् ।

समुद्रमण्डूकीशङ्खसुधाकदलीक्षारतक्रयोगः श्वेतीकरणम् ।

कदल्यवल्गुजक्षाररसशुक्ताः सुरायुक्तास्तक्रार्कतूलस्नुहिलवणं धान्याम्लं च पक्षस्थितो योगः श्वेतीकरणम् ।

कटुकालाबौ वल्लीगते नगरमर्धमासस्थितं गौरसर्षपपिष्टं रोम्णां श्वेतीकरणम् ।

अर्कतूलोऽर्जुने कीटः श्वेता च गृहगौलिका ।
एतेन पिष्टेनाभ्यक्ताः केशाः स्युः शङ्खपाण्डराः ॥

---

श्वेतीकरणमाह — **एतयोरित्यादि** । एतयोः श्वेतबस्तश्वेतगर्दभयोः । अर्कतूलपतङ्गचूर्णप्रतिवापम् अर्कः धुस्तूरः तूलं ब्रह्मकाष्ठकं पतङ्गः शालिः ए-तेषां चूर्णं प्रतिवापः प्रतिवपन्ति प्रतिसर्जयन्ति प्रतियोजयन्त्यन्येनैनमिति व्यु-त्पत्त्या प्रतियोजनीयमौषधं यस्य तत् तथाभूतम् ।

श्वेतीकरणस्य प्रकारान्तरमाह — **श्वेतकुक्कुटेत्यादि** । धवलकुक्कवा-कुशयुविष्ठायोगः श्वैत्यकारक इत्यर्थः ।

अन्यं प्रकारमाह — **श्वेतबस्तमूत्र** इत्यादि । श्वेतच्छागमूत्रे सप्तरात्र-वासिताः श्वेतसर्षपाः उदश्विद् धुस्तूरदुग्धम्, अर्कवृक्ष-ब्रह्मकाष्ठक-पटोल-मत्स्य-कृमिघ्नाख्यौषधिभेदाश्चैतेषां योगः पञ्चदशरात्रस्थितः श्वेतीकारक इत्यर्थः ।

प्रकारान्तरमाह — **समुद्रमण्डूकीत्यादि** । तत्र सुधा मूर्वाख्यौषधिः क्षारो लवणभेदः ।

प्रकारान्तरमाह — **कदल्यवल्गुजेत्यादि** । तत्र अवल्गुजः सोम-राजी, क्षारो लवणभेदः, रसः पारदः, शुक्तः पूतिपरुषाम्लः, कन्दमूलफलाद्य-भिषवजद्रव्यं वा । धान्याम्लं काञ्जिकम् ।

लोमश्वेतीकरणमाह—**कटुकेत्यादि** । कटुकालाबौ कटुतुम्ब्याम् । वल्ली-गते तल्लतायाः अव्यपवृक्ते । नागरं शुण्ठी नगरमिति ह्रस्वादिकमेव तु पठ्यते ।

अपरं लोमश्वेतीकरणयोगं श्लोकेनाह — **अर्कतूल** इत्यादि । अर्जुने

**गोमयेन तिन्दुकारिष्टकल्केन वा मर्दिताङ्गस्य भल्लातकरसानुलिप्तस्य मासिकः कुष्ठयोगः।**

**कृष्णसर्पमुखे गृहगोलिकामुखे वा सप्तरात्रोषिता गुञ्जाः कुष्ठयोगः।**

**शुकपित्ताण्डरसाभ्यङ्गः कुष्ठयोगः।**

**कुष्ठस्य प्रियालकल्ककषायः प्रतीकारः।**

**कुक्कुटीकोशातकीशतावरीमूलयुक्तमाहारयमाणो मासेन गौरो भवति।**

**वटकषायस्नातः सहचरकल्कदिग्धः कृष्णो भवति।**

**शकुनकङ्गुतैलयुक्ता हरितालमनश्शिलाः श्यामीकरणम्।**

**खद्योतचूर्णं सर्षपतैलयुक्तं रात्रौ ज्वलति।**

ककुभवृक्षो यवसं चेत्यर्जुनद्वयम्। कीटः इह विशेषग्रहणं सम्प्रदायादवगन्तव्यम्। एतेन अर्कतूलादिसमुदायेन।

कुष्ठरोगोत्पादहेतुं योगमाह — **गोमयेनेत्यादि**। तत्र तिन्दुकः कालस्कन्धः, अरिष्टो निम्बः।

कुष्ठयोगस्य प्रकारान्तरमाह — **कृष्णसर्पमुख** इत्यादि।

प्रकारान्तरमाह — **शुकेत्यादि**। शुकपित्ताण्डरसाभ्यङ्गः शुकस्य मायुना अण्डरसेन चाङ्गानुलेपनम्।

कुष्ठस्य प्रतीकारमाह—**कुष्ठस्येत्यादि**। प्रियालकल्ककषायः प्रियालस्य राजादनाख्यस्य वृक्षस्य कल्केन कषायः।

गौरत्वापादकं योगमाह — **कुक्कुटीत्यादि**। तत्र कोशातकी पटोली, शतावरी शतमूली।

कृष्णयोगमाह — **वटकषायस्नात** इत्यादि। सहचरकल्कदिग्धः सहचरस्य अव्यथापरनाम्नः कुरवकस्य कल्केन स्नातः।

तस्य प्रकारान्तरमाह — **शकुनेत्यादि**। तत्र शकुनो गृध्रः, कङ्गुः प्रियङ्गुः। हरितालो नटमण्डनं, मनश्शिला कुनटी।

योगविशेषमाह — **खद्योतेत्यादि**। खद्योतो ज्योतिरिङ्गणः तस्य चूर्णं खद्योतचूर्णम्।

**खद्योतगण्डूपदचूर्णं समुद्रजन्तूनां भृङ्गकपालानां खदिरकर्णिकाराणां पुष्पचूर्णं वा शकुनकङ्गुतैलयुक्तं तेजनचूर्णम् पारिभद्रकत्वङ्मषी मण्डूकवसया युक्ता गात्रप्रज्वालनमग्निना ।**

**पारिभद्रकत्वग्वज्रकदलीतिलकल्कप्रदिग्धं शरीरमग्निना ज्वलति ।**

**पीलुत्वङ्मषीमयः पिण्डो हस्ते ज्वलति । मण्डूकवसादिग्धोऽग्निना ज्वलति ।**

**तेन प्रदिग्धमङ्गं कुशाम्रफलतैलसिक्तं समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा ज्वलति ।**

**मण्डूकवसासिद्धेन पयसा कुलीरादीनां वसया समभागं तैलं**

शरीरे तदबाधनाग्नेः प्रज्वलनानुकूलान् योगानाह — **खद्योतेत्यादि** । खद्योतगण्डूपदचूर्णं ज्योतिरिङ्गणकिञ्चुलुकयोश्चूर्णं, समुद्रजन्तूनाम् इह विशेषग्रहणं सम्प्रदायाद् विज्ञेयम् । भृङ्गकपालानां भृङ्गः कलिङ्गाख्यः पक्षी कपालाः शिरोस्थीनि तेषां, चूर्णमित्यर्थम् । खदिरकर्णिकाराणां खदिराणां दन्तधावनाख्यानां वृक्षाणां कर्णिकाराणां वृक्षोत्पलानां च, पुष्पचूर्णं वा, शकुनकङ्गुतैलयुक्तं गृध्रप्रियङ्गुतैलयुक्तं, तेजनचूर्णं वेणुचूर्णम् अर्थात् तथाभूतं, पारिभद्रकत्वङ्मषी निम्बत्वङ्मषी, मण्डूकवसया युक्ता । एतेष्वेकैकमिति शेषः । अग्निना गात्रप्रज्वालनम् एतेष्वेकैकं गात्रेऽनुलिप्तं गात्रस्य पीडां विनैवाग्निप्रज्वलनसाधनमित्यर्थः ।

**पारिभद्रेत्यादि** । तत्र वज्रं श्रीबेरम् ।

**पीलिवत्यादि** । पिण्डः बोलाख्यं भेषजम् । हस्ते ज्वलति विनाप्यग्नियोगमित्यर्थः प्रतीयते, उत्तरवाक्ये मण्डूकवसादिग्धस्य पिण्डस्याग्निना ज्वलनवचनात् ।

**तेन प्रदिग्धमित्यादि** । तेन पिण्डेन । कुशाम्रफलतैलसिक्तं कुशतैलाम्रफलतैलाभ्यां सिक्तम् । समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा समुद्रमण्डूकीसमुद्रफेनकयक्षधूपचूर्णैर्युक्तं वा ।

**मण्डूकेत्यादि** । मण्डूकवसासिद्धेन मण्डूकवसया सह पक्वेन, पयसा क्षीरेण, मिश्रमिति शेषः, कुलीरादीनां वसया, इहापि मिश्रमिति शेषः, समभागं

सिद्धमभ्यङ्गो गात्राणामग्निप्रज्वालनम्। मण्डूकवसादिग्धोऽग्निना ज्वलति।

वेणुमूलशैवललिप्तमङ्गं मण्डूकवसादिग्धमग्निना ज्वलति।

पारिभद्रकप्रतिबलावञ्जुलवज्रकदलीमूलकल्केन मण्डूकवसादिग्धेन तैलेनाभ्यक्तपादोऽङ्गारेषु गच्छति।

उपोदका प्रतिबला वञ्जुलः पारिभद्रकः।
एतेषां मूलकल्केन मण्डूकवसया सह॥
साधयेत् तैलमेतेन पादावभ्यज्य निर्मलौ।
अङ्गारराशौ विचरेद् यथा कुसुमसञ्चये॥

हंसक्रौञ्चमयूराणाम् अन्येषां वा महाशकुनीनाम् उदकप्लवानां पुच्छेषु बद्धा नलदीपिका रात्रावुल्कादर्शनम्।

वैद्युतं भस्माग्निशमनम्।

स्त्रीपुष्पपायिता माषा व्रजकुलीमूलं मण्डूकवसामिश्रं चुल्ल्यां दीप्तायामपाचनम्। चुल्लीशोधनं प्रतीकारः।

पयोवसातुल्यप्रमाण, तैलं, सिद्धम्, अभ्यङ्गः अभ्यज्यमानमित्यर्थः, गात्राणाम् अग्निप्रज्वालनम्। मण्डूकवसादिग्धः अर्थादुक्ततैलाभ्यक्त., अग्निना ज्वलति।

वेणुमूलेत्यादि। तत्र शैवलं जलनीली।

पारिभद्रकेत्यादि। तत्र प्रतिबला ओषधिभेदः।

अङ्गारराशिपादचारयोगं श्लोकाभ्यामाह— उपोदकेत्यादि। उपोदका सुताह्व ओषधिभेदः। अपोदकेति मत्स्यकालीनाम्ना काचिदोषधिरपरा क्षीरस्वामिनोक्ता॥

उल्काप्रदर्शनमाह -हंसेत्यादि। उदकप्लवानां जले प्लवमानानां कारण्डवादीनाम्। नलदीपिका नलरतृणविशेषस्तत्र योजिता दीपिका। उल्कादर्शनं रक्षःपिशाचादिभावितमलातमुल्का तद्दर्शनमिव नलदीपिकाया दूराद् दर्शनं नराणां भीतिं जनयतीत्यर्थः।

वैद्युतमिति। विद्युद्दग्धकाष्ठजं, भस्म, अग्निप्रशमनम्।

स्त्रीपुष्पपायिता इति। स्त्रीरजोवासिताः, माषाः, मण्डूकवसामिश्रं, व्रजकुलीमूलं गोष्ठोत्पन्नाया हिङ्गुद्याः मूलं च, चुल्ल्यां दीप्तायां प्रज्वलन्त्या-

पीलुमयो मणिरग्निगर्भः सुवर्चलामूलग्रन्थिः सूत्रग्रन्थिर्वा पिचुपरिवेष्टितो मुखादग्निधूमोत्सर्गः ।

कुशाम्रफलतैलसिक्तोऽग्निर्वर्षप्रवातेषु ज्वलति ।

समुद्रफेनकस्तैलयुक्तोऽम्भसि प्लवमानो ज्वलति ।

प्लवङ्गमानामस्थिषु कल्माषवेणुना निर्मथितोऽग्निर्नोदकेन शाम्यति, उदकेन च ज्वलति ।

शस्त्रहतस्य शूलप्रोतस्य वा पुरुषस्य वामपार्श्वपर्शुकास्थिषु कल्माषवेणुना निर्मथितोऽग्निः, स्त्रियाः पुरुषस्य वास्थिषु मनुष्यपर्शुकया निर्मथितोऽग्निर्यत्र त्रिरपसव्यं गच्छति, न चात्रान्योऽग्निर्ज्वलति ।

चुचुन्दरी खञ्जरीटः खारकीटश्च पिष्यते ।
अश्वमूत्रेण संसृष्टा निगलानां तु भञ्जनम् ॥

अयस्कान्तो वा पाषाणः ।

---

मपि चुल्ल्याम्, अपाचनं पाचनहीनं भवति, ते च तच्च पाकं न प्राप्नुवन्तीत्यर्थः । चुल्लीशोधनमिति । चुल्ल्या अवतार्य तेषां शुचीकरणं, प्रतीकारः ।

पीलवित्यादि । पीलुमयो मणिः पीलुदारुनिर्मितम् अलिञ्जरम्, अग्निगर्भः अन्तर्गताग्निः, सुवर्चलामूलग्रन्थिः क्षुमामूलग्रन्थिः, सूत्रग्रन्थिर्वा क्षुमासूत्रग्रन्थिर्वा, पिचुपरिवेष्टितः निरस्थितूलवेष्टितः, मुखाद्, अग्निधूमोत्सर्गः अग्न्युत्सर्गस्य धूमोत्सर्गस्य च साधनमित्यर्थः ।

कुशाम्रेत्यादि । वर्षप्रवातेषु वृष्टिषु महावातेषु च । ज्वलति न निर्वाति ।

समुद्रफेनक इत्यादि । स्पष्टार्थम् ।

प्लवेत्यादि । प्लवङ्गमानां मर्कटानाम् ।

शस्त्रहतस्येत्यादि । शूलप्रोतस्य शूलप्रवेशितदेहस्य । वामपार्श्वपर्शुकास्थिषु वामपार्श्वगतेषु पर्शुकाशब्दवाच्येषु अस्थिषु । यत्र प्रदेशे ।

निगलभञ्जनयोगं श्लोकेनाह — चुचुन्दरीत्यादि । खञ्जरीटः खञ्जनः । खारकीटः ऊषभूमिजः कीटः । पिष्यते प्रत्येकम् । संसृष्टाः पिष्टाश्चुचुन्दर्यादय एकीकृताः । भञ्जनं भञ्जनसाधनम् ॥

अयस्कान्तो वा पाषाण इति । निगलानां भञ्जनमिति वर्तते ।

कुलीराण्डदर्दुरखारकीटवसाप्रदेहेन द्विगुणो दारकगर्भः कङ्कभासपार्श्वोत्पलोदकपिष्टश्चतुष्पदद्विपदानां पादलेपः; उलूकगृध्रवसाभ्यामुष्ट्रचर्मोपानहावभ्यज्य वटपत्रैः प्रतिच्छाद्य पञ्चाशद्योजनान्यश्रान्तो गच्छति । श्येनकङ्ककाकगृध्रहंसक्रौञ्चवीचिरल्लानां मज्जानो रेतांसि वा योजनशताय । सिंहव्याघ्रद्वीपिकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि गर्भपतनान्युष्ट्रिकायामभिषूय श्मशाने प्रेतशिशून् वा तत्समुत्थितं मेदो योजनशताय ॥

अनिष्टैरद्भुतोत्पातैः परस्योद्वेगमाचरेत् ।
आराज्यायेति निर्वादः समानः कोप उच्यते ॥

इति कौटलीयार्थशास्त्रे औपनिषदिके चतुर्दशाधिकरणे
द्वितीयोऽध्यायः प्रलम्भने अद्भुतोत्पादनम्,
आदितः सप्तचत्वारिंशच्छततमः ॥

---

अयोमणयो हि बहुप्रकाराः, कश्चिदयश्चुम्बति कश्चिदयो भ्रामयति कश्चिदयो भनक्ति । तत्र भञ्जकोऽयस्कान्तविशेष इह ग्राह्यः, आयस्कान्त इति दीर्घादिः क्वचित् पठ्यते ।

पञ्चाशद्योजनाश्रान्तगमनयोगमाह — कुलीराण्डेत्यादि । द्विगुणो घनतां प्रतिपन्नः । दारकगर्भः सूकरगर्भः । कङ्केत्यादिपदे उत्पलो मत्स्यभेदः । पादलेपः पादलेपनसाधनम् । उष्ट्रचर्मोपानहौ उष्ट्रचर्ममय्यौ पादरक्षिण्यौ । योजनशतगमनयोगमाह — श्येनकङ्केत्यादि । तत्र वीचिरल्लः तरङ्गाकारकम्बलरेखाङ्कः प्राणीति व्याख्येयम् । क्वचित् चिरल्लानामिति पठ्यते । तत्र रेफस्य लेखकप्रमादकृतत्वे चिल्ल आतायी नाम पक्षीति व्याख्येयम् । मज्जानो वसाः । योजनशताय योजनशतगमनाय । कल्पन्त इति शेषः । प्रकारान्तरमाह — सिंहव्याघ्रेत्यादि । सार्ववर्णिकानि ब्राह्मणादिसर्ववर्णभवानि । गर्भपतनानि पतितान् गर्भान् । उष्ट्रिकायां मृद्भाण्डविशेषे । अभिषूय अभिषवविधिना सारं गृहीत्वा । प्रेतशिशून् वा अभिषूयेति सम्बध्यते । मेदः पलतेजः ॥

श्लोकेनाध्यायमुपसंहरति — अनिष्टैरिति । इति उक्तप्रकारैः, अद्भुतोत्पातैः आश्चर्यकरैरुपप्लवैः, परस्य शत्रोः, उद्वेगं भयम्, आराज्याय तद्राजत्वाय, आचरेद् उत्पादयेत् । स चायं डिम्बप्रवर्तनलक्षणो व्यापारः कल-

ङ्कहेतुभूतोऽपि किमर्थमुपदिश्यत इत्याह — **निर्वाद** इति । निर्वादः कलङ्कः लक्षणया तद्धेतुभूतो डिम्बप्रवर्तनलक्षणो व्यापारः, कोपे सति समानः विजिगीषुपरयोस्तुल्यः अन्योन्यमुद्दिश्यानुष्ठानविषयः, रागवशादेकस्य डिम्बप्रवृत्तावन्यस्यापि तत्प्रतिविधित्सोः सा भवत्येवावर्जनीयेत्यभिप्रायः। अत एव उच्यते व्युत्पाद्यते ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् औपनिषदिके चतुर्दशेऽधिकरणे
द्वितीयोऽध्यायः प्रलम्भनेऽद्भुतोत्पादनम्.
आदितः सप्तचत्वारिंशच्छततमः ॥

---

१७८. प्रक. प्रलम्भने भैषज्यमन्त्रप्रयोगः ।

मार्जारोष्ट्रवृकवराहश्वाविद्वागुलीनप्तृकाकोलूकानाम् अन्येषां वा निशाचराणां सत्त्वानामेकस्य द्वयोर्बहूनां वा दक्षिणानि वामानि वाक्षीणि गृहीत्वा द्विधा चूर्णं कारयेत् । ततो दक्षिणं वामेन वामं दक्षिणेन समभ्यज्य रात्रौ तमसि च पश्यति ।

एकाम्लकं वराहाक्षि खद्योतः कालशारिवा ।
एतेनाभ्यक्तनयनो रात्रौ रूपाणि पश्यति ॥

त्रिरात्रोपोषितः पुष्ये शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां यवानावास्याविक्षीरेण सेचयेत् । ततो यवविरूढमालामाबध्य नष्टच्छायारूपश्चरति ।

त्रिरात्रोपोषितः पुष्येण श्वमार्जारोलूकवागुलीनां दक्षिणानि वामानि चाक्षीणि द्विधा चूर्णं कारयेत् । ततो यथास्वमभ्यक्ताक्षो नष्टच्छायारूपश्चरति ।

त्रिरात्रोपोषितः पुष्येण पुरुषघातिनः काण्डकस्य शलाकाम्

---

भैषज्यं तावदाह — **मार्जारेत्यादि** । तत्र मार्जारः पृषदंशकः, वृकः ईहामृगः, श्वावित् शललः, वागुली पक्षिभेदः, नप्ता विष्किरः, उलूको दिवाभीतः । अन्येषां वाग्गुदादीनाम् । द्विधा पार्थक्येन । तत इत्यादि । दक्षिणम् अवामं स्वचक्षुः । वामेन मार्जारादिवामाक्षिचूर्णेन । समभ्यज्य सम्यगनुलिप्य ।

तमसि रूपदर्शनयोगस्य प्रकारान्तरमाह — **एकाम्लकमित्यादि** । तत्र अम्लकं लकुचम् । कालशारिवा कृष्णवर्णा भद्रा नामौषधिः ॥

अन्तर्धानयोगमाह — **त्रिरात्रोपोषित** इत्यादि । पुष्ये सिध्यनक्षत्रयुक्ते काले । आवास्य उप्त्वा । नष्टच्छायारूपः परैरदृष्टा छाया रूपं च यस्य स तथाभूतः ।

तस्यान्यं प्रकारमाह—**त्रिरात्रोपोषितः पुष्येण श्वमार्जारेत्यादि** । यथास्वं यथायथं दक्षिणचूर्णेन दक्षिणस्य स्वचक्षुषोऽभ्यञ्जनं वामचूर्णेन वामस्येति क्रमेणेत्यर्थः ।

तृतीयं प्रकारमाह — **त्रिरात्रोपोषितः पुष्येण पुरुषघातिन** इत्यादि । काण्डकस्य बाणस्य तल्लोहेनेत्यर्थः । शलाकाम् अञ्जनशलाकाम् ।

अञ्जनीं च कारयेत्; ततोऽन्यतमेनाक्षिचूर्णेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति।

त्रिरात्रोपोषितः पुष्येण कालायसीम् आञ्जनीं शलाकां च कारयेत्; ततो निशाचराणां सत्त्वानामन्यतमस्य शिरःकपालमञ्जनेन पूरयित्वा मृतायाः स्त्रिया योनौ प्रवेश्य दाहयेत्; तदञ्जनं पुष्येणोद्धृत्य तस्यामञ्जन्यां निदध्यात्। तेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति।

यत्र ब्राह्मणमाहिताग्निं दग्धं दह्यमानं वा पश्येत्, तत्र त्रिरात्रोपोषितः पुष्येण स्वयंमृतस्य वाससा प्रसेवं कृत्वा चिताभस्मना पूरयित्वा तमाबध्य नष्टच्छायारूपश्चरति।

ब्राह्मणस्य प्रेतकार्ये या गौः मार्यते, तस्या अस्थिमज्जाचूर्णपूर्णाहिभस्त्रा पशूनामन्तर्धानम्।

सर्पदष्टस्य भस्मना पूर्णा प्रचलाकभस्त्रा मृगाणामन्तर्धानम्।

उलूकवागुलीपुच्छपुरीषजान्वस्थिचूर्णपूर्णाहिभस्त्रा पक्षिणामन्तर्धानम्।

इत्यष्टावन्तर्धानयोगाः।

---

अञ्जनीम् अञ्जनोत्पादपात्रीम्। अन्यतमेन अक्षिचूर्णेन श्वमार्जाराद्यन्यतमचक्षुश्चूर्णेन।

चतुर्थं प्रकारमाह—त्रिरात्रोपोषितः पुष्येण कालायसीमित्यादि। कालायसीं कालायसमयीम्। निशाचराणां श्वमार्जारादीनाम्। तस्यामञ्जन्यां कालायस्यां पूर्वोक्तायाम्।

पञ्चमं प्रकारमाह—यत्र ब्राह्मणमित्यादि। प्रसेवं स्यूतं वस्त्रकोशमित्यर्थः। तम् आबध्य प्रसेवं स्वदेहसंबद्धं कृत्वा।

लोमवल्लाङ्गूलानां चतुष्पदानामन्तर्धानयोगं षष्ठमाह—ब्राह्मणस्येत्यादि। अस्थिमज्जाचूर्णपूर्णा अस्थ्नो मज्जायाश्च चूर्णेन पूर्णा। अहिभस्त्रा सर्पचर्म।

चतुष्पदसामान्यस्यान्तर्धानयोगं सप्तममाह—सर्पेत्यादि।

पक्ष्यन्तर्धानयोगमष्टममाह—उलूकेत्यादि। उलूकवागुल्योर्यत् पुच्छादिचतुष्टयं तस्य चूर्णैः पूर्णा।

इत्यष्टावित्यादि।

बलिं वैरोचनं वन्दे शतमायं च शम्बरम्।
भण्डीरपाकं नरकं निकुम्भं कुम्भमेव च ॥
देवलं नारदं वन्दे वन्दे सावर्णिगालवम्।
एतेषामनुयोगेन कृतं ते स्वापनं महत् ॥
यथा स्वपन्त्यजगराः स्वपन्त्यपि चमूखलाः।
तथा स्वपन्तु पुरुषा ये च ग्रामे कुतूहलाः ॥
भण्डकानां सहस्रेण रथनेमिशतेन च।
इमं गृहं प्रवेक्ष्यामि तूष्णीमासन्तु भाण्डकाः ॥
नमस्कृत्वा च मनवे बद्ध्वा शुनकफेलकाः।
ये देवा देवलोकेषु मानुषेषु च ब्राह्मणाः ॥
अध्ययनपारगाः सिद्धाः ये च कैलासतापसाः।
एते च सर्वसिद्धेभ्यः कृतं ते स्वापनं महत् ॥
अतिगच्छति च मय्यपगच्छन्तु संहताः।
अलिते वलिते मनवे स्वाहा ॥

एतस्य प्रयोगः — त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्यां श्वपाकीहस्ताद् बिलखावलेखनं क्रीणीयात्। तन्माषैः सह कण्डोलिकायां कृत्वा असङ्कीर्णे आदहने निखानयेत्। द्वितीयस्यां चतुर्दश्यामुद्धृत्य कुमार्या पेषयित्वा गुलिकाः कारयेत्। तत एकां गुलिकामभिमन्त्रयित्वा यत्रैतेन मन्त्रेण क्षिपति, तत् सर्वं प्रस्वापयति।

---

अथ चतुरः प्रस्वापनयोगान् वक्ष्यति। तत्राद्ययोर्द्वयोः साधारणं मन्त्रमाह — बलिं वैरोचनमित्यादि। 'अलिते वलिते मनवे स्वाहा' इत्येतदन्तस्य मन्त्रस्यार्थः स्पष्टप्रायः सम्प्रदायतो निर्णेयः ॥

अस्य मन्त्रस्य प्रयोगमाह — एतस्येत्यादिना। श्वपाकीहस्तात् चण्डालीहस्तात्। बिलखावलेखनं बिलं खनन्तीति बिलखा आखुजातीया जन्तवश्चण्डालभक्ष्यभूताः तेषामवलेखनं खण्डम्। तद् बिलखावलेखनम्। कण्डोलिकायां पिटे। असङ्कीर्णे अनाकीर्णे प्रदेशे। आदहने पितृवने। निखानयेत् खातायां भूमौ स्थापयेत्। द्वितीयस्यामित्यादि। कुमार्या कन्यकया। गुलिकाः गुटिकाः। तत् सर्वं तत्प्रदेशस्थं प्राणिजातम्।

**एतेनैव कल्पेन श्वाविधः शल्यकं त्रिकालं त्रिश्वेतमसङ्कीर्ण आदहने निखानयेत् । द्वितीयस्यां चतुर्दश्याम् उद्धृत्यादहनभस्मना सह यत्रैतेन मन्त्रेण क्षिपति, तत् सर्वं प्रस्वापयति ।**

**सुवर्णपुष्पीं ब्रह्माणीं ब्रह्माणं च कुशध्वजम् ।**
**सर्वाश्च देवता वन्दे वन्दे सर्वांश्च तापसान् ॥**
**वशं मे ब्राह्मणा यान्तु भूमिपालाश्च क्षत्रियाः ।**
**वशं वैश्याश्च शूद्राश्च वशतां यान्तु मे सदा ॥**

**स्वाहा । अमिले किमिले वसुजारे प्रयोगे फक्के वयुह्वे विहाले दन्तकटके स्वाहा ।**

**सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ।**
**श्वाविधः शल्यकं चैतत् त्रिश्वेतं ब्रह्मनिर्मितम् ॥**
**प्रसुप्ताः सर्वसिद्धा हि एतत् ते स्वापनं कृतम् ।**
**यावद् ग्रामस्य सीमान्तः सूर्यस्योद्गमनादिति ॥**

**स्वाहा ।**

**एतस्य प्रयोगः — श्वाविधः शल्यकानि त्रिश्वेतानि । सप्तरात्रोपोषितः कृष्णचतुर्दश्यां खादिराभिः समिधाभिरग्निमेतेन मन्त्रेणा-**

---

द्वितीयं प्रयोगमाह — **एतेनैवेत्यादि** । एतेनैव कल्पेन 'त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्याम्' इत्यनेन विधिना । शल्यकं शलम् । त्रिकालं त्रिश्वेतं त्रिषु स्थानेषु कार्ष्ण्येन त्रिषु स्थानेषु श्वेतिम्ना च युक्तम् । क्षिपति अर्थाच्छल्यकम् ।

तृतीयस्य प्रस्वापनयोगस्य मन्त्रमाह — **सुवर्णपुष्पीमित्यादि** । 'सूर्यस्योद्गमनादिति स्वाहा' इत्यन्तं मन्त्रस्वरूपम् । तत्र 'वसुजारे' इत्यस्य स्थाने 'वयुचारे' इति क्वचित् पठ्यते, 'वयुह्वे' इत्यस्य स्थाने 'घुट्टे' इति, 'कटके' इत्यस्य स्थाने 'कट्टके' इति च ।

अस्य मन्त्रस्य प्रयोगमाह — **एतस्य प्रयोगः श्वाविधः इत्यादिना** । 'त्रिश्वेतानी'त्येतदुत्तरम् 'आदहने निखानयेदि'ति संबन्धनीयम् । खादिराभिः खदिरो दन्तधावनाख्यो वृक्षः तन्मयीभिः । इह अणन्तत्वेऽपि ङीबभाव आर्षः । समिधाभिः समिद्भिः, इह 'आपं चैव हलन्तानाम्' इति

ष्टशतसंपातं कृत्वा मधुघृताभ्याम् अभिजुहुयात । तत एकमेतेन मन्त्रेण ग्रामद्वारि गृहद्वारि वा यत्र निखन्यते, तत् सर्वं प्रस्वापयति ।

बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।
निकुम्भं नरकं कुम्भं तन्तुकच्छं महासुरम् ॥
अर्मालवं प्रमीलं च मण्डोलूकं घटोबलम् ।
कृष्णकंसोपचारं च पौलोमीं च यशस्विनीम् ॥
अभिमन्त्रयित्वा गृह्णामि सिद्धार्थं शवशारिकाम् ।
जयतु जयति च नमः शलकभूतेभ्यः स्वाहा ।
सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ॥
सुखं स्वपन्तु सिद्धार्था यमर्थं मार्गयामहे ।
यावदस्तमयादुदयो यावदर्थं फलं मम ॥

इति स्वाहा ।

एतस्य प्रयोगः— चतुर्भक्तोपवासी कृष्णचतुर्दश्यामसङ्कीर्णं आदहने बलिं कृत्वा एतेन मन्त्रेण शवशारिकां गृहीत्वा पोत्रीपोट्टलिकां बध्नीयात् । तन्मध्ये श्वाविधः शल्यकेन विद्ध्वा यत्रैतेन मन्त्रेण निखन्यते, तत् सर्वं प्रस्वापयति ।

उपैमि शरणं चाग्निं दैवतानि दिशो दश ।
अपयान्तु च सर्वाणि वशतां यान्तु मे सदा ॥

स्वाहा ।

---

वागुरिमतेन हलन्ताट्टाप् । अष्टशतसम्पातं कृत्वा अष्टोत्तरं शतं संपाताः होमा यस्मिंस्तं तथाभूतं कृत्वा । तत इत्यादि । ततः आदहननिखातोद्धृतेभ्यः शल्यकेभ्यः ।

चतुर्थस्य प्रस्वापनयोगस्य मन्त्रमाह — बलिं वैरोचनमित्यादिना 'फलं मम । इति स्वाहा' इत्यन्तेन ।

एतस्य प्रयोगमाह —एतस्येत्यादि । चतुर्भक्तोपवासी चतुर्दिवसात्ता-नशनव्रती । शवशारिकां शवभूतां शारिकां मुखरां नाम पक्षिभेदम् । पोत्री-पोट्टलिकां पोत्रं वस्त्रं तदल्पं पोत्री पोट्टलिका 'पोट्टलम्' इति भाषाप्रसिद्धः पदार्थः पोत्रीमयीं पोट्टलिकामित्यर्थः । तन्मध्य इत्यादि । तन्मध्ये तस्याः पोट्टलिकाया मध्ये ।

अथ द्वारापावरणयोगस्य मन्त्रमाह —उपैमि शरणमित्यादि ।

**एतस्य प्रयोगः — त्रिरात्रोपोषितः पुष्येण शर्करा एकविंशतिसंपातं कृत्वा मधुघृताभ्याम् अभिजुहुयात् । ततो गन्धमाल्येन पूजयित्वा निखानयेत् । द्वितीयेन पुष्येणोद्धृत्यैकां शर्करामभिमन्त्रयित्वा कवाटमाहन्यात् । अभ्यन्तरं चतसृणां शर्कराणां द्वारमपाव्रियते ।**

**चतुर्भक्तोपवासी कृष्णचतुर्दश्यां भग्नस्य पुरुषस्यास्थ्ना ऋषभं कारयेत्; अभिमन्त्रयेच्चैतेन, द्विगोयुक्तं गोयानमाहृतं भवति; ततः परमाकाशे विक्रामति ।**

**सदा रविरविः सगण्डपरिघाति सर्वं भणाति । चण्डालीकुम्भीत्तम्बकटुकसारीघः सनारीभगोऽसि स्वाहा ।**

**तालोद्घाटनं प्रस्वापनं च ।**

**त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां तुवरीरावास्योदकेन सेचयेत् । जातानां पुष्येणैव गृहीत्वा रज्जुकां वर्तयेत् । ततः सज्यानां धनुषां यन्त्राणां च पुरस्ताच्छेदनं ज्याच्छेदनं करोति ।**

---

तत्प्रयोगमाह — **एतस्य प्रयोगः — त्रिरात्रोपोषित** इत्यादि । शर्कराः शिरोस्थीनि शिलाविशेषान् वा, गृहीत्वेति शेषः । अभिजुहुयाद् अर्थादग्निम् । पूजयित्वा शर्करा एवाभ्यर्च्य । **अभ्यन्तरमि**त्यादि । एकया शर्करया कवाटाघाते कृते शर्कराचतुष्टयान्तरालपरिमाणं विवरं कवाटे जायत इत्यर्थः ।

उक्तस्यैव मन्त्रस्य प्रयोगान्तरमाह — **चतुरि**त्यादि । एतेन 'उपैमि शरणमि'त्यादिना 'स्वाहा'न्तेन मन्त्रेण । आहृतगोयानप्रयोजनमाह — **ततः परमाकाश** इत्यादि ।

तालोद्घाटनप्रस्वापनयोरुभयोः साधकं योगं वक्ष्यन् प्रथमं तस्य मन्त्रमाह — **सदारविरविः सगण्डपरिघाती**त्यादि । सगण्डस्थाने सगन्धेति, क्वचित् पाठः । त्तम्बस्थाने तुम्भेति, 'सारीघः सनारी' इत्यस्य स्थाने 'सारीपसारी' इति च ।

**तालोद्घाटन**मिति । तालस्य द्वारयन्त्रस्य उद्घाटनम् ।

अथ ज्याच्छेदनयोगमाह — **त्रिरात्रोपोषित** इत्यादि । **तुवरीः** आढकीः । आवास्य उप्त्वा । रज्जुकाम् अल्पां रज्जुम् । वर्तयेत् सृजेत् । अर्थात् तुवर्यङ्कुरैरेव । वर्तयतीत्यपि पाठः । **तत** इत्यादि । सज्यानां समा-

**उदकाहिभस्त्रामुच्छ्वासमृत्तिकया स्त्रियाः पुरुषस्य वा पूरयेत्; नासिकाबन्धनं मुखग्रहश्च ।**

**वराहवस्तिमुच्छ्वासमृत्तिकया पूरयित्वा मर्कटस्नायुनावबध्नीयाद्; आनाहकारणम् ।**

**कृष्णचतुर्दश्यां शस्त्रहताया गोः कपिलायाः पित्तेन राजवृक्षमयीममित्रप्रतिमाम् अञ्ज्यात्; अन्धीकरणम् ।**

**चतुर्भक्तोपवासी कृष्णचतुर्दश्यां बलिं कृत्वा शूलप्रोतस्य पुरुषस्यास्थ्ना कीलकान् कारयेत् । एतेषामेकः पुरीषे मूत्रे वा निखात आनाहं करोति; पादेऽस्यासने वा निखातः शोषेण मारयति; आपणे क्षेत्रे गृहे वा वृत्तिच्छेदं करोति ।**

**एतेन कल्पेन विद्युद्दग्धस्य वृक्षस्य कीलका व्याख्याताः ।**

---

रोपितमौर्वीकाणाम् । **ज्याछेदनमिति** । एतद् यन्त्रावयवच्छेदनस्याप्युपलक्षणम् ।

नासिकाबन्धनमुखग्रहयोः साधकं योगमाह — **उदकाहिभस्त्रामित्यादि** । उच्छ्वासमृत्तिकया उच्छ्वाससम्बद्धया मृत्तिकया । नासिकाबन्धनं नासानिरोधः । **मुखग्रहः** मुखस्तम्भनम् ।

आनाहयोगमाह—**वराहवस्तिमित्यादि** । उच्छ्वासमृत्तिकया अर्थात् स्त्रियाः पुरुषस्य वा । मर्कटस्नायुना वानरवस्नसया 'स्नाय्वना स्नसा' इति यादवः । आनाहकारणम् आनाहो मलविष्टम्भः तस्य कारणम् ।

शत्र्वन्धीकरणयोगमाह—**कृष्णचतुर्दश्यामित्यादि** । पित्तेन पित्तधातुना । अञ्ज्यात् चक्षुषोर्लिम्पेत् । अन्धीकरणम् अर्थादमित्रस्य ।

आनाहयोगान्तरं, शोषेण मारणयोगं, वृत्तिच्छेदकरणयोगं चाह — **चतुर्भक्तेत्यादि** । बलिं कृत्वा यथाविहितं भूतोपहारं दत्त्वा । **आनाहं करोतीति** । यदीयं मूत्रादि तस्येत्यर्थम् । **पादेऽस्येत्यादि** । अस्य आसनादिस्वामिनः । वृत्तिच्छेदं जीविकाभङ्गम् ।

शूलप्रोतपुरुषास्थिकीलकोक्तं विधिं विद्युद्दग्धवृक्षकीलकेष्वतिदिशति— **एतेन कल्पेनेत्यादि** । विद्युद्दग्धवृक्षकीलकानामप्येकः पुरीषादिनिखातस्तत्तत्कार्यं जनयतीत्यर्थः ।

पुनर्नवमवाचीनं निम्बः काकमधुश्च यः ।
कपिरोम मनुष्यास्थि बद्ध्वा मृतकवाससा ॥
निखन्यते गृहे यस्य पिष्ट्वा वा यं प्रपाययेत् ।
सपुत्रदारः सधनस्त्रीन् पक्षान् नातिवर्तते ॥
पुनर्नवमवाचीनं निम्बः काकमधुश्च यः ।
स्वयंगुप्ता मनुष्यास्थि पदे यस्य निखन्यते ॥
द्वारे गृहस्य सेनाया ग्रामस्य नगरस्य वा ।
सपुत्रदारः सधनस्त्रीन् पक्षान् नातिवर्तते ॥
अजमर्कटरोमाणि मार्जारनकुलस्य च ।
ब्राह्मणानां श्वपाकानां काकोलूकस्य चाहरेत् ॥
एतेन विष्ठावक्षुण्णा सद्य उत्सादकारिका ।
प्रेतनिर्मालिका किण्वं रोमाणि नकुलस्य च ॥
वृश्चिकाल्याहिकृत्तिश्च पदे यस्य निखन्यते ।
भवत्यपुरुषः सद्यो यावत् तन्नापनीयते ॥

त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां गुञ्जा आवास्योदकेन च सेचयेत् । जातानाममावास्यायां पौर्णमास्यां वा पुष्ययोगिन्यां गुञ्जावल्लीर्ग्राहयित्वा मण्डलिकानि कारयेत् । तेष्वन्नपानभाजनानि न्यस्तानि न क्षीयन्ते ।

---

योगान्तरं श्लोकद्वयेनाह—पुनर्नवमित्यादि । अवाचीनं पुनर्नवम् अर्वाग्भवं शोथघ्नीसञ्ज्ञं शाकं तत्पुष्पं वा । काकमधुः काकप्रियफलो वृक्षः । काममधुरिति पाठान्तरं 'प्रपाययेद्' इत्यस्य स्थाने 'पदं नयेद्' इति क्वचित् पठ्यते ॥

त्रिपक्षान्तरमारणयोगस्य प्रकारान्तरं श्लोकद्वयेनाह — पुनर्नवमित्यादि । स्वयंगुप्ता आत्मगुप्तापरपर्याया कच्छुरा नामौषधिः ॥

सद्य उत्सादकारकं योगं सार्धेनाह — अजमर्कटेत्यादि । एतेन अजमर्कटादिरोमसंघातेन सह । अवक्षुण्णा चूर्णिता । सद्य उत्सादकारिका तत्क्षणोत्सत्तिहेतुः, अर्थाद् विष्टिनः ॥

अपुरुषीकरणयोगं सार्धेनाह — प्रेतेत्यादि । प्रेतनिर्मालिका शवनिर्माल्यम् । किण्वं मद्यबीजम् । वृश्चिकाल्याहिकृत्तिः वृश्चिकाही प्रसिद्धौ अली पुच्छकण्टकवान् वृश्चिकभेदः तेषां कृत्तिः चर्म ॥

अन्नपानभाजनाक्षययोगमाह—त्रिरात्रोपोषित इत्यादि । गुञ्जावल्ली .

रात्रिप्रेक्षायां प्रवृत्तायां प्रदीपाग्निषु मृतधेनोः स्तनानुत्कृत्य दाहयेत् । दग्धान् वृषमूत्रेण पेषयित्वा नवकुम्भमन्तर्लेपयेत्; तं ग्राममपसव्यं परिणीय तत्र न्यस्तं नवनीतमेषां तत् सर्वमागच्छतीति ।

कृष्णचतुर्दश्यां पुष्ययोगिन्यां शुनो लग्नकस्य योनौ कालायसीं मुद्रिकां प्रेषयेत्; तां स्वयं पतितां गृह्णीयात्; तया वृक्षफलान्याकारितान्यागच्छन्ति ।

मन्त्रभैषज्यसंयुक्ता योगा मायाकृताश्च ये ।
उपहन्यादमित्रांस्तैः स्वजनं चाभिपालयेत् ॥

इति कौटलीयार्थशास्त्रे औपनिषदिके चतुर्दशाधिकरणे
तृतीयोऽध्यायः प्रलम्भने भैषज्यमन्त्रप्रयोगः,
आदितोऽष्टचत्वारिंशच्छततमः ॥

---

पुंशिरःकपालोत्पन्ना एव कृष्णलालताः । मण्डलिकानि मण्डलाकृतीन्यधिकरणानि ।

ग्रामगतसर्वनवनीतागमनयोगमाह — रात्रीत्यादि । रात्रिप्रेक्षायां रात्रिनृत्तादौ । परिणीय परिगमय्य । एषां ग्रामाणाम् ।

वृक्षफलानयनयोगमाह — कृष्णेत्यादि । लग्नकस्य मत्तस्य । शुनः इह पुंस्त्वमविवक्षितं शुन्या इत्यर्थः । मुद्रिकाम् अङ्गुलीयकादिम् । तया मुद्रिकया । आकारितानि आहूतानि ॥

प्रान्ते श्लोकमाह — मन्त्रेत्यादि । मन्त्रभैषज्यसंयुक्ताः प्रकृताध्यायोक्ताः ये योगाः, ये च मायाकृताः गात्रप्रज्वालनाङ्गारराशिसञ्चारादिसाधकाः योगाः, तैः, अमित्रान् अरातीन्, उपहन्यात्, स्वजनं च अभिपालयेद् अमित्रोपघातद्वारेण रक्षेद्, विजिगीषुः ।

दत्ता टिप्पणिकास्माभिर्भैषज्यस्यैवमल्पशः ।
क्रमस्तु सर्वस्तस्यापि मन्त्रवत् साम्प्रदायिकः ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् औपनिषदिके चतुर्दशेऽधिकरणे तृतीयोऽध्यायः प्रलम्भने भैषज्यमन्त्रप्रयोगः । प्रलम्भनं समाप्तम् ।
आदितोऽष्टाचत्वारिंशच्छततमः ॥

१७९. प्रक. स्वबलोपघातप्रतीकारः।

**स्वपक्षे परप्रयुक्तानां दूषिविषगराणां प्रतीकारे श्लेष्मातककपित्थदन्तिदन्तशठगोजीशिरीषपाटलीबलास्योनाकपुनर्नवाश्वेतावरणक्काथयुक्तं चन्दनसालावृकीलोहितयुक्तं तेजनोदकं राजोपभोग्यानां गुह्यप्रक्षालनं स्त्रीणां सेनायाश्च विषप्रतीकारः।**

**पृषतनकुलनीलकण्ठगोधापित्तयुक्तं मषीराजिचूर्णं सिन्दुवारितवरणवारुणीतण्डुलीयकशतपर्वाग्रपिण्डीतकयोगो मदनदोषहरः।**

**सृगालविन्नामदनसिन्दुवारितवरणवारणवल्लीमूलकषायाणामन्यतमस्य समस्तानां वा क्षीरयुक्तं पानं मदनदोषहरम्।**

---

**स्वबलोपघातप्रतीकार** इति सूत्रम्। स्वसैन्यस्य परप्रयुक्तविषाम्बुदूषणादिनिमित्तो य उपघातः तस्य प्रतीकारोऽभिधीयत इति सूत्रार्थः।

**स्वपक्ष** इत्यादि। प्रतीकारे आकाङ्क्ष्यमाण इति शेषः। **श्लेष्मातके**त्यादि। राजभोग्यानां स्त्रीणां सेनायाश्च विषप्रयोगे परेण कृते श्लेष्मातकादिद्वादशकक्वाथयुक्तेन चन्दनजम्बुकीरुधिरयुक्तेन च तेजनोदकेन तद्गुह्यावनेजनं प्रतीकार इत्यर्थः। तत्र श्लेष्मातकः शेलुर्बसन्तकुसुमाख्यः, कपित्थो दधित्थः, दन्ती उदुम्बरपर्णी, दन्तशठो जम्बीरः, गोजी गोजिह्वा दार्विकाख्या, शिरीषः कपीतनः शुकप्रियाख्यः, पाटली गोलिहः अमोघा वा, बला वाट्यालकः, स्योनाकः शुकनासाख्यः, पुनर्नवा शोथघ्नी, श्वेता पैष्टिकी सुरा, वरणः सेतुसंज्ञो वृक्षभेदः।

मदनदोषप्रतीकारमाह — **पृषते**त्यादि। पृषतादिचतुष्टयपित्तयुक्तं मषीराज्योश्चूर्णं सिन्दुवारितादिषट्कयोग इति द्वयं मदकरद्रव्यदोषहरमित्यर्थः। तत्र पृषतो बिन्दुचित्रो मृगभेदः, नकुलो बभ्रुः, नीलकण्ठो मयूरः, गोधा जलजन्तुभेदः। मषी नीलशेफालिका, राजिः राजसर्षपः। सिन्दुवारितः सिन्दुवारवृक्षः; वरणः सेतुरुद्धिद्भेदः, वारुणी दूर्वा, तण्डुलीयकः जीवशाकः, शतपर्वाग्रं वंशाग्रं, पिण्डीतकः मरुवकः।

उक्तस्यैव प्रतीकारस्य प्रकारान्तरमाह — **सृगाले**त्यादि। सृगालविन्नादिपञ्चकमूलकषायाणां व्यस्तानां समस्तानां वा क्षीरयुक्तं पानं मदं हरतीत्यर्थः। तत्र सृगालविन्ना ओषधिभेदः, मदनः प्रसिद्धः, वारणवल्ली गजाह्वा गजापिप्पली।

**कैडर्यपूतितिलतैलमुन्मादहरं नस्तःकर्म ।**

**प्रियङ्गुनक्तमालयोगः कुष्ठहरः ।**

**कुष्ठलोध्रयोगः पाकशोषघ्नः ।**

**कट्फलद्रवन्तीविलङ्गचूर्णं नस्तःकर्म शिरोरोगहरम् ।**

**प्रियङ्गुमञ्जिष्ठातगरलाक्षारसमधुकहरिद्राक्षौद्रयोगो रज्जूदकविषप्रहारपतननिस्संज्ञानां पुनःप्रत्यानयनाय ।**

**मनुष्याणामक्षमात्रं; गवाश्वानां द्विगुणं; चतुर्गुणं हस्त्युष्ट्राणाम् ।**

**रुक्मगर्भश्चैषां मणिः सर्वविषहरः ।**

---

उन्मादप्रतीकारमाह — **कैडर्यपूतितिलतैलमित्यादि** । कैडर्यः कट्फलः, पूतिः पूतिकरजः, तिलाः प्रसिद्धाः । एतत्तैलेन क्रियमाणं नस्तःकर्म चित्तविभ्रमहरं भवतीत्यर्थः ।

कुष्ठहरं योगमाह — **प्रियङ्गुनक्तमालयोग** इत्यादि । तत्र प्रियङ्गुः कङ्गुः, नक्तमालश्चिरिबिल्वः ।

**कुष्ठलोध्रयोग** इति । कोठशाबरयोगः, पाकशोषघ्नः पाकः केशशौक्ल्यं शोषः क्षयः, तावुभौ हन्ति ।

शिरोरोगहरं नस्तःकर्मविशेषमाह— **कट्फलेत्यादि** । तत्र कट्फलः कैडर्यः, द्रवन्ती शम्बरी नामौषधिभेदः, विलङ्गः क्रिमिघ्नः ।

नष्टसंज्ञाप्रत्यापत्तिसाधकं योगमाह—**प्रियङ्ग्वित्यादि** । प्रियङ्गुः कङ्गुः, मञ्जिष्ठा अञ्जनवल्लिका, तगरो नन्द्यावर्तः, लाक्षा अलक्तः, मधुको मधुष्ठीलः, हरिद्रा रात्र्याख्या, क्षौद्रं माक्षिकम् एषां योगः योगसिद्धमौषधमित्यर्थः । रज्जूदकविषप्रहारपतननिस्संज्ञानां रज्जुबन्धेन उदकमज्जनेन विषवेगेन ताडनेन उच्चदेशादधःपतनेन च नष्टसंज्ञानां प्राणिनां, पुनःप्रत्यानयनाय पुनस्संज्ञाप्रतिलम्भनाय, कल्पत इति शेषः ।

उक्तानां प्रतीकारौषधानामुपयोक्तव्यां मात्रामाह —**मनुष्याणामि**त्यादि । अक्षमात्रम् अक्षः षोडशमाषकाः तावन्मात्रमित्यर्थः ।

**रुक्मेत्यादि** । रुक्मगर्भः अन्तर्गतस्वर्णः । एषां मणिः उक्तप्रियङ्ग्वादिनिष्पन्ना गुलिकेत्यर्थः । सर्वविषहरः धार्यमाणः सर्वविधं विषं हरति ।

जीवन्तीश्वेतामुष्ककपुष्पवन्दाकानामक्षीवे जातस्य अश्वत्थस्य मणिः सर्वविषहरः ।

तूर्याणां तैः प्रलिप्तानां शब्दो विषविनाशनः ।
लिप्तध्वजं पताकां वा दृष्ट्वा भवति निर्विषः ॥
एतैः कृत्वा प्रतीकारं स्वसैन्यानामथात्मनः ।
अमित्रेषु प्रयुञ्जीत विषधूमाम्बुदूषणान् ॥

इति कौटलीयार्थशास्त्रे औपनिषदिके चतुर्दशाधिकरणे
चतुर्थोऽध्यायः स्वबलोपघातप्रतीकारः,
आदित एकोनपञ्चाशच्छततमः ॥
एतावता कौटलीयस्यार्थशास्त्रस्यौपनिषदिकं
चतुर्दशमधिकरणं समाप्तम् ॥

---

जीवन्तीत्यादि । जीवन्त्यादीनां मणिः अक्षीवे जातस्याश्वत्थस्य मणिश्च सर्वविषहर इत्यर्थः । तत्र जीवन्ती गुडूची, श्वेता शङ्खिनी, मुष्ककः मोक्षकवृक्षः, पुष्पम् ओषधिभेदः, वन्दाका लताभेदः । अक्षीवः शिग्रुः महानिम्बो वा ॥

अध्यायप्रान्ते श्लोकावाह —**तूर्याणामित्यादि** । तूर्याणां वाद्यानाम् । तैः जीवन्त्यादिसाधितैरौषधैः । ध्वजं केतुदण्डम् । पताकां दण्डोर्ध्वबद्धमंशुकम् । **एतैरिति** । औषधयोगैरुक्तैः, स्वसैन्यानाम् आत्मनश्च प्रतीकारं रक्षां, कृत्वा, विषधूमाम्बुदूषणान् विषधूमयोगान् उदकदूषणयोगांश्च, अमित्रेषु शत्रुषु, प्रयुञ्जीत ॥

चतुर्दशाधिकरणमित्यौपनिषदाह्वयम् ।
व्याख्यायामर्थशास्त्रस्य **श्रीमूले** समपूर्यत ॥

इति श्री**वञ्चिमण्डलमहाराजा**श्रितस्य **ताम्रपर्णी**तीरवर्ति**तरुवाग्रहारा**भिजनस्य **श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्य**सूनोर्महामहोपाध्याय**गणपतिशास्त्रिणः** कृतिषु **कौटलीयार्थशास्त्र**व्याख्यायां **श्रीमूला**ख्यायाम् **औपनिषदिके** चतुर्दशेऽधिकरणे चतुर्थोऽध्यायः स्वबलोपघातप्रतीकारः । आदित एकोनपञ्चाशच्छततमः ।
औपनिषदिकं चतुर्दशमधिकरणं समाप्तम् ॥

---

# तन्त्रयुक्तिः—पञ्चदशमधिकरणम् ।

## १८०. प्रक. तन्त्रयुक्तयः ।

**मनुष्याणां वृत्तिरर्थः, मनुष्यवती भूमिरित्यर्थः; तस्याः पृथिव्या लाभपालनोपायः शास्त्रमर्थशास्त्रमिति ।**

**तद् द्वात्रिंशद्युक्तियुक्तम्—अधिकरणं, विधानं, योगः, पदार्थः, हेत्वर्थः, उद्देशः, निर्देशः, उपदेशः, अपदेशः, अतिदेशः, प्रदेशः, उपमानं, अर्थापत्तिः, संशयः, प्रसङ्गः, विपर्ययः, वाक्यशेषः, अनुमतं, व्याख्यानं, निर्वचनं, निदर्शनं, अपवर्गः, स्वसंज्ञा, पूर्वपक्षः, उत्तरपक्षः, एकान्तः, अनागतावेक्षणम्, अतिक्रान्तावेक्षणं, नियोगः, विकल्पः, समुच्चयः, ऊह्यमिति ।**

**यमर्थमधिकृत्योच्यते तदधिकरणम्—"पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्" (अधि० १. अध्या० १) इति ।**

---

तदित्थं चतुर्दशभिरधिकरणैः पृथिवीलाभपालनानुबन्धि कृत्स्नमर्थशास्त्रीयं प्रमेयजातं सप्रपञ्चं निरूप्य प्रकृतशास्त्रेऽर्थनिर्णयोपयोगितयाश्रिताः युक्तीः सलक्षणोदाहरणं दर्शयितुं तन्त्रयुक्तिसंज्ञमन्तिमं पञ्चदशमधिकरणमिदमारभ्यते । अत्र चैकमेव सूत्रं—

**तन्त्रयुक्तय** इति । तन्त्रम् अर्थशास्त्रं, तदाश्रिता युक्तयोऽभिधीयन्त इति सूत्रार्थः ।

तत्र प्रथममर्थशास्त्रपदार्थमाह--**मनुष्याणामित्यादि** । एतच्च 'पृथिव्या लाभे पालने च' इत्यादेः शास्त्रादिमवाक्यस्य व्याख्यया कृतपूर्वया व्याख्यातप्रायम् ।

**तदित्यादि** । तद् अर्थशास्त्रम् । **अधिकरणमित्यादिना** तासां द्वात्रिंशतो युक्तीनां नामत उद्देशः ।

अधिकरणं विवृणोति—**यमित्यादि** । यं प्रधानभूतमर्थमधिकृत्यार्थजातमुच्यते, तत् प्रधानार्थसंबद्धं सर्वमर्थजातम् अधिकरणमित्युच्यत इत्यर्थः । तदुदाहरति—**पृथिव्या** इत्यादि । पृथिवीरूपप्रधानार्थसंबद्धनानार्थप्रतिपादकं सर्वं शास्त्रमधिकरणपदव्यपदेश्यमित्याभिप्रायः । अनेन न्यायेन विनयाधिकाराध्यक्षप्रचारादिष्ववान्तरार्थेषु प्रधानतया विवक्षितेषु तत्तत्संबद्धान्यर्थजातानि तत्तदधिकरणानि भवन्ति ।

**शास्त्रस्य प्रकरणानुपूर्वी विधानम्** — "**विद्यासमुद्देशः, वृद्धसंयोगः, इन्द्रियजयः, अमात्योत्पत्तिः**" (अधि० १. अध्या० १) **इत्येवमादिकमिति ।**

**वाक्ययोजना योगः** — "चतुर्वर्णाश्रमो लोकः" (अधि० १. अध्या० ४) **इति ।**

**पदावधिकः पदार्थः** — "मूलहरः" इति पदम् । "**यः पितृपैतामहमर्थमन्यायेन** भक्षयति स मूलहरः" (अधि० २. अध्या० ९) **इत्यर्थः ।**

**हेतुरर्थसाधको हेत्वर्थः** — "अर्थमूलौ हि धर्मकामौ" (अधि० १. अध्या० ७) **इति ।**

**समासवाक्यमुद्देशः** — "विद्याविनयहेतुरिन्द्रियजयः" (अधि० १. अध्या० ६) **इति ।**

**व्यासवाक्यं निर्देशः** — "कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः" (अधि० १. अध्या० ६) **इति ।**

विधानमाह — **शास्त्रस्ये**त्यादि । प्रकरणानुपूर्वी प्रकरणानां प्रत्यधिकरणं क्रमनिवेशनम् । **एवमादिकमि**ति आदिपदेन 'मन्त्रिपुरोहितोत्पत्तिरि'त्यादिकं 'तन्त्रयुक्तय' इत्येतदन्तं प्रथमाध्यायगतं गृह्यते ।

योगमाह — **वाक्ययोजने**ति । वाक्यस्य योजना पदानां क्रियाकारकभावेन तद्विशेषणभावेन च मिथो योजनेत्यर्थः । 'चतुर्वर्णाश्रम' इति योगस्योदाहरणम् । विनयाधिकारचतुर्थाध्यायशेषश्चायं श्लोकः ।

पदार्थमाह — **पदावधिक** इत्यादि । यस्यार्थस्य पदमवधिः स पदार्थः । पदावधिकस्य शब्दभागस्य कल्प्यमानोऽर्थः पदार्थ इत्यर्थः ।

हेत्वर्थाख्यां तन्त्रयुक्तिमाह — **हेतु**रित्यादि । 'अर्थ एव प्रधान इति कौटल्यः' इति प्रतिज्ञातस्यार्थप्राधान्यलक्षणस्यार्थस्य धर्मकामयोरर्थसाध्यत्वं हेतुर्भवतीति स हेत्वर्थः ।

उद्देशमाह — **समासे**त्यादि । समासवाक्यं संक्षेपवाक्यम् । तत्त्वं च इन्द्रियशब्देन कर्णादीनां ग्रहणाद् बोद्धव्यम् ।

एवं वर्तितव्यमित्युपदेशः—"धर्मार्थाविरोधेन कामं सेवेत न निस्सुखः स्यात्" (अधि० १. अध्या० ७) इति।

एवमसावाहेत्यपदेशः—"मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः; षोडशेति बार्हस्पत्याः; विंशतिमित्यौशनसाः; यथासामर्थ्यमिति कौटल्यः" (अधि० १. अध्या० १५)।

उक्तेन साधनमतिदेशः—"दत्तस्याप्रदानमृणादानेन व्याख्यातम्" (अधि० ३. अध्या० १६) इति।

वक्तव्येन साधनं प्रदेशः—"सामदानभेददण्डैर्वा यथापत्सु व्याख्यास्यामः" (अधि० ७. अध्या० १४) इति।

दृष्टेनादृष्टस्य साधनमुपमानम्—"निवृत्तपरिहारान् पितेवानुगृह्णीयात्" (अधि० २. अध्या० १) इति।

यदनुक्तमर्थादापद्यते सार्थापत्तिः—"लोकयात्राविद् राजानमात्मद्रव्यप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत" (अधि० ५. अध्या० ४) नाप्रियहितद्वारेणाश्रयेतेत्यर्थादापन्नं भवतीति।

उभयतोहेतुमानर्थः संशयः—"क्षीणलुब्धप्रकृतिमपचारितप्रकृतिं वा" (अधि० ७. अध्या० ५) इति।

---

निर्देशमाह—व्यासवाक्यमित्यादि। अत्र इन्द्रियाणां कर्णत्वगादिविशेषाकारैर्ग्रहणाद् व्यासवाक्यता।

उपदेशमाह—एवं वर्तितव्यमित्यादि।

'एवमसावाहे'त्येवमन्यदीयपक्षस्य खण्डनार्थमुपन्यासः अपदेशाख्या तन्त्रयुक्तिरित्याह—एवमसावित्यादि।

अतिदेशमाह—उक्तेन साधनमित्यादि।

उपरिष्टाद् वक्ष्यमाणेनार्थेन समर्थनं प्रदेश इत्याह—वक्तव्येन साधनमित्यादि।

उपमानमाह—दृष्टेनेत्यादि। पिता हि प्रसिद्धः पुत्रेषु वत्सलो योगक्षेमचिन्तकश्च लोके दृष्टः; तदुपमया राज्ञः प्रजासु वात्सल्यादिकमवचनेऽपि सिद्धं भवतीति दृष्टेनादृष्टसाधनमिह द्रष्टव्यम्।

अर्थापत्तिमाह—यदनुक्तमित्यादि।

संशयमाह—उभयतोहेतुमानित्यादि। 'क्षीणलुब्धे'त्यादिना

प्रकरणान्तरेण समानोऽर्थः प्रसङ्गः — "कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण" (अधि० १. अध्या० ११ ) इति।

प्रतिलोमेन साधनं विपर्ययः—"विपरीतमतुष्टस्य"(अधि० १. अध्या० १६ ) इति।

येन वाक्यं समाप्यते, स वाक्यशेषः — "छिन्नपक्षस्येव राज्ञश्चेष्टानाशश्चेति" (अधि० ८. अध्या० १) तत्र शकुनेरिति वाक्यशेषः।

परवाक्यमप्रतिषिद्धमनुमतम् — "पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभागः" (अधि० १०. अध्या० ६) इति।

अतिशयवर्णना व्याख्यानम् — "विशेषतश्च सङ्घानां सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः तन्निमित्तो विनाश इत्यसत्प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यात्"(अधि० ८. अध्या० ३) इति।

गुणतः शब्दनिष्पत्तिर्निर्वचनम् — "व्यस्यत्येनं श्रेयस इति व्यसनम्"(अधि० ८. अध्या० १) इति।

---

निदर्शिते संशये उभयतोहेतुमत्त्वं तद्वाक्यव्याख्यायां षाड्गुण्यपञ्चमाध्याये स्पष्टम्।

प्रसङ्गमाह — प्रकरणान्तरेणेत्यादि। एकदेशातिदेशोऽयम्।

विपर्ययमाह — प्रतिलोमेनेत्यादि। प्रतिलोमेन उक्तविपरीतेन।

वाक्यशेषमाह— येनेत्यादि। वाक्यशेषः वाक्यघटकं पदम् अनुपात्तमपि सामर्थ्यतो गम्यत इत्यर्थः। इह चकारोऽप्युदाहरणे पठ्यते।

अनुमतमाह — परेत्यादि। उदाहरणस्य व्याख्यानं दशमाधिकरणषष्ठाध्याये द्रष्टव्यम्।

साधितस्यार्थस्यातिशयेन युक्त्यन्तरैः समर्थनं व्याख्यानमित्याह — अतिशयेत्यादि।

अर्थान्वयेन शब्दस्य प्रवृत्तिर्निर्वचनमित्यभिप्रायेणाह — गुणत इत्यादि।

दृष्टान्तो दृष्टान्तयुक्तो निदर्शनम् — "विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिवाभ्युपैति" (अधि० ७. अध्या० ३)।

अभिप्लुतव्यपकर्षणमपवर्गः — "नित्यमासन्नमरिबलं वासये-दन्यत्राभ्यन्तरकोपशङ्कायाः" (अधि० ९. अध्या० २) इति।

परैरसमितः शब्दः स्वसंज्ञा — प्रथमा प्रकृतिस्तस्य भूम्यन-न्तरा द्वितीया भूम्येकान्तरा तृतीया (अधि० ६. अध्या० २) इति।

प्रतिषेद्धव्यं वाक्यं पूर्वपक्षः— "स्वाम्यमात्यव्यसनयोरमात्य-व्यसनं गरीयः" (अधि० ८. अध्या० १) इति।

तस्य निर्णयनवाक्यमुत्तरपक्षः — "तदायत्तत्वात्; तत्कूटस्था-नीयो हि स्वामी" (अधि० ८. अध्या० १) इति।

सर्वत्रायत्तमेकान्तः— "तस्मादुत्थानमात्मनः कुर्वीत" (अधि० १. अध्या० १९) इति।

पश्चादेवं विहितमित्यनागतावेक्षणम् — "तुलाप्रतिमानं पौत-वाध्यक्षे वक्ष्यामः" (अधि० २. अध्या० १३) इति।

---

उपमानमुपमानसचिवं निदर्शनमित्याह— दृष्टान्त इत्यादि। इहोदा-हरणे गजरूपमुपमानं पदातिरूपोपमानसहितमुपात्तमिति बोद्धव्यम्।

कश्चिद् विधिमुत्सर्गेणाभितो व्यापकं कृत्वा व्याप्यत्वेनानिष्टाद् विषया-दपोहनमपवर्ग इत्याह — अभिप्लुतेत्यादि। अभिप्लुतव्यपकर्षणम् अभि-प्लुतस्य अभितः प्रसरतः व्यपकर्षणम्।

स्वसंज्ञामाह— परैरित्यादि। असमितः असङ्केतितः। इह प्रथमा प्रकृतिः द्वितीया तृतीयेति स्वपरिभाषिता संज्ञा।

पूर्वपक्षोत्तरपक्षयोर्लक्षणादिकं 'प्रतिषेद्धव्यं वाक्यम्' इत्येवमादि स्प-ष्टार्थम्।

एकान्तमाह — सर्वत्रेत्यादि। सर्वत्र आयत्तं देशकाले सर्वस्मिन्न-प्यवर्ज्यं यत्, स एकान्तः। उदाहरणे उत्थानस्यैकान्तिकत्वं स्पष्टम्।

अनागतावेक्षणम् अतिक्रान्तावेक्षणं नियोगो विकल्पः समुच्चय इत्ये-तेषां विवरणवाक्यानि 'पश्चादेवम्' इत्यादीनि सुबोधानि।

पुरस्तादेवं विहितमित्यतिक्रान्तावेक्षणम् — "अमात्यसम्पदुक्ता पुरस्तात्"(अधि० ६. अध्या० १) इति।

एवं नान्यथेति नियोगः—"तस्माद् धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च" (अधि० १. अध्या० १७) इति।

अनेन वानेन नेति विकल्पः — "दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः" (अधि० ३. अध्या० ५) इति।

अनेन चानेन चेति समुच्चयः — "स्वयञ्जातः पितृबन्धूनां च दायादः"(अधि० ३. अध्या० ७) इति।

अनुक्तकरणमूह्यम् —"यथावद् दाता प्रतिग्रहीता च नोपहतौ स्यातां, तथानुशयं कुशलाः कल्पयेयुः"(अधि० ३. अध्या० १६) इति॥

एवं शास्त्रमिदं युक्तमेताभिस्तन्त्रयुक्तिभिः।
अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च॥
धर्ममर्थं च कामं च प्रवर्तयति पाति च।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च॥

---

ऊह्यमाह— अनुक्तेत्यादि। अनुक्तस्य करणम् ऊहनम्। इहोदाहरणे 'यथावद्' इति पठ्यते। तेन तृतीयाधिकरणषोडशाध्यायस्थस्य 'यथा च दाता' इत्यस्य स्थाने 'यथावद् दाता' इत्यपि पाठसत्त्वानुमीयते। यथावदित्यस्य च यथेत्यर्थः॥

इत्थं सपरिकरं शास्त्रार्थं परिसमाप्य तदध्ययनप्रयोजनानि श्लोकाभ्यां संगृह्णाति — एवं शास्त्रमित्यादि। अवाप्तौ योगे। पालने क्षेमे। अस्य लोकस्य ऐहलौकिकस्य पुरुषार्थस्य। परस्य पारलौकिकस्य। उभयलोकयोगक्षेमसाधकतां 'धर्ममर्थं च' इत्यादिश्लोकेन स्पष्टयति। तत्रार्थकामावैहलौकिकौ पुरुषार्थौ, धर्मः पारलौकिक इति विवेकः। ननु अस्मिन् शास्त्रे गूढपुरुषप्रणिधानादिभिरुपायैः परवञ्चनानि नानारूपाणि कर्तव्यतयोपदिश्यन्ते, उपांशुवधादीनि च परहिंसनानि; तत् कथमिदं धर्मस्य प्रवर्तकं पालकं च भवतीति चेद्, उच्यते — प्रजापरिरक्षणं हि नाम राज्ञो धर्मः। तच्च धर्मपरेण विजिगीषुणा सम्यङ् निर्वर्त्यमानं धर्मपरा अपि सामन्ताः शत्रूभूय रागवशादसहमानाश्च परभूमिकामुकाश्च विचित्रैः पापिष्ठोपायप्रयोगैर्विहन्तुं स्वभावात्

येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥

इति कौटलीयार्थशास्त्रे तन्त्रयुक्तौ पञ्चदशाधिकरणे प्रथमोऽध्यायः
तन्त्रयुक्तयः । आदितः पञ्चाशच्छततमोऽध्यायः ।
एतावता कौटलीयस्यार्थशास्त्रस्य तन्त्रयुक्तिः
पञ्चदशमधिकरणं समाप्तम् ॥

---

दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च ॥

---

प्रयतन्ते । ईदृशे समुदाचारे राज्ञामौत्सर्गिके सति विद्याविनयवता आत्मसम्प-द्युक्तेन केनचिदपि राज्ञा परैरबाध्यमानेन वा, परान् अबाधमानेन वा, पर-प्रवर्तितान् आत्मोपघातान् अप्रतिकुर्वता वा, न कदाचिदपि स्वस्थेन स्थातुं शक्यं, न चानारब्धपरोत्पादितानर्थप्रतीकारेण स्वराज्यरक्षणं सम्यङ् निर्वर्तयितुं शक्यम् । अतः स्वराज्यपरिरक्षणरूपधर्मसम्यङ्निर्वृतये परवञ्चनानां परहिंसनानां च विचित्राः प्रकाराः प्रतिकार्यत्वबुद्ध्या जिज्ञासिता एव राज्ञां भवन्तीति तदुपदेशपरमिदं शास्त्रम् अनर्थनिवर्तनद्वारेण यथोक्तधर्मसाधकं भवत्येवेति सुष्ठूक्तं 'धर्मं प्रवर्तयति पाति च' इति ॥

तदेतदतिमहच्छास्त्रं कर्तुर्नैपुण्यं किं केवलवाक्यमात्रगुम्फने विश्रान्तम्, आहोस्विच्छास्त्रार्थानुष्ठानेऽपि प्रसृतमिति यदि कस्यचित् सन्देहः स्यात्, तमपाकर्तुं ग्रन्थकार आत्मनः प्रकृतशास्त्रार्थानुष्ठानानुष्ठापनप्रत्यक्षिततदीयफलतामाविष्करोति — **येने**त्यादि । शास्त्रं धातुकौटलीयादिकमितरच्छास्त्रजातम् । इदं शास्त्रम् अर्थशास्त्रम् । नन्दराजभूम्युद्धरणकथा तु **विष्णुवायुपुराणा**देरनुसन्धेया । अत्र **चाणक्यविष्णुगुप्ता**परपर्यायस्य **कौटल्य**स्य शास्त्र-शस्त्र-नन्दराजभूम्युद्धर्तृत्वलक्षणेनासाधारणरूपेणाभिधानं पर्यायोक्तं प्रयोजयति ॥

अथात्मनः सूत्रभाष्योभयकर्तृत्वाविष्करणे कारणमाह — **दृष्ट्वे**त्यादि ॥

**श्रीमूले कौटलीयार्थशास्त्रस्य** विवृताविदम् ।
**तन्त्रयुक्त्याह्वयं** पञ्चदशाधिकरणं गतम् ॥

गणपतिरिति कश्चिद् ब्राह्मणस्ताम्रपर्णी-
तटजुषि तरुवैनाम्न्यग्रहारेऽभिजातः ।
नरपतिनयसर्वस्वोपदेशप्रधानं
व्यवृत विपुलयत्नः कौटलीयार्थशास्त्रम् ॥

इति श्रीवञ्चिमण्डलमहाराजाश्रितस्य ताम्रपर्णीतीरवर्तितरुवाग्रहारा-
भिजनस्य श्रीसीताम्बाश्रीरामसुब्रह्मण्यार्यसूनोर्महामहोपाध्याय-
गणपतिशास्त्रिणः कृतिषु कौटलीयार्थशास्त्रव्याख्यायां
श्रीमूलाख्यायां तन्त्रयुक्तौ पञ्चदशेऽधिकरणे
प्रथमोऽध्यायः तन्त्रयुक्तयः, आदितः
पञ्चाशच्छततमः ॥
तन्त्रयुक्तिः पञ्चदशमधिकरणं समाप्तम् ॥

---

कौटलीयार्थशास्त्रं सम्पूर्णम् ।
शुभं भूयात् ॥

# APPENDIX No. I.

IMPORTANT VARIANT READINGS OF THE PRESENT EDITION AS COMPARED WITH THE EDITION OF MYSORE AND LAHORE.

| पृष्ठम्. | पङ्क्तिः. | Mysore edition. | पृष्ठम्. | पङ्क्तिः. | Lahore edition. | पृष्ठम्. | पङ्क्तिः. | Trivandrum edition. |
|---|---|---|---|---|---|---|---|---|
| १ | १६ | चयकर्म | | | ... | ५ | २ | निचयकर्म |
| २ | १ | आक्षपटले | | | ... | ६ | १ | अक्षपटले |
| ,, | ५ | पण्याध्यक्षः । आयुधा | | | ... | ७ | २ | पण्याध्यक्षः । १७. कुप्याध्यक्षः । १८. आयुधा |
| ,, | १० | गृहपतिवैदेह | २ | १ | तद्वत् | ९ | १ | गृहपतिकवैदेह |
| ३ | १६ | सामवायित | | | ... | १५ | ४ | सामवायिक |
| ५ | १ | गुल्फ | | | ... | २१ | २ | फल्गु |
| ,, | २ | संहतव्यूहनम् | | | ... | ,, | ३ | संहतव्यूहव्यूहनम् |
| ,, | ,, | व्यूहस्थाप | ३ | २० | तद्वत् | ,, | ,, | व्यूहसंस्थाप |
| ,, | ४ | संवृत्त | | | ... | २२ | १ | संघवृत्त |
| ७ | १ | नयानयौ | | | ... | २७ | ६ | नयापनयौ |
| ,, | २ | माणा लोकत्वौ | ४ | २१ | तद्वत् | २८ | १ | माणान्वीक्षिकी लोकरं. |
| ९ | १५ | वर्त्मसु | ६ | ११ | तद्वत् | ३३ | ७ | वेश्मसु |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १२ | ११ | स्वप्नलौल्य | | | ... | ३९ | ५ | स्वप्नं लौर्य |
| १५ | १५ | अयौगपद्या | १० | ७ | तद्वत् | ४६ | ६ | यौगपद्या |
| १६ | ११ | मौपवादिकं | | | ... | ४८ | ७ | मौपपादिकं |
| १८ | १ | कार्ये | ११ | २२ | तद्वत् | ५१ | ,, | चार्ये |
| ,, | १५ | एतेनैव दोषेण | | | ... | ५२ | १ | एतेनैव वेषेण |
| २० | ३ | धर्मनिमित्त | | | ... | ५६ | ३ | धर्मं निमित्त |
| २१ | ८ | गीतवाद्य | | | ... | ५९ | ४ | गीतपाठ्यवाद्य |
| ,, | १४ | सम्पातश्चोरार्थं | | | ... | ६० | ,, | सम्पातनिश्चारार्थं |
| २२ | ३ | वनचरैः | | | ... | ६१ | ७ | वनचराः |
| ,, | १२ | गूढपुरुषप्राणिधिः कृत | | | ... | ६३ | २ | कृत |
| २४ | १४ | तुल्यै | | | ... | ६७ | ६ | कुल्यै |
| ,, | १५ | परोक्षदण्डितः | | | ... | ,, | ,, | परोक्तदण्डितः |
| ,, | ,, | सर्वसमाहारितः | | | ... | ,, | ७ | सर्वस्वमाहारितः |
| ,, | १८ | दण्डेनोपनतः | | | ... | ६८ | २ | दण्डेनोपहतः |
| २५ | ७ | राजा पौर | १६ | १४ | तद्वत् | ६९ | ४ | राजान्धेन मन्त्रिणाधिष्ठितः पौर |
| २९ | १ | मन्त्रयेत च | १८ | १९ | तद्वत् | ७५ | ६ | मन्त्रयेत । न च |
| ,, | १० | तच्चक्षुः | | | ... | ७६ | ८ | स तच्चक्षुः |
| ३० | १५ | तस्मादुद्धृतेष्वपि | | | ... | ७९ | ४ | तस्मादुद्यतेष्वपि |
| ३१ | ,, | वायामदेश | | | ... | ८१ | ६ | वा व्यायामदेश |
| ३३ | ,, | प्रजनने | २१ | १४ | तद्वत् | ८६ | ,, | प्रजने |

## APPENDIX No. 1—(*continued*).

| पृष्ठम्. | पङ्क्तिः. | Mysore edition. | पृष्ठम्. | पङ्क्तिः. | Lahore edition. | पृष्ठम्. | पङ्क्तिः. | Trivandrum edition. |
|---|---|---|---|---|---|---|---|---|
| ३४ | १४ | पण्डनं डिमवो वा | २२ | १ | प॰डो डिम्बो वा | ८८ | ४ | पण्यं डिम्बो वा |
| ३५ | ३ | तुल्य | | | ... | ८९ | २ | कुल्य |
| ,, | ७ | भागी तु | ,, | १० | भागस्तु | ,, | ५ | भागि तु |
| ३६ | १ | कोदण्ड | | | ... | ९१ | १ | कोशदण्ड |
| ,, | २ | पक्षोपगृहं | | | ... | ,, | २ | पक्षोपग्रहं |
| ,, | १२ | नाहं | २३ | ५ | तद्वत् | ९२ | ४ | तानहं |
| ३७ | ११ | चतुरङ्गुलाच्छायो मध्याह्न इति । पूर्वे | ,, | १८ | तद्वत् | ९४ | ५ | चतुरङ्गुला चच्छाया मध्याह्न इति [चत्वारः पूर्वे |
| ४२ | १६ | वाप्यकृत्योप | | | ... | १०३ | ६ | वाप्यपकृत्योप |
| ४३ | १४ | पाकलोप | | | ... | १०५ | ४ | पङ्कमलोप |
| ४४ | १९ | पराभाध | | | ... | १०७ | ६ | पराबाध |
| ४७ | ७ | पातिकौ | २९ | १ | तद्वत् | १११ | ,, | घातिकौ |
| ,, | १४ | दुप्रकामतः | ,, | ७ | तद्वत् | ११२ | ५ | दुपक्रामतः |
| ,, | १८ | बन्धूनश्रृण्वतो | ,, | १० | तद्वत् | ११३ | २ | बन्धूननुशृण्वतो |
| ४८ | ८ | दावृश्च्य धर्मस्वान् | | | ... | ११४ | १ | दापृच्छ्य धर्मस्थान् |
| ,, | १२ | तत्रारामविहारार्थाः | ,, | १९ | तद्वत् | ,, | ४ | तत्रारामा विहारार्थाः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ४९ | ९ | गोत्र(त) पराणि | ३० | १० | गोत्रकपराणि | ११६ | ,, | गोरुतपराणि |
| ,, | १० | गुल्फ | | | ... | ,, | ,, | गुल्म |
| ,, | ११ | व्यालमार्गा | ,, | १२ | तद्वत् | ,, | ५ | व्यालं मार्गा |
| ,, | १२ | लभमृग | ,, | ,, | तद्वत् | ,, | ६ | लभं मृग |
| ,, | १७ | मटव्यां रक्षन् | ,, | १६ | मटव्यारक्ष्यं | ११७ | १ | मटव्यारक्षं |
| ५० | ४ | मृगास्या | | | ... | ,, | ३ | मृतस्या |
| ,, | ११ | प्रधानो विजयो | | | ... | ११८ | ,, | प्रधानो हि विजयो |
| ,, | १४ | प्राच्याश्वेति करू | ३१ | २ | तद्वत् | ,, | ५ | प्राच्याश्वेदिकरू |
| ,, | १६ | पाञ्चजना: | ,, | ४ | तद्वत् | ,, | ७ | पाञ्चनदा: |
| ५१ | ४ | खजनोदकं | ,, | ११ | तद्वत् | ११९ | ४ | खञ्जनोदक |
| ,, | ६ | आपाद्यप्रसारो | | | ... | ,, | ६ | आपद्यपसारो |
| ,, | १२ | दण्डानुविस्तीर्णा: | | | ... | १२० | ३ | दण्डान् विस्तीर्णा: |
| ५२ | ७ | द्वितलां द्वयर्धा | ३२ | ४ | तद्वत् | १२२ | १ | द्वितलामध्यर्धा |
| ,, | १४ | आग्राह्ये | ,, | ८ | तद्वत् | ,, | ७ | अग्राह्ये |
| ,, | ,, | निष्कुट | ,, | ९ | निष्कुर | ,, | ८ | निष्कुह |
| ,, | १५ | भंगिनीं त्रिशूलप्रकारकूटावपात | ,, | ,, | भञ्जनीं त्रिशूलप्रक।रकूट।वपात | १२३ | १ | भञ्जनीत्रिशूलप्रकरकूपकूट।वपात |
| ५३ | ५ | रथ्रं षड्भागायामा | ,, | १३ | रथ्रं षड्भ।ग।म।य।मा | ,, | ५ | रथ्रम् । द्विदण्डं वा । षड्भागमायामा |
| ,, | ११ | गिकौ द्वौ | ,, | १७ | तद्वत् | १२४ | ४ | गिकौ समत्तव।रणौ द्वौ |
| ,, | ,, | अन्तराम।णि।हर्म्यं | ,, | ,, | तद्वत् | ,, | ,, | अन्तरम् आणि: । हर्म्यं |
| ५४ | २ | न्तराणीकं | ,, | २६ | तद्वत् | १२५ | ७ | न्तराणिकं |

## APPENDIX No. I—(*continued*).

| पृष्ठम्. | पङ्क्तिः. | Mysore edition. | पृष्ठम्. | पङ्क्तिः. | Lahore edition. | पृष्ठम्. | पङ्क्तिः. | Trivandrum edition. |
|---|---|---|---|---|---|---|---|---|
| ५४ | ८ | योऽवधिः | | | ... | १२६ | ६ | यो विधिः |
| ५५ | १८ | प्रवहणी | ३४ | ३ | तद्वत | १२९ | ४ | प्रवहणिक |
| ५६ | ५ | वर्णोत्तराणाम् | ,, | ९ | तद्वत | १३० | १ | वर्णोत्तमानाम् |
| ५७ | ,, | पदे चैतान् | ,, | २० | तद्वत | १३१ | ५ | पदस्य.न्ते |
| ५८ | २ | पार्श्वमूलं | | | .... | १३२ | ,, | पार्श्व मूलं |
| ,, | ४ | ताविधानं | ३५ | २ | तद्वत | ,, | ६ | तापिधानं |
| ,, | ५ | सवप्रग्रीव | ,, | ३ | तद्वत | ,, | ७ | सप्रग्रीव |
| ,, | ९ | म्भावसार | | | ... | १३३ | १ | म्भापसार |
| ,, | ११ | मवसार | | | .. | ,, | ४ | मपसार |
| ,, | १४ | रक्षास्वादैवपूजनवृत्ताः | ,, | १० | रक्षास्था दैवपूजनयुक्ताः | ,, | ६ | रक्षाः स्वदैवपूजनयुक्ताः |
| ५९ | ४ | पणादिचतु | ,, | १८ | तद्वत् | १३४ | १० | पणाद्विपणचतु |
| ६० | १५ | पुरमहानसं | | | ... | १३८ | १ | पुरं महानसं |
| ६१ | २ | पिण्ड | ३६ | १९ | तद्वत | १३९ | ३ | पिण्डः |
| ,, | ११ | प्रसृत | | | ... | १४० | २ | प्रस्मृत |
| ,, | १३ | प्रत्ययः | ,, | २६ | तद्वत् | ,, | ४ | प्रत्यायः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ६२ | १२ | सङ्ख्यां प्रचार | ३७ | ११ | तद्वत | १४२ | ,, | सङ्ख्याप्रचार |
| ,, | १४ | मानं।न्मानान।मान | ,, | १३ | म।नो।न्मानावमान | १४४ | १ | मानोन्मान |
| ,, | १५ | सङ्घातानां | ,, | १४ | तद्वत् | ,, | २ | सङ्घानां |
| ,, | १७ | लाभनिर्देशां।त्पातिक | ,, | १६ | लाभं ।नेर्देशोत्पातिक | ,, | ३ | लाभं ।नेर्देशौत्पादिक |
| ,, | ,, | मित्रमित्रा | | | ... | ,, | ४ | मित्रामित्रा |
| ६३ | ४ | व्ययमुपहत्य र।जा | ,, | २१ | तद्वत | १४५ | ३ | यमुपहत्य न राजा |
| ,, | १४ | भावाश्रया | | | ... | १४६ | ५ | भाप।श्रया |
| ६४ | ३ | मेकत्रसम्भा | ३८ | ८ | तद्वत | १४७ | ४ | मेकत्रासम्भा |
| ,, | ५ | हावयेत् | | | ... | ,, | ६ | हापयेत |
| ,, | १० | विषममन्त्र: | ,, | १४ | तद्वत | १४८ | ४ | विपममात्र: |
| ,, | १५ | विधातक | ,, | २२ | तद्वत | १५० | १ | निधातृक |
| ६५ | १ | ज्ञानिव | ,, | २४ | तद्वत | ,, | ३ | ज्ञां निव |
| ,, | ३ | लिहतो | ,, | २६ | तद्वत | ,, | ५ | लिखनो |
| ६६ | ,, | प्रयोग: पप। | ३९ | १४ | प्रयं।गा: प्रयोग: पण्य | १५३ | १ | प्रयं।ग: प्रयोग: । पण्य- |
| ,, | १२ | निबन्धं | | | ... | १५४ | ,, | निबद्धं |
| ६७ | १० | मन्त्रिवे | ४० | १२ | तद्वत | १५५ | ,, | मन्त्रिमन्त्रिवे |
| ,, | १२ | चापघोप | ,, | १४ | तद्वत | ,, | ३ | चापघोप |
| ६९ | ,, | सन्त्रिमन्त्रि | | | ... | १६३ | ९ | सत्रं। मात्रे |
| ,, | १४ | यश्चापर | | | .... | १६४ | १ | यश्चास्य एर |
| ७१ | ३ | देशैश्च वंश | | | ... | १६८ | ,, | देशैश्चर्यवंर: |

| पृष्ठम्. | पङ्क्तिः. | Mysore edition. | पृष्ठम्. | पङ्क्तिः. | Lahore edition. | पृष्ठम्. | पङ्क्तिः. | Trivandrum edition. |
|---|---|---|---|---|---|---|---|---|
| ७१ | १५ | दृष्टान्त्यै | | | ... | १६९ | ६ | दृष्टान्तं |
| ,, | १६ | श्रान्तपदेति | | | ... | ,, | ७ | श्रान्तपदतेति |
| ७२ | ३ | विशेषिता: | | | ... | १७० | ,, | विशेषकाः |
| ,, | २१ | मम द्रव्यं | ४३ | २२ | यन्मम द्रव्यं | १७१ | ९ | मम यद् द्रव्यं |
| ७४ | ५ | कारै।पथिकार्थ | | | ... | १७५ | ५ | कारौ पथिकार्थं |
| ७५ | १७ | शुक्तिः शङ्खः | ४५ | १९ | तद्वत् | १८० | १ | शङ्खः शुक्तिः |
| ७६ | २ | सिक्तकं | ,, | २१ | तद्वत् | ,, | ३ | सिक्थकं |
| ,, | ५ | प्रकाण्डमत्र | ,, | २३ | तद्वत् | ,, | ६ | प्रकाण्डकमत्र |
| ,, | ७ | च्छन्दः । चंतु | ,, | २५ | तद्वत् | १८१ | ३ | च्छन्दः । शतं दंवच्छन्दः । चतु |
| ७७ | २ | मध्य: शीत | ४६ | ११ | तद्वत् | १८३ | ५ | मध्यः । शुद्धस्फटिकः मूलाटवर्णः शीत- |
| ,, | ३ | रागसंस्थान | ,, | १२ | तद्वत् | १८४ | १ | रागः संस्थान |
| ,, | ७ | लोहितकोऽमृतांशुको | ,, | १५ | तद्वत् | १८५ | ,, | लोहिताक्षो मृगाश्मको |
| ,, | १२ | कांश्मक[कान्तीर]रा | ,, | १९ | काश्मीररा | ,, | ६ | कास्तीररा |
| ,, | १७ | स्थूलं गुरु | ,, | २२ | तद्वत् | १८६ | ४ | स्थूलं स्निग्धं गुरु |

